# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

श्रीकुबेरनाथशुक्लः, एम० ए०, व्याकरणाचार्यः

सहसम्पादकः

श्रीव्रजवल्लभद्विवेदो दर्शनाचार्यः

फाल्गुनपूर्णिमा २०१२

दशमे वर्षे, १–४ अङ्काः

## विषय-सूची



### विविधम्



( तृतीयमावरणपृष्ठमवलोकनीयम् )

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

१० वर्षः | फाल्गुनः २०१२ | १-४ अङ्काः

## श्रुतिविमर्शः

### कौषीतकिब्राह्मण आचारविचाराः

अथवा

### कौषीतकिब्राह्मणपर्यालोचनम्

डाक्टरमङ्गलदेवशास्त्री, भूतपूर्वप्रधानाचार्यः, रा० सं० म० काशी।

( पूर्वतोऽनुवृत्तम् )

अग्नाविष्णू वै देवानामन्तभाजौ। ( कौ० ब्रा० १६।८ )

( ५ ) अदितिः

इयं वा अदितिः। ( कौ० ब्रा० ७।६ )

इयं पृथिवी।

प्रतिष्ठा वा अदितिः। ( कौ० ब्रा० १।५ )

( ६ ) आपः

आपो वै सर्वा देवताः। ( कौ० ब्रा० ११।४ )

## ( ७ ) इन्द्रः

इन्द्रो वै देवानामोजिष्ठो बलिष्ठः। ( कौ० ब्रा० ६।१४ )

इन्द्रो वै प्रदाता। स एवास्मै यज्ञं प्रयच्छति। ( कौ० ब्रा० ४।२ )

अस्मै यजमानाय।

इन्द्रो वै मृधां विहन्ता। ( कौ० ब्रा० ४।१ )

मृधां कलहानाम्। ( विनायकः )।

इन्द्रो वै वृत्रहा। स एवैनं पुनर्यज्ञपथमपिपाथयति।
( कौ० ब्रा० ४।३ )

वृत्रहा। मार्गरोधी वृत्रः, तस्य हन्ता। एनं यजमानम्। अपिपाथयति प्रवर्तयति।

न वा इन्द्रादन्यदुत्तरमस्ति। ( कौ० ब्रा० १०।४ )

उत्तरमुत्कृष्टम्।

मध्यस्थो वा इन्द्रः। ( कौ० ब्रा० ५।४ )

मध्यस्थः। उपर्यधश्चेन्द्रलोकादितरेषां लोकानां सत्त्वादिति विनायकः।

सर्वं वा इन्द्रेण जिगीषितम्। ( कौ० ब्रा० २३।४ )

यत्र ह तद्भवः प्रजापतेः प्रेमाणं प्रापुस्तदेनानिन्द्रः सोमपीथेऽन्वाभेजे। ( कौ० ब्रा० १६।१ )

## ( ८ ) इन्द्राग्नी

इन्द्राग्नी वै देवानां मुखम्। ( कौ० ब्रा० ४।१४ )

देवानां मुखम्। देवतानां स्वामित्वेन मुखत्वेन प्रथमत्वात्। ( विनायकः )।

इन्द्राग्नी वै सर्वे देवाः। ( कौ० ब्रा० १२।६ )

प्रतिष्ठे वा इन्द्राग्नी। ( कौ० ब्रा० ३।६ )

वै निश्चितम्। द्वयोर्भूःस्वर्गयोर्लोकयोः प्रतिष्ठे प्रधाने इन्द्राग्नी। ( विनायकः )।

ब्रह्मक्षत्रे वा इन्द्राग्नी। ( कौ० ब्रा० १२।८ )

## ( ९ ) पूषा

असौ वै पूषा योऽसौ तपति। ( कौ० ब्रा० ५।२ )

तस्मादाहुरदन्तकः पूषा इति। ( कौ० ब्रा० ६।१३ )

## ( १० ) प्रजापतिः

अथो प्रजापतिर्वै विश्वजित्। सर्वं वै प्रजापतिर्विश्वजित्।
( कौ० ब्रा० २५।१२ )

अनिरुक्त उ वै प्रजापतिः। ( कौ० ब्रा० २३।२ )

अपरिमित उ वै प्रजापतिः कस्तं मातुमर्हत्। ( कौ० ब्रा० ११।७ )

एक उ वै प्रजापतिः। ( कौ० ब्रा० २६।७ )

को वै प्रजापतिः। ( कौ० ब्रा० २४।५ )

सर्वं प्रातरनुवाकस्तत्सर्वेण सर्वमाप्नोति य एवं वेद।) तदु ह स्माह कौषीतकिः प्रजापतिर्वै प्रातरनुवाकः। अपरिमित उ वै प्रजापतिः। कस्तं मातुमर्हदित्येषा हैव स्थितिः। ( कौ० ब्रा० ११।७ )

प्रजापतिः प्रजातिकामस्तपोऽतप्यत। तस्मात्तप्तात् पञ्चाजायन्ताग्नि· र्वायुरादित्यश्चन्द्रमा उषाः पञ्चमी। ( कौ० ब्रा० ६।१ )

प्रजापतिर्वै कः···। अथो सुखस्यैवैतन्नामधेयं कमिति।
( कौ० ब्रा० ५।४ )

प्रजापतिर्वै वसिष्ठः। प्रजापतावेव तत्सर्वान् कामान् ऋध्नुवन्ति।
( कौ० ब्रा० २५।२ )

प्रजापतिर्वै वसिष्ठः। स तन्ता यज्ञस्य। स पुनस्ततावयातयामा भवति। प्रजापतावेव तत्सर्वान् कामानृध्नुवन्ति। ( कौ० ब्रा० २६।१५ )

तन्ता। तनोतेस्तृचि छान्दस इडभावः। अयातयामा। यातेर्मनिन्प्रत्ययान्तस्य रूपं यातयामेति। ततो नञ्समासः। ( विनायकः )।

प्रजापतेः प्रत्यत्तं तन्वः · । अन्नादी चान्नपत्नी च। इयं वा अन्नाद्यसावन्नपत्नी। भद्रा च कल्याणी च। भद्रा तत्सोमः कल्याणी तत्पशवः। अनिलया चापभया च। अनिलया तद्वायुः। न ह्येष इलयति। अपभया तन्मृत्युः। न ह्येष बिभेति। अनाप्ता चानाप्या च। इयं वै पृथिव्यनाप्तासौ द्यौरनाप्या। अनाधृष्टा चानाधृष्या च। अयं वा अग्निरनाधृष्टोऽसावादित्योऽनाधृष्यः। अपूर्वा चाभ्रातृव्या च। अपूर्वा तन्मनोऽ

भ्रातृव्या तत्संवत्सरः। ( कौ० ब्रा० २७।४-५ )

इयं कर्मभूमिः। असावन्तरिक्षमन्नपत्नी। तदिति सामान्येन नपुंसकनिर्देशः। पद-संस्कारपक्षे विशेष्यपदार्थलिङ्गानवेक्षणेन नपुंसकलिङ्गं प्रयुज्यते। इयं वै पृथिवी कर्मभूम्यन्या दिव्यभूमिरनाप्ता। असौ द्यौः स्वर्गलोकोऽनाप्या। ( विनायकः )।

सप्तदशो वै प्रजापतिः। ( कौ० ब्रा० ८।२ )

षोडशकलस्य सर्वस्यास्याधिपतिः सप्तदशः प्रजापतिः। ( विनायकः )।

स वै पुरुषः प्रजापतिः पूर्वोऽस्य सर्वस्य। ( कौ० ब्रा० २३।४ )

## ( ११ ) बृहस्पतिः

बृहस्पतिर्वै देवानां ब्रह्मा। ( कौ० ब्रा० ६।१३ )

ब्रह्म वै बृहस्पतिः। ( कौ० ब्रा० ७।१० )

## ( १२ ) ब्रह्मणस्पतिः

ब्रह्म वै ब्रह्मणस्पतिः। ( कौ० ब्रा० ८।५ )

## ( १३ ) भगः

तस्मादाहुर्घोरन्भग इति। ( कौ० ब्रा० ६।१३ )

## ( १४ ) मरुतः

इन्द्रस्य वै मरुतः। ऐन्द्रं पयः। ( कौ० ब्रा० ५।४ )

इन्द्रस्य वै मरुतः क्रीडिनः। ( कौ० ब्रा० ५।५ )

मरुतो ह वै देवविशोऽन्तरिक्षभाजना ईश्वरा यजमानस्य स्वर्गं लोकं यतो यज्ञवैशसं कर्तोः। ( कौ० ब्रा० ७।८ )

वैशसं विशसनम्। कर्तोः कर्तुम्। "ईश्वरे तोसुन्कसुनौ" [ अष्टा० ३।४।१३ ] इति तुमर्थे तोसुन्प्रत्ययः।

## ( १५ ) रुद्रः

अथो रुद्रो वै ज्येष्ठश्च श्रेष्ठश्च देवानाम्। ( कौ० ब्रा० २५।१३ )

अन्तभाग्वा वा एषः। तस्मादेनमन्ततो यजति।

( कौ० ब्रा० ३।६ )

एष रुद्रः ।

एतत्पूगो वै रुद्रः । ( कौ० ब्रा० १६।७ )

एतच्छब्देन मरुतः परामृश्यन्ते । मरुतो वै रुद्रस्य गणनाथस्य स्वसंबन्धी गण इत्यर्थः ।

घोरो वै रुद्रः । ( कौ० ब्रा० १६।७ )

रुद्रो ह वा एष देवानामशान्तः संचितो भवति । (कौ० ब्रा० १९।४)

एषोऽग्निः ।

## ( १६ ) अष्टनामा महान् देवः

(१) भव आपः । (२) शर्वोऽग्निः ।…(३) पशुपतिर्वायुः ।…(४) उग्रो देव ओषधयो वनस्पतयः ।… (५) महान्देव आदित्यः । (६) रुद्रश्चन्द्रमाः । (७) ईशानोऽन्नम् । (८) अशनिरिन्द्रः ।…स एषोऽष्टनामाष्टधा विहितो महान्देवः । ( कौ० ब्रा० ६।२-९ )

अस्मिन्नेव प्रकरणे प्रजापतेरग्निवाय्वादित्यचन्द्रमसामुषसश्चोत्पत्तिः, उषोदर्शनाच्चैतेषां चतुर्णां रेतसो हिरण्मये चमसे ग्रहणम्, ततश्च सहस्राक्षस्य समुत्थानमपि द्रष्टव्यम् । तस्यैव सहस्राक्षस्योपरि निर्दिष्टानि अष्टौ नामानि । तान्येवाष्टौ मूर्त्तय इत्युच्यन्ते महादेवस्य । तथा हि—"प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीश" इति अभिज्ञानशाकुन्तले ।

## ( १७ ) वरुणः

इन्द्र उ वै वरुणः । स उ वै पयोभाजन । ( कौ० ब्रा० ५।४ )

इन्द्र उ वै वरुणः । राजशब्देन व्यवहारेण देवताना प्रभुत्वादिति विनायकः ।

श्रीर्वै वरुणः । ( कौ० ब्रा० १८।९ )

## ( १८ ) विश्वकर्मा

असौ वै विश्वकर्मा योऽसौ तपति । ( कौ० ब्रा० ५।५ )

## ( १९ ) विश्वे देवाः

एते वै सर्वे देवा यद्विश्वे देवाः । ( कौ० ब्रा० ४।१४ )

## ( २० ) वैश्वानरः

असौ वै वैश्वानरो योऽसौ तपति । ( कौ० ब्रा० ४।३ )

## ( २१ ) सूर्यः

असौ वै सूर्यो योऽसौ तपति । ( कौ० ब्रा० ५।८ )

असावेव गृहपतिर्योऽसौ तपति । एष हि गृहाणां पतिः । तस्यर्तव एव गृहाः, एष पतिः । एष उ देवोऽपहतपाप्मा । ( कौ० ब्रा० २७।५ )

## ( २२ ) सविता

असौ वै सविता योऽसौ तपति । ( कौ० ब्रा० ७।६ )

तस्माद् ( सविता ) हिरण्यपाणिरिति स्तुतः । ( कौ० ब्रा० ६।१३)

## ( २३ ) सोमः

असुरा वा अस्यां दिशि देवान् समरुन्धन् येयं प्राच्युदीची । त एतस्यां दिशि सन्तः सोमं राज्यायाभ्यषिञ्चन्त । ते सोमेन राज्ञेभ्यो लोकेभ्योऽसुराननुदन्त । तथो एवैतद्यजमानः सोमेनैव राज्ञेभ्यो लोकेभ्यो द्विषतो भ्रातव्यान् नुदते । ( कौ० ब्रा० ७।१० )

येयं प्राच्युदीची । प्राची सती उदीची । ईशानीत्यर्थः ।

असौ वै सोमो राजा विचक्षणश्चन्द्रमाः । तमेतमपरपक्षं देवा अभिषुण्वन्ति । ( कौ० ब्रा० ४।४ )

विचक्षणः । विचष्ट इति विचक्षणः प्रकाशकः । अपरपक्षं समग्रमपरपक्षमिति भावः । "कालाध्वनोरत्यन्तसयोगे" [ अष्टा० २।३।५ ] इति द्वितीया । अभिषुण्वन्ति । अमृतपानार्थं खण्डयन्ति । एतन्मूला पुराणप्रसिद्धिरपरपक्षे देवैश्चन्द्रामृत पीयत इति । ( विनायकः ) ।

असौ वै सोमो राजा विचक्षणश्चन्द्रमाः । स इमं क्रीतमेव प्रविशति । ( कौ० ब्रा० ७।१० )

इमं वल्लीसोमम् । प्रविशति । अधिष्ठातृत्वेनाधिष्ठेयात्मा भवति ।

यश उ वै सोमो राजा । ( कौ० ब्रा० ९।६ )

यशःसाधनत्वाद् यशः ।

सर्वाणि ह वै भूतानि सोमं राजानं प्रणीयमानमनु प्रच्यवन्ते । ( कौ० ब्रा० ९।५ )

## ( २४ ) सोमः, त्वष्टा, देवानां पत्न्यः, अग्निश्च गृहपतिः

एता ह वै देवता मिथुनानामीशते । ( कौ० ब्रा० ३।९ )

एता देवताः। सोमस्त्वष्टा देवानां पत्न्योऽग्निश्च गृहपतिः। मिथुनानां पत्नीसंभोगानाम्।

**( अथ सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमिति यजति। )**
**एता ह वै देवता मिथुनानामीशते। ( कौ० ब्रा० ३।९ )**

## ( ग ) पितरः

**अन्तभाजो वै पितरः। ( कौ० ब्रा० १६।८ )**

**दैवा वा एते पितरः। ( कौ० ब्रा० ५।६ )**

दैवा देवकर्मान्तःपातिनः।

**धाम वै देवा यज्ञस्याभजन्त, पाथः पितरः। ( कौ० ब्रा० १०।६ )**

धाम मुख्यमिति विनायकः।

**पराञ्च उ वे पितरः। ( कौ० ब्रा० ५।६ )**

पराञ्चो व्यवहिताः। प्रतीची पराची तस्या वर्तन्ते। महाहविषां प्रचारात्पराच्यां पितृयज्ञः। ( विनायकः )।

**परामु वै परावतं पितरो गताः। ( कौ० ब्रा० ५।७ )**

पितरो वा अतिदूरे तिष्ठन्तीत्यर्थः।

**सकृदिव वै पितरः। ( कौ० ब्रा० ५।६ )**

सकृदिव वै पितरो वाञ्छन्ति। देवास्त्वावृत्ति वाञ्छन्ति। ( विनायकः )।

**सकृदिव वै पितर। ···त्रिर्वै देवत्रा। ( कौ० ब्रा० १०।४ )**

देवत्रा। "देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्" ( अष्टा० ५।४।५६ )इति त्राप्रत्ययः।

**स्विष्टकृतो वै पितरः। ( कौ० ब्रा० ५।६ )**

## ( घ ) गन्धर्वाः

**गन्धर्वा ह वा इन्द्रस्य सोमसप्सु प्रत्यायिता गोपायन्ति। त उ ह स्त्रीकामाः। ते हासु मनांसि कुर्वते। तद्यथा प्रमत्तानां यज्ञमाहरेदेवं तद्··· । ( कौ० ब्रा० १२।३ )**

प्रत्यायिता विश्वासिताः।

## ( ङ ) देवासुराः

**असुरा वा आत्मन्नजुहवुरुद्दातेऽनग्नौ। ते पराभवन्ननग्नौ जुह्वतः। अथ देवा इममेव प्राणमग्निमन्तरादधत। ( कौ० ब्रा० ७।३ )**

**स्वर्भानुर्हासुर आदित्यं तमसाविध्यत्। ( कौ० ब्रा० २४।३ )**

## ( च ) रक्षांसि

**असृग्भाजनानि ह वै रक्षांसि भवन्ति। ( कौ० ब्रा० १०।४ )**

**तद्ध स्म वै पुरा यज्ञमुहो रक्षांसि तीर्थेष्वपो गोपायन्ति। तद्ये के चापोऽच्छ जग्मुस्तत एव तान् सर्वान् जघ्नुः। तत एतत्कवषः सूक्तमपश्यत् पञ्चदशर्चम्—"प्र देवत्रा ब्रह्मणे गातुरेतु" [ ऋग्० १०।३०।१ ] इति। तदन्वब्रवीत्। तेन यज्ञमुहो रक्षांसि तीर्थेभ्योऽपाहन्। ( कौ० ब्रा० १२।१ )**

यज्ञं मुह्यन्तीति यज्ञमुहः। तेन अनुवचनेन अपाहन्। स कवषः।

## ( छ ) स्वर्गादिलोकाः

**अस्ति वै चतुर्थो देवलोक आपः। ( कौ० ब्रा० १८।२ )**

पृथिव्यन्तरिक्षद्युलोकापेक्षया चतुर्थो देवलोक आप इत्याख्यको वर्तत इति भावः।

**उदङ् हि जीवलोकः। ( कौ० ब्रा० १८।१४ )**

**ऋक्संमिता वा इमे लोकाः। अयं लोकः पूर्वोऽर्धर्चोऽसौ लोक उत्तरः। अथ यदर्धर्चावन्तरेण तदिदमन्तरिक्षम्। ( कौ० ब्रा० ११।१ )**

**तस्माद्धीमौ लोकौ सह सन्तौ नानेव। ( कौ० ब्रा० २।१ )**

नानेव। पृथगिव।

**देवलोको वा इन्द्रः, पितृलोको यमः। ( कौ० ब्रा० १६।८ )**

**देवलोको वा आदित्यः पितृलोकः पितरो देवलोकमेव तत्पितृलोकादभ्युत्क्रामन्ति। ( कौ० ब्रा० ५।७ )**

**त्रयो वा इमे लोकाः। ( कौ० ब्रा० १।१ )**

भूर्भुवःस्वराख्याः। ( विनायकः )।

**द्वादशो ह वा अन्तरुष्याः स्वर्गो लोकः। ( कौ० ब्रा० ८।९ )**

द्वादश उ ह—इत्येवं पदच्छेदः। अन्तरुष्या अन्तर्वासाः। यात्रायां विश्रान्तिस्थानानीति यावत्। "स्वर्गं ह वा एते लोकमभिप्रयन्ति य उपसद उपयन्ति" इत्येवमुपसत्प्रसङ्गेन प्रतिपादितस्वर्गविषय एतत्कथनमिति विज्ञेयम्।

**प्रतिष्ठे वै द्यावापृथिवी। ( कौ० ब्रा० ३।८ )**

द्यौश्च पृथिवी च सर्वलोकाना प्रतिष्ठा।

**स्वर्गो वै लोकः स्वरसामः। ( कौ० ब्रा० १२।५ )**

स्वरसामः। स्वरं गीयमानं साम यत्र प्रदेशे स स्वरसामः स्वर्गो लोकः। ( विनायकः )।

## १—अग्न्यादिपदार्थविज्ञानम्

अग्न्यादयो ह्याधिभौतिकदृष्ट्याऽधिदैविकदृष्ट्या चेत्येवं द्विधा वर्णयितुं शक्यन्ते। आधिदैविकदृष्ट्या तावत्तेषां वर्णनमुपरिष्टान्निर्दिष्टम्। आधिभौतिकदृष्ट्या तु यत्तेषामग्न्यादीनां वर्णनं तदिह प्रदर्श्यते। अस्मिन् हि वर्णनेऽग्न्यादीनां विषये न केवलं केचिदत्युपयोगिनो विचारा एव, किन्तु क्वचित् क्वचिद् गभीरा वैज्ञानिकाः सिद्धान्ता अपि स्पष्टतस्तात्पर्यतो वा प्रतिपाद्यन्त इत्यतीव महत्त्वमस्य प्रकरणस्य।

अग्निर्वा अन्नानां शमयिता, अग्निर्वै रक्षसामपहन्ता, अग्नेः शिवादिरूपेण विविधतनूनां वर्णनम्, स वा एष आदित्योऽपः प्रविश्य वरुणो भवति, सविता वै प्रसविता, आपोऽन्नम्, भेषजमापः, प्राणोऽग्निः, देवचक्रं वा एतत्परिप्लवं यत्संवत्सरः, वसन्ते वा इदं सर्वं समिध्यते, अहोरात्रे वा अग्नीषोमौ, ऊर्ग्वा अन्नाद्यमुदुम्बरः—इत्यादिवर्णनानामत्युपयोगित्वं नैव युक्तिवादानपेक्षते। तथा हि—

### अग्निः

**अग्निर्वा अन्नानां शमयिता। ( कौ० ब्रा० ६।१४ )**

जठराग्निरन्नं जरयति।

**अग्निर्वै मृत्युः। ( कौ० ब्रा० १३।३ )**

**अग्निर्वै रक्षसामपहन्ता। ( कौ० ब्रा० ८।४ )**

**अग्निर्वै वनस्पतिः। स वै देवेभ्यो हविः श्रपयति। ( कौ० ब्रा० १०।६ )**

**( ते देवाः ) तस्याप्सु पवमानामदधुः। वायौ पावकाम्। आदित्ये शुचिम्। अथ यैवास्य शिवा शग्म्या यज्ञिया तनूरासीत् तयेह मनुष्येभ्योऽतपत्। एता वा अग्नेस्तन्वः। ( कौ० ब्रा० १।१ )**

तस्याग्नेः। शिवा सुखकारिणी। शग्म्या सोढुं शक्या। यज्ञिया यज्ञार्हा। (विनायकः)।

**त्रिवृद्वा अग्निः। अङ्गारा अर्चिर्धूम इति। ( कौ० ब्रा० २८।५ )**

त्रिवृत् त्रिरावृत्तः।

**अस्मिन्वै लोक उभये देवमनुष्या आसुः। ते देवाः स्वर्गं लोकं यन्तोऽग्निमूचुस्त्वं नोऽस्य लोकस्याध्यक्ष एधीति। तानग्निरुवाचाथ यद्वोऽहं घोरसंस्पर्शतमोऽस्मि, अनपचायितारो मनुष्याः, कथं वस्तद्भविष्यति यन्मनु-**

"प्रार्थनायां तदेव पुनरुक्तभूतं मा वृथा आवर्तय। अन्ये कुर्वन्ति मन्यन्ते च-यदि बहु उच्यते, ईश्वरो बाढं शृणुयादिति। तथा मा भूयाः। किं त्वया इष्यत इति, त्वत्प्रार्थनातः पूर्वमेव स पिता ते जानाति।" माथ्यू, ६. ७, ८.

क्रैस्तवाचार्यः कश्चित् 'आर्चेञ्जल्'-नामकात् स्थानात् 'सोलोवेट्स्क्'-नामकं मठं नौमार्गेण जगाम। तेन सह तस्यामेव महानावि तत्रत्यानालयान् द्रष्टुं बहवो यात्रिकाश्च बभूवुः। यात्रा निष्प्रत्यूहा बभूव, अनुकूलो वातः, शीतोष्णस्थितिश्च सौम्यैव। यात्रिका नाव उपरितले शयानाः, भुञ्जानाः, सङ्घशो मिथः संभाषमाणाश्च आसन्। स आचार्योऽपि तदेव उपरितलमाजगाम। इतस्ततस्सञ्चरमाणेन तेन पुरतो नौमुखे तिष्ठन्तः केचन दृष्टाः, धीवरः कश्चित् समुद्रं निर्दिश्य तेभ्यः किमपि कथयन्नासीत्। सञ्चारं हित्वा स आचार्यः यस्यां दिशि धीवरः किमपि निर्दिशन्नासीत् तामेव न्यरूपयत्। न किमपि तत्र द्रष्टुं शशाक, केवलं सूर्यातपे समुद्र उज्ज्वलः प्रकाशते स्म। श्रवणार्थं निकटीभूते आचार्ये, धीवरस्तं निरीक्ष्य स्वशिरस्त्राणमपहाय, तूष्णीं बभूव। इतरे च तत्रत्याः तथैव उद्धृतशिरस्त्राणाः नेमुः।

आचार्य आह - 'सुहृदः! मास्तु प्रक्षोभः ममागमनात्; अनेन साधुना उच्यमानं किमिति शुश्रूषुरहमागतः' इति।

तेषु इतरेभ्यः प्रगल्भतरः कश्चिद् वृत्त्या वणिक् प्रत्युवाच - 'मुनीनधिकृत्य स धीवरः कथयन्नासीद्' इति।

नौपार्श्वमुपसृत्य तत्र पेटिकोपरि उपविश्य आचार्यः पप्रच्छ - 'कान् मुनीनधिकृत्य? ताननन्तरा श्रोतुमिच्छामि, कथयत; युष्माभिस्तत्र जले निर्दिष्टं वस्तु किम्?' इति।

ईषद्दक्षिणे किमपि स्थानं निर्दिशन् स वणिक् प्रत्युवाच - 'पुरतस्तत्र प्रतनुं किमपि द्वीपं द्रष्टुं शक्यमेव ते; तत्रैव द्वीपे आत्मविमुक्तये ते मुनयः प्रतिवसन्ति' इति।

एतमु ह विशन्तं जगदनु सर्वं विशति। ( कौ० ब्रा० ८।७ )

एतम्। आदित्यम्।

शतयोजने ह वा एष इतस्तपति। ( कौ० ब्रा० ८।३ )

एष आदित्यः।

शतयोजने ह वा एष इतस्तपति। अथ यैकशततमी स यजमानलोकः। तमेतमात्मानं यजमानोऽभि संभवति। यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद् ब्रह्म। तदत्रैव यजमानः सर्वासां देवतानां सलोकतां सायुज्यमाप्नोति। ( कौ० ब्रा० ८।३ )

एष आदित्यः। यजमानलोकः सूर्यादुपरि वर्तते। अत्रैव स्थाने।

समिद्धमिव वा एतदहरमुनादित्येन भवति। ( कौ० ब्रा० ८।८ )

सविता वै प्रसवानामीशे। ( कौ० ब्रा० ५।२ )

सविता वै प्रसविता। ( कौ० ब्रा० ६।१४ )

सवितृप्रसूतं वा इदमन्नमद्यते। ( कौ० ब्रा० १२।८ )

सवितृप्रसूतस्य ह वै न काचन रिष्टिर्भवति। ( कौ० ब्रा० ८।१ )

रिष्टिर्हिंसा।

## सूर्यः

समुद्राद् ध्येषोऽद्भ्य उदेति। ( कौ० ब्रा० २५।१ )

एष सूर्यः।

स वै माघस्यामावास्यायामुपवसत्युदङ्ङावर्त्स्यन्…। स षण्मासानुदङ्ङेति।… स षण्मासानुदङ्ङित्वा तिष्ठते दक्षिणावर्त्स्यन्।…स षण्मासान् दक्षिणैति।… स षण्मासान् दक्षिणेत्वा तिष्ठत उदङ्ङावर्त्स्यन्। …तदुतैषापि यज्ञगाथा गीयते—

अहोरात्राणि विदधद् ऊर्णावा इव धीर्यः[1]।
षण्मासो दक्षिणा नित्यः षड्डुदङ्ङेति सूर्यः॥ इति।

षड् ध्येष उदङ् मासानेति षड् दक्षिणा। तद्वै न तस्मिन् काले दीक्षेरन्, अनागतं सस्यं भवति, दहरकाण्यहानि भवन्ति, संवेपमाना

१. 'जूर्यः' इति पाठान्तरम्।

अवभृथादुदायन्ति। तस्मादत्र न दीक्षेरन्। चैत्रस्यामावास्याया एकाह उपरिष्टाद् दीक्षेरन्, आगतं सस्यं भवति, महान्त्यहानि भवन्ति, असंवेपमाना अवभृथादुदायन्ति। तस्मादेतत् स्थितम्। ( कौ० ब्रा० १६।३ )

स संवत्सरात्मा सूर्यः। तिष्ठते नाग्रे चरति। प्रकाशने तिष्ठत इत्यात्मनेपदम् ( विनायकः )। नित्यः सदावर्ती सन्। मास इति द्वितीयाबहुवचनम्।

"ऊर्णावाः कीटो जूर्यो लाला इव। ऊर्णावा इति क्विबन्तम्। जूरी। ज्या वयोहानौ। या प्रापणे। संपदादिभ्यः क्विबिति कर्मणि क्विप् जूर्य इति। या यन्त इति। जुरश्च याश्चेत्युद्गच्छन्त्यो निर्गच्छन्त्यो लालाः। ता यथा कीटो विदधाति तद्वत्सूर्योऽहोरात्राणि प्रकटयन् संहरंश्च विदधातीत्यर्थः।" (विनायकः)। धीर्य इति पाठे तु धीर्यश्चतुरः। दहरकाणि अल्पानि। तद्वै न तस्मिन्काले दीक्षेरन्निति। तैषस्यामावास्याया एकाह उपरिष्टाद्दीक्षेरन् माघस्य वेति कालद्वयम् (पूर्वम्) उक्तम्। तन्निषेधमाहेति विनायकभाष्ये।

## आपः

अद्भिर्हीदं सर्वमनुस्तब्धम्। उभयतो ह्यमुमादित्यमापोऽवस्ताच्चोपरिष्टाच्च। तदेतदृचाभ्युदितम्—या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः। ( ऋग्० ३।२२।३ ) (कौ० ब्रा० २४।४-५)

आपस्तपोऽतप्यन्त। तास्तपस्तप्त्वा गर्भमदधत। तत एष आदित्योऽजायत षष्ठे मासि।...स षण्मासानुदङ्ङेति षडावृत्तान्।...अन्तरेणो ह वा एतमशनाया च पुनर्मृत्युश्च (कौ० ब्रा० २५।१)

आवृत्तान् विपरीतान् मासान् दक्षिणत एतीति भावः। एतं सूर्यम्। अन्तरेण विना।

आपोऽक्षितिर्या इमा एषु लोकेषु याश्चेमा अध्यात्मम्। (कौ०ब्रा०७।४)

आपोऽन्नम्। (कौ० ब्रा० १२।३)

आपो वा अम्बयः। ( कौ० ब्रा० १२।२ )

अम्बयो मातरः।

आपो वै धेनवः। आपो हीदं सर्वं हिन्वन्ति। ( कौ० ब्रा० १२।१ )

आपो वै मरुतः। अन्नमापः। ( कौ० ब्रा० १२।८ )

आपो वै मरुत इति वृष्टिहेतुत्वात्। अन्नमाप इति अद्भिर्जन्यत्वात्। ( विनायकः )।

ऊर्ग् वा आपो रसः।...अमृतत्वं वा आपः। ( कौ० ब्रा० १२।१ )

यज्ञो वा आपः। तद्यदप उच्छ्रयन्ति यज्ञमेव तदुच्छ्रयन्ति। अथो ऊर्वा आपो रसः।...अथो अमृतत्वं वा आपः। ( कौ० ब्रा० १२।१ )

शान्तिर्वै भेषजमापः। ( कौ० ब्रा० ३।६ )

## इन्द्रः

क्षत्रं वा इन्द्रः। ( कौ० ब्रा० १२।८ )

## चन्द्रमाः

उत्तरामु ह वै समुद्रो विजयते सोममनु दैवतम्। एतद्वै देवसत्यं यच्चन्द्रमाः। ( कौ० ब्रा० ३।१)

उत्तरामिति "कालाध्वनोरत्यन्तसंयोगे" [ अष्टा० २।३।५ ] इति द्वितीया। उत्तरस्या सोमं दैवतमनु समुद्रो विजयते। सोमसमात ( ? ) लक्ष्यीकृत्य तरलितो लोकैर्दृश्यते। एतद्वै देवाना सत्यं यच्चन्द्रमाः। यः समुद्रेणातिसगतो निश्चितः। ( विनायकः )।

चन्द्रमा वै सोमः। अनिरुक्त इव वै चन्द्रमाः। ( कौ० ब्रा० १६।५ )

## पृथिव्यादिलोकाः

अदो वै ब्रध्नस्य विष्टपं यत्रासौ तपति। ( कौ० ब्रा० १७।३ )

अयं वै लोकोऽधरोष्ठोऽसौ लोक उत्तरोष्ठोऽथ यदोष्ठावन्तरेण तदिदमन्तरिक्षम्। तद्यत्प्राश्नाति, इमानेव तल्लोकान् अनु संतन्वन् प्रीणाति। ( कौ० ब्रा० ३।७ )

संतन्वन्। सातत्येनेति भावः।

इयं वै क्षेत्रं पृथिवी। अस्यामदीनायामन्ततः प्रतिष्ठास्यामः। ( कौ० ब्रा० ३०।११)

इयं वै सार्पराज्ञी। इयं हि सर्पतो राज्ञी। ( कौ० ब्रा० २७।४ )

इयं पृथिवी सार्पराज्ञी। यत इयं सर्पतः प्राणिजातस्य राज्ञी। पृथिव्या सर्पन्तीति सर्पणमेतदधीनम्।

द्यावापृथिवी वै सस्यस्य साधयित्र्यौ। प्रतिष्ठा पृथिवी। ओद्मनासौ ( कौ० ब्रा० ४।१४ )

ओद्मना वर्षावारिणेति यावत्। असौ द्यौः।

पृथिवी वा अन्नानां शमयित्री। ( कौ० ब्रा० ६।१४ )

पृथिव्यां खातगर्ते क्षितं शान्तमन्नं भवतीति विनायकः।

अनारम्भणं वा इदमन्तरिक्षमप्रतिष्ठानम् । ( कौ० ब्रा० २६।५ )

विवृतमिव हीदमन्तरिक्षम् । ( कौ० ब्रा० २०।३ )

## प्राणमहिमा

अनन्तर्हिता उ हेमे प्राणाः । ( कौ० ब्रा० ३०।८ )

इमे प्राणा आत्मनानन्तर्हिताः । आत्मानमन्तरेण न भवन्त्येव । ( विनायकः ) ।

अमृतं वै प्राणः । ( कौ० ब्रा० ११।४ )

एवमेवैताः सर्वा देवताः प्राण एव प्रतिष्ठिताः । ( कौ० ब्रा० १७।७ )

एताः शरीरस्याभ्यन्तरा देवताः ।

गायत्र उ वै प्राणः । ( कौ० ब्रा० ८।५ )

शरीरे प्रथमः प्राणः, छन्दःसु प्रथमा गायत्रीति साम्यादिति विनायकः ।

तस्माद्धीमं प्राणं सर्वे प्राणा अनुप्राणन्ति । ( कौ० ब्रा० १५।३ )

तस्माद्धीमे प्राणा विष्वञ्चोऽवाञ्चोऽनु निर्वाञ्चि । ( कौ० ब्रा० १७।२ )

"हि निश्चितम् । तस्मादिमे प्राणा विष्वञ्चः शरीरे सर्वतश्चारिणः सन्तो निर्वाञ्चि नीचानि प्राणापेक्षया त्वगान्तःशरीरवर्त्तित्वाद्बहिर्भूतानीन्द्रियाणि अनु अवाञ्चः पश्चाल्लग्ना भवन्ति । अवोपसर्गस्याकारलोपान्निर्वाञ्चीति रूपम्" इति विनायकभाष्यम् । मूले "विष्वञ्चो वान्तो न निर्वान्ति" इत्यपि पाठान्तरम् ।

तस्मद्धीमौ प्राणापानौ सह सन्तौ नानेव । ( कौ० ब्रा० १२।४ )

दशेमे प्राणाः । ( कौ० ब्रा० २६।८ )

न वा अन्तरेणात्मानं प्राणाः ख्यायन्ते, न प्राणानन्तरेणात्मा । नो एतन्नाना । ( कौ० ब्रा० २५।१२ )

नो एतन्नाना । एतदात्मप्राणयोर्युग्मं नाना भिन्नं न विद्यते । वस्तुतोऽभिन्न-मेवैतदिति भावः ।

नवेमे प्राणाः । ( कौ० ब्रा० ७।१० )

पुंसो नवसु द्वारेषु मुखनासिकाचक्षुःश्रोत्रपायूपस्थेषु नव प्राणा इति भावः ।

पूर्वार्ध्यो ह्येष एषां प्राणानामभिधानतर इव । अभित इतरौ ।...... अभित इव हीदं चक्षुश्च श्रोत्रं च तानवगृह्यास्ते । ( कौ० ब्रा० १३।५ )

पूर्वाध्यों मुख्यः। एष मुख्यप्राणः। एषा प्राणानाम्। प्राणचक्षुःश्रोत्राणाम्। अभिधानतरः। विशेषतोऽभिमुखस्थित्या युक्तः।

**प्राणा वा अवकाशाः। ( कौ० ब्रा० ८।६ )**

अवकाशा अवकाशसंचारिणः। ( विनायकः )।

**प्राणा वै छन्दांसि।...इमे प्राणा विष्वञ्चोऽवाञ्चोऽनु निर्वाञ्चि। ( कौ० ब्रा० ७।६ )**

विष्वञ्चः। शरीरे सर्वतश्चारिणः। अवाञ्चोऽनु निर्वाञ्चि।

**प्राणोऽग्निः। ( कौ० ब्रा० ८।१ )**

**प्राणो वै वायुः। ( कौ० ब्रा० ५।८ )**

**प्राणो वै हरिः स हि हरति। ( कौ० ब्रा० १७।१ )**

हरति। मृत्युमिति शेषः।

**प्रादेशमात्रं हीम आत्मनोऽभि प्राणाः। ( कौ० ब्रा० २।२ )**

प्रादेशमात्रमात्मनोऽभि संमुखा इमे प्राणाः। ( विनायकः )।

**मध्ये ह्ययं प्राणः। ( कौ० ब्रा० ७।४ )**

**युक्ता इव हीमे प्राणाः। ( कौ० ब्रा० १३।५ )**

**वाग्वा इन्द्रः, प्राणो वायुः। चक्षुर्मैत्रावरुणः, श्रोत्रमाश्विनः। (कौ० ब्रा० १३।५)**

**वायुर्वै प्राणः। ( कौ० ब्रा० ८।४ )**

**व्यतिषक्ता इव वा इमे प्राणा आत्मानं भुञ्जन्तीति। ( कौ० ब्रा० १।५ )**

व्यतिषक्ताः संकीर्णाः सन्तः। आत्मानं शरीरम्। भुञ्जन्ति पालयन्ति।

**संतता इव हीमे प्राणाः। ( कौ० ब्रा० ८।३ )**

**समाना हीमे प्राणापानाः। ( कौ० ब्रा० १०।३ )**

**समानो ह्ययं प्राणः। ( कौ० ब्रा० १३।२ )**

**स वा अयं त्रेधा विहितः प्राणः—प्राणोऽपानो व्यान इति। (कौ० ब्रा० १३।६)**

## मरुतः

**अप्सु वै मरुतः शिताः। ( कौ० ब्रा० ५।४ )**

शिता अपृथगन्तर्गता इति विनायकः।

**घोरा वै मरुतः स्वतवसः। ( कौ० ब्रा० ५।२ )**

स्वं तवो बलं येषा ते स्वतवसः। स्वीयबलवत्त्वान्मरुतो घोराः। परेषां भयंकराः। "तव् वृद्धौ सौत्रो धातुरित्येतस्माद्धातोरसुनि प्रत्यय औणादिके सकारान्तं तव इति रूपम्। तस्मिन्नेवार्थे तस्मादेव धातोर्नपुंसके शतृप्रत्ययान्तं तवदिति रूपम्।" इति विनायकः।

## वरुणः

क्षत्रं वै वरुणः। ( कौ० ब्रा० ७।१० )

वरुणो राजेति श्रुतेः।

स वा एषोऽपः प्रविश्य वरुणो भवति। ( कौ० ब्रा० १८।९ )

एष सूर्यः। अस्तानन्तरं वरुणो भवति।

## वायुः

एतद्वै प्रजापतेः प्रत्यक्षं रूपं यद्वायुः। ( कौ० ब्रा० १९।२ )

वायुर्वा अग्नेः स्वो महिमा। तेन हि संपाद्य महिमानं गच्छति। ( कौ० ब्रा० ३।३ )

संपाद्य। स्वं स्वमर्थं संपाद्य। ( विनायकः )।

## शुनासीरौ

शान्तिर्वै भेषजं शुनासीरौ। ( कौ० ब्रा० ५।८ )

## संवत्सरः

एतावान् वै संवत्सरो यदेष त्रयोदशो मासः। तदत्रैव सर्वः संवत्सर आप्तो भवति। ( कौ० ब्रा० १९।२ )

चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः। ( कौ० ब्रा० १९।८ )

तद्य एवं संवत्सरस्याहानि युञ्जन्ति त एतान् कामानृघ्नुवन्ति ये संवत्सरे। अथ येऽतोऽन्यथा संवत्सरस्याहानि युञ्जन्ति न ते तान् कामानृघ्नुवन्ति ये संवत्सरे। ( कौ० ब्रा० २६।१ )

षळहाना प्रकृतत्वेऽपि संदर्भ एष सामान्येन संवत्सरसाध्यानामुपभोगानामवाप्तिस्तद्गतानामह्ना सदुपयोगनिबन्धनेत्यर्थकत्वेन योजयितुं शक्यते।

त्रीणि वै षष्टिशतानि संवत्सरस्याह्नाम्। ( कौ० ब्रा० ११।७ )

षष्ट्यधिकानि शतानीति शतगतबहुत्वविवक्षया समासः। त्रीणीति शताना विशेषणम्, न विशिष्टस्य षष्ट्यधिकशतरूपस्य। तेन त्रिभ्यः शतेभ्यः षष्टिरधिकेत्यर्थो लभ्यते। (विनायकः)।

देवचक्रं वा एतत्परिप्लवं यत्संवत्सरः। तदमृतत्वम्। तस्मिन्नेतत्षड्नयमन्नाद्यम्—ग्राम्याश्च पशव आरण्याश्च, ओषधयश्च, वनस्पतयश्च, अप्सुचरं च परिप्लवं च। तद्देवाः समारुह्य सर्वाँल्लोकाननु परिप्लवन्ते देवलोकं पितृलोकं जीवलोकमिमम्; अपोदकमग्निलोकम्, ऋतधामानं वायुलोकम्, अपराजितमिन्द्रलोकम्, अधिदिवं वरुणलोकम्, प्रदिवं मृत्युलोकम्, रोचनं ब्रह्मणो लोकम्, नाकं सप्तमं लोकानाम्। ( कौ० ब्रा० २०।१ )

परिप्लवम्। उपर्युपर्यारोहत्। अप्सुचरं च परिप्लवं च। परिप्लवं स्थलचरमिति विनायकः। अपोदकमल्पोदकम्, अपगतोदकं वा। अधिदिवं दिव उपरि। प्रदिवं दिवः प्रकृष्टम्।

द्वादश वै मासाः संवत्सरः।···यस्त्रयोदशो मासः। ( कौ० ब्रा० १।१ )

मुखं वा एतत्संवत्सरस्य यत्फाल्गुनी पौर्णमासी। ( कौ० ब्रा० ४।४ )

मुखं वा एतत्संवत्सरस्य यत्फाल्गुनी पौर्णमासी। मुखमुत्तरे फल्गू पुच्छं पूर्वे। तद्यथा प्रवृत्तस्यान्तौ समेतौ स्यातामेवमेवैतौ संवत्सरस्यान्तौ समेतौ। ( कौ० ब्रा० ५।१ )

प्रवृत्तस्य। प्रकर्षेण वृत्तस्य वर्तुलस्य। तद्यथेत्यादिना प्रवाहानादित्वेन संवत्सरश्चक्रवत् परिवर्तत इत्युक्तमिति विनायकः।

षड्ऋतुः संवत्सर. षड्विधः। ( कौ० ब्रा० १४।१ )

षड्ऋतुः संवत्सरः षड्विधः। द्वे द्यावापृथिवी, द्वे इमे प्रतिष्ठे, षडङ्गोऽयमात्मा षड्विधः। अनु द्वे अहोरात्रे। द्वाविमौ प्राणापानौ। ( कौ० ब्रा० २०।३ )

इमे प्रतिष्ठे। द्यावापृथिवीस्थे अग्न्याधारशक्ती। (विनायकभाष्ये)।

संवत्सरो वै सोमो राजेति ह स्माह कौषीतकिः। सोऽभ्यागच्छन्नृतुभिरेव सहाभ्येतीति। ( कौ० ब्रा० ७।१० )

सप्त वै विंशतिशतानि संवत्सरस्याहोरात्राणाम्। (कौ० ब्रा० ११।७)

विंशत्यधिकानि शतानीति शतगतबहुत्वविवक्षया समासः। सप्तेति शताना विशेष-

णम्। न विंशिष्टस्य विंशत्यधिकशतरूपस्य। तेन सप्तभ्यः शतेभ्यो विंशतिरधिकेत्यर्थो लभ्यते। (विनायकः)।

## ऋतवः

ऋतुर्ऋतुं नानुप्रपद्यते। (कौ० ब्रा० १३।६)

पूर्वसदृश उत्तर ऋतुर्न भवतीति भावः। (विनायकः)।

तद् यद् द्वन्द्वं समस्ता ऋतव आख्यायन्ते ग्रीष्मो वर्षा हेमन्त इति। (कौ० ब्रा० २६।८)

ग्रीष्म इति वसन्तग्रीष्मयोराख्यानम्। वर्षा इति वर्षाशरदोराख्यानम्। हेमन्त इति हेमन्तशिशिरयोराख्यानम्। एवं समस्ता ऋतवो यथाद्वन्द्वमाख्यायन्ते।

तस्माद् द्वन्द्वं समस्ता ऋतव आख्यायन्ते—ग्रीष्मो वर्षा हेमन्त इति। (कौ० ब्रा० १४।५)

ते वै पञ्च भवन्ति। (कौ० ब्रा० ३।४)

ते ऋतवः।

देवाश्वा वै वाजिनः···ऋतवो वै वाजिनः। (कौ० ब्रा० ५।२)

विंशतिशतं वा ऋतोरहानि। (कौ० ब्रा० ११।७)।

विंशत्यधिकं शतं विंशतिशतम्। मध्यमपदलोपी समासः। हेमन्तशिशिरयोः समासेन पञ्चर्तुपक्षस्वीकार एवम्।

षड् वा ऋतवः। (कौ० ब्रा० १।४)

षड् वा ऋतवः। ऋतवः पितरः। (कौ० ब्रा० ५।७)

षड् वा ऋतवः संवत्सरः। (कौ० ब्रा० ३०।१०)

वसन्ते वा इदं सर्वं समिध्यते। (कौ० ब्रा० ३।४)

सर्वं समिध्यते दीप्यते। पत्रपुष्पफलोद्भवादचेतनम्। शीतातपातिशयाभावाच्चेतनं च। (विनायकः)।

ग्रीष्मो हि तन्वं तपति। (कौ० ब्रा० ३।४)

वर्षाभिर्ह्रीडितमन्नाद्यमुत्तिष्ठति। (कौ० ब्रा० ३।४)

वर्षासु वै सर्वे कामाः। (कौ० ब्रा० १।३)

सर्वे कामाः। निहिता इति शेषः।

**शरदि हि बर्हिष्ठा ओषधयो भवन्ति। ( कौ० ब्रा० ३।४ )**

बर्हिष्ठा बृहत्तराः। ( विनायकः )।

**हेमन्ते वा इदं सर्वं स्वाहाकृतम्। ( कौ० ब्रा० ३।४ )**

स्वाहाकृतं हुतं सम्यक्सिद्धं होमयोग्यं भवति। ( विनायकः )।

## अमावास्यादिकालविभागः

**एतज्ज्योतिर्वा अमावास्या। न ह्यत्र चन्द्रो दृश्यते। (कौ० ब्रा० ३।६)**

एतज्ज्योतिः। एष इन्द्रो ज्योतिरमावास्यायामिति भावः।

**पञ्चदश वै पूर्वपक्षापरपक्षयोरहानि। ( कौ० ब्रा० ३।२ )**

**ब्रह्म वै पौर्णमासी। क्षत्रममावास्या। ( कौ० ब्रा० ४।८ )**

ब्रह्म वै पौर्णमासी। द्विजराजप्रधानत्वात्। क्षत्रममावास्या। द्विजराजेन क्षत्रियसूर्यस्योपजीव्यत्वात्। ( विनायकः )।

**अहोरात्रे वा अग्नीषोमौ। ( कौ० ब्रा० १०।३ )**

**उभयतो ह्यमुमादित्यमहोरात्रे पाप्मानं वा यजमान इति ह स्माह। ( कौ० ब्रा० १२।४ )**

अमुमादित्यमुभयतोऽहोरात्रे। तथैव यजमाने पाप्मानमुभयतोऽहोरात्रे। यजमानो यं कञ्चन पाप्मानं करोति तमहनि वा रात्रौ वा करोति।

**बहु रात्र्यामुपाह्रियते। ( कौ० ब्रा० १७।४ )**

बहु गणरूपं यन्नैककं स्वतन्त्रं तद्रात्र्यामुपाह्रियते—इति विनायकभाष्यम्।

**ये वै केचानन्दा अन्ने पाने मिथुने रात्र्या एव ते संतता अव्यवच्छिन्नाः क्रियन्ते। तेषां रात्रिः कारोतरः। ( कौ० ब्रा० २।७ )**

रात्र्याः। रात्र्या एव हेतोः। संतता निरन्तराः। अव्यवच्छिन्ना बहुकालाः। रात्रावन्यव्यापाराभावादन्नादिविषयकानन्दस्यातिशयः प्रतिपाद्यते। कारोतरः। कारे क्रियायामुत्तर उत्कृष्टो हेतुः कारोतरः पृषोदरादित्वात्तलोप इति विनायकः।

**विहृते वा इमे अहोरात्रे अन्योन्यस्मिन्।...विहृते वा इमे द्यावापृथिवी अन्योन्यस्मिन्।...विहृतौ वा इमौ प्राणापानावन्योन्यस्मिन् प्रतितिष्ठतः। ( कौ० ब्रा० २६।२ )**

विहृते। परस्परं पूर्वापरीभावं प्राप्ते।...कदाचिदहः प्रथमं कदाचिद्रात्रिः प्रथमेति व्यवहारात्। एवमग्रेऽपि। (विनायकः)।

समुद्रो ह वा एष सर्वहरो यदहोरात्रे। तस्य हैते गाधे तीर्थे यत्संध्ये।...अथो देवसेना ह वा एषाध्वगा हनिष्यन्ती यदहोरात्रे। तस्या हैते पक्षसी यत्सन्ध्ये।... अथो मृत्योर्ह वा एतौ व्राजबाहू यदहोरात्रे।......अहर्वै शबलः। रात्रिः श्यामः। (कौ० ब्रा० २।६)

समुद्रो ह वा एष सर्वहरो यदहोरात्रे। एष सर्वहरः समुद्रो यदहोरात्रे। गाधे तीर्थे यत्संध्ये। प्रान्तस्य तीर्थत्वात्। अथो इति प्रकारान्तरार्थः। व्राजबाहू प्रसरन्तौ बाहू।

सायं पोषः। (कौ० ब्रा० ५।५)

सायमस्तमिते पुरा तमसः.....स देवयानः केतुः।..... पुरोदयादपहते तमसि.....स देवयानः केतुः। (कौ० ब्रा० २।६)

सौर्यं वा अहराग्नेयी रात्रिः। (कौ० ब्रा० २।१)

## सोमः

एतद्वै परममन्नाद्यं यत्सोमः। परममेवैतदन्नाद्यम्। (कौ० ब्रा० १३।७)

क्षत्रं वै सोमः। (कौ० ब्रा० १२।८)

राज्येऽभिषिक्तत्वात्।

तिरोअह्न्या हि सोमा भवन्ति। (कौ० ब्रा० १८।५)

"तिरोभूतेऽह्नि भवा', द्वितीयदिनभाविनस्तिरोअह्न्याः।" (विनायकभाष्यम्)।

न व्रते सोमो वै दध्यनन्तर्हितो ह्यस्य भक्षो भवति। (कौ० ब्रा० ८।६)

अस्य यजमानस्य।

यदा वा आपश्चौषधयश्च संगच्छन्तेऽथ कृत्स्नः सोमः। (कौ० ब्रा० १८।८)

ओषधिशब्देनात्र शुष्कलीनसोमस्य ग्रहणम्। तथा च "एवमन्तर्लीनः सोमः कृत्स्नः सोमः संपद्यते", "ता आपः शुष्कलीनसोमसंपर्केण सोमतामापादिताः" इति विनायकभाष्यम्।

सोमं क्रीतं दक्षिणाः परिवहन्ति। (कौ० ब्रा० ७।६)

सोमो वै राजौषधीनाम्। (कौ० ब्रा० ४।१२)

## अन्नम्

अत्वरमाण इव हि प्रतिकामिनमन्नाद्यमत्ति। (कौ० ब्रा० १५।३)

प्रतिकामिनम् । रुचि जनयन्तम् । (विनायकः) ।

**अन्नं वै नृम्णम् । (कौ० ब्रा० २७।४)**

अन्नं वै नृम्णमिति । नृणा मान्यं नृम्णम्––इति व्युत्पत्त्या योगरूढोऽयं शब्दः । (विनायकः) ।

**अन्नं वै पूषा । (कौ० ब्रा० १२।८)**

पूषा पुष्णातीति ।

**अन्नं वै सुरूपम् । (कौ० ब्रा० १६।३)**

**अन्नेन वै प्राणाश्चात्मा च संहितः । (कौ० ब्रा० १३।६)**

**उदरसाचेयमु वा अन्नाद्यम् । (कौ० ब्रा० ११।८)**

आचेयं पूरणम् । आचेयेन सह वर्तत इति साचेयम् । पूरकमिति यावत् । उदरस्य पूरकमुदरसाचेयम् ।

**एतद्वा अवरार्ध्यमन्नाद्यं यन्नैषादः ।······वैश्यो वै पुष्यतीव ।···एतद्वै परार्ध्यमन्नाद्यं यत्क्षत्रियः (कौ० ब्रा० २५।१५)**

अवरार्ध्यम् । अवरमार्ध्यं नीचं समृद्धिसाधनम् । श्यामाकादिरूपमन्नाद्यम् । नैषादो निषादसंबन्धः । पुष्यतीव समृद्ध इव सदा भवति । परार्ध्यम् । श्रेष्ठमार्द्ध्यं समृद्धिसाधनम् । यथा शालिमुद्गादिः । (विनायकः) ।

**···एवं वै प्रजापतिर्ब्रह्मणा च क्षत्रेण च क्षत्रेण च ब्रह्मणा चोभयतोऽन्नाद्यं परिगृह्णानोऽवरुन्धान ऐत् । तथो एवैतद्यजमान एवमेव ब्रह्मणा च क्षत्रेण च क्षत्रेण च ब्रह्मणा चोभयतोऽन्नाद्यं परिगृह्णानोऽवरुन्धान एत्यवरुन्धान एति । (कौ० ब्रा० १२।८)**

ब्रह्मक्षत्रसमृद्धयोरिव अन्नाद्यसमृद्धिरप्यपेक्षितेत्याकूतम् ।

**पुष्टिकर्म वा एतद् यद् गृहमेधीयः सायंपोषः । (कौ० ब्रा० ५।५)**

सायंपोषः । पुष्ट्यर्थं द्वितीयभोजनमिति विनायकः ।

**मध्ये वा इदमात्मनोऽन्नं धीयते । (कौ० ब्रा० १५।३)**

**य उ वै के चानन्दा अन्नादेव ते सर्वे जायन्ते । (कौ० ब्रा० २।७)**

**विश्वरूपं वा इदमन्नमद्यते । (कौ० ब्रा० १२।८)**

**श्रीर्विराळन्नाद्यम् । ( कौ० ब्रा० १।१ )**

अन्नाद्यं सर्वे श्रयन्ति विराजते च ( तत् ) । तेन अन्नाद्यं श्रीर्विराट् । (विनायकः) ।

## आज्यम्

आग्नेयमाज्यम्। ( कौ० ब्रा० १।२ )

बहुदेवत्य वै घृतम्। ( कौ० ब्रा० २०।४ )

वज्रो वा आज्यम्, रेतः सोमः। ( कौ० ब्रा० १३।७ )

## उदुम्बरः

ऊर्वा अन्नाद्यमुदुम्बरः। ( कौ० ब्रा० २५।१५ )

## कृष्णाजिनम्

ब्रह्म वै कृष्णाजिनम्। ( कौ० ब्रा० ४।११ )

## दधि

सोमो वै दधि। ( कौ० ब्रा० ८।६ )

## पलाशः

सोमो वै पलाशः। ( कौ० ब्रा० २।२ )

सोमो वै पलाशः। ओषधित्वसाम्यादिति विनायकः।

## पयः

आपो हि पयः। ( कौ० ब्रा० ५।४ )

एष ह वै सर्वासामोषधीनां रसो यत्पयः। ( कौ० ब्रा० २।१ )

## मधुपर्कः

एष ह्यारण्यानां रसः। ( कौ० ब्रा० ४।१२ )

एष मधुपर्कः। मधुसंपृक्तं दधि मधुपर्कः। आरण्याना रसः सारभूतः। (विनायकः)।

## वज्रः

त्रिवृद् वै वज्रः।...एतेन वै देवास्त्रिवृता वज्रेणेभ्यो लोकेभ्योऽसुराननुदन्त। ( कौ० ब्रा० ३।२ )

त्रिवृत्। मुष्टिमध्यमुकुलैर्भागैस्त्रिभिर्वर्तत इति त्रिवृत्। ( विनायकः )।

पञ्चदशो वै वज्रः। ( कौ० ब्रा० ३।२ )।

पञ्चदशः पञ्चदशभागवान्। "अर्शआदिभ्योऽच्" [ अष्टा० ५।२।१२७ ] इत्यच्।... नव मध्ये त्रयस्त्रयो मुष्ट्यग्रमुकुलयोरिति पञ्चदश। (विनायकः)।

## वेदः

वृषा वै वेदः। ( कौ० ब्रा० ३।६ )

वेदः कुशमुष्टिकृतः।

## १०—मनुष्यस्य पश्वादेश्च स्वभावादिवर्णनम्

ऐतरेयब्राह्मण इवात्रापि ब्राह्मणे मनुष्यस्य पश्वादेश्च स्वभावादिवर्णनं यत्र तत्र प्रसङ्ग-मिषेणोपलभ्यते। पुरुषो वै स्वभावत एव पशूनधितिष्ठति, देवैरानन्दानुभवायैवात्मसादृश्येन पुरुषस्य सृष्टिः कृता, पुरुषो वै यज्ञः, पुरुषः खलु शतवीर्यः शतेन्द्रियः, आत्मा वै पञ्चविशः, पयोभाजनो वै वरुणः कुमारः—इत्यादयः प्रेरणाप्रदा गभीरा उपयोगिनश्च विचारा अत्र विषय उपलभ्यन्ते। तथा हि—

### (क) पुरुषः

अधीव वै पशून् पुरुषस्तिष्ठति। ( कौ० ब्रा० ११।६ )

पुरुषो वै पशूनधितिष्ठति।

( य उ वै केचानन्दा अन्नादेव ते सर्वे जायन्ते। ) ते देवा अब्रुवन् कथं न्विमान् वयमानन्दानस्मादृशस्यैव प्रतिगृह्णीयामेति। तेऽपामूर्ध्वं रसमुदौहंस्ता ओषधयश्च वनस्पतयश्च समभवन्। ओषधीनां च वनस्पतीनां चोर्ध्वं रसमुदौहंस्तत्फलमभवत्। फलस्योर्ध्वं रसमुदौहंस्तदन्नमभवत्। अन्नस्योर्ध्वं रसमुदौहंस्तद्रेतोऽभवत्। रेतस ऊर्ध्वं रसमुदौहन् स पुरुषोऽभवत्। सोऽयं पुरुषो यः प्राणिति वापानिति वा।

( कौ० ब्रा० २।७ )

जीवनगतानन्दानामनुभवायैव देवैरात्मसदृशस्य पुरुषस्य सृष्टिः कृतेति, अयमेवार्थो ब्राह्मणशैल्यात्र प्रतिपाद्यते। उदौहन् प्रापयन्। फलस्योर्ध्वं रसमुदौहंस्तदन्नमभवत्। फलं सम्यक् परिणतमन्नमुच्यते। अन्नस्योर्ध्वं रसमुदौहन्। पुरुषेण भुक्तस्यान्नस्योर्ध्वं भ्रुवोरन्तरे नयनम्। तद्रेतोऽभवत्।

पुरुषो वै यज्ञः। तस्य य ऊर्ध्वाः प्राणास्तत्प्रातःसवनम्। आत्मा मध्यन्दिनः। येऽवाञ्चस्तत् तृतीयसवनम्। ( कौ० ब्रा० २५।१२ )

पुरुषो वै यज्ञः। तस्य वागेवाज्यम्।···प्राणः···प्रउगम्।···बाहू मैत्रावरुणश्चाच्छावाकश्च।···इयमेव वेना सेवनी मध्यं ब्राह्मणाच्छंसी।···

आत्मा मध्यंदिनः।...मैत्रावरुणश्चाच्छावाकश्च।...इदमेव शिश्नं मध्यं ब्राह्मणाच्छंसी।...( कौ० ब्रा० २८।६ )

यज्ञः। अत्र सोमयागोऽभिप्रेतः। वेना कामस्थानम्। सेवनी या वास्य मध्यम्। (विनायकः)। ऊरू मैत्रावरुणश्चाच्छावाकश्च। तृतीयसवनगतयोस्तयोर्मध्यान्मध्यन्दिनात्पर-भावित्वात्। इदमेव शिश्नं मध्यं ब्राह्मणाच्छंसी। तृतीयसवनगत एव।

पुरुषो वै यज्ञः। तस्य शिर एव हविर्धाने, मुखमाहवनीयः, उदर सदः, अन्नमुक्थानि, बाहू मार्जालीयश्चाग्नीध्रीयश्च, या इमा अन्तर्देवतास्तेऽन्तःसदसं धिष्ण्याः, प्रतिष्ठा गार्हपत्यव्रतश्रपणाविति। अथापरम्—तस्य मन एव ब्रह्मा, प्राण उद्गाता, अपानः प्रस्तोता, व्यानः प्रतिहर्ता, वाग्घोता, चक्षुरध्वर्युः, प्रजापतिः सदस्यः, आत्मा यजमानः, अङ्गानि होत्राशंसिनः।

( कौ० ब्रा० १७।७ )

उक्थानि शस्त्राणि। अन्तर्देवता इन्द्रियाद्यधिष्ठातारः। गार्हपत्यव्रतश्रपणौ द्वावग्नी। प्रतिष्ठा पादौ। अथापरम्। यज्ञपुरुषस्य बाह्यावयवनिर्वाहं कृत्वाभ्यन्तरनिर्वाह उच्यत इति भावः। तस्य यज्ञपुरुषस्य। अङ्गानि। घ्राणश्रोत्रादीनि परिशिष्टानि, आभ्यन्तराः शरीरावयवा वा।

शतायुर्वै पुरुषः। ( कौ० ब्रा० ११।७ )

शतायुर्वै पुरुषः शतपर्वा शतवीर्यः शतेन्द्रियः। ( कौ० ब्रा० १८।१० )

शतपर्वा प्रतिवर्षं पर्वणा सन्धीना विशेषात्। शतवीर्यः प्रतिवर्षं वीर्यस्य विशेषात्। शतेन्द्रियः प्रतिवर्षं सर्वेषामिन्द्रियाणां विशेषात्। (विनायकः)।

अन्तभाजो वै पत्न्यः। ( कौ० ब्रा० १६।७ )

अशनायतो वा एतद्रूपमभिनत इवोदरेण। ( कौ० ब्रा० १०।१ )

अशनायतो बुभुक्षितस्य।

आचतुरं वै द्वन्द्वं मिथुनं प्रजननं प्रजात्यै। ( कौ० ब्रा० ३।६ )

चत्वार उपायाः प्रजाहेतवः। स्त्रीपुंसयोर्द्वन्द्वम्। मिथुनं संभोगस्तृतीयः। प्रजननं रेतःसेकस्य गर्भाशये विशेषतः करणम्। एभ्यश्चतुर्भ्य आचतुरमित्यव्ययीभावः। "शरत्प्रभृतिभ्योऽच्" [ तु० अष्टा० ५।४।१०७ ]। द्वन्द्वं मिथुनं प्रजननमिति चतुष्टयावधिकं प्रजात्यै। ( विनायकः )।

आत्मा वै पञ्चविंशः। ( कौ० ब्रा० १७।१ )

पञ्चविंशः। पञ्चविंशतिसमुदाय आत्मा। चतुर्विंशतितत्त्वयुत आत्मा। ( विनायक-

भाष्यम् )। तदुक्तमैतरेयारण्यके—"पञ्चविंशः आत्मा पञ्चविंशः प्रजापतिः। दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू। आत्मैव पञ्चविंशः।" [ ऐतरेयारण्यके १।१।४ ]।

आत्मा पुरुष.। मध्यदेहो वा।

उपांशु वै रेतः सिच्यते ( कौ० ब्रा० १।१ )

एतद्वै शिरः समृद्धं यस्मिन् प्राणो वाक् चक्षुः श्रोत्रमिति।

( कौ० ब्रा० ८।६ )

चक्षुर्वै विचक्षणम्। चक्षुषा हि वि पश्यति। ( कौ० ब्रा० ७।३ )

तथा चोक्तमैतरेयब्राह्मणे—"चक्षुर्वै विचक्षणं वि ह्येनेन पश्यतीति। एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः।" इत्यादिसंदर्भस्तत्रैव; ऐतरेयब्राह्मणपर्यालोचने वा द्रष्टव्यः।

( तस्माद् ) अनश्नन्तो गर्भाः प्राणन्ति। ( कौ० ब्रा० २।२ )

( तस्माद् ) विपर्यस्ता गर्भा जायन्ते। ( कौ० ब्रा० ३०।४ )

विपर्यस्ता अधोमुखा उच्चैःपादा इति।

( तस्माद् ) हासां ग्रीवाणां व्यतिषक्तानीव पर्वाणि भवन्ति।

( कौ० ब्रा० ८।६ )

व्यतिषक्तानि अन्योन्यं मिश्राणि। पर्वाणि रेखाविच्छेदाः। ( विनायकः )।

त्रिवृद्वै चक्षुः। शुक्लं कृष्णं लोहितमिति। ( कौ० ब्रा० ३।५ )

त्वष्टा वै रेतः सिक्तं विकरोति। ( कौ० ब्रा० ३।६ )

विकरोति विशिष्टं करोति। गर्भाशये स्थापयति। त्वष्टा गर्भकर्ता। (विनायकः)। यद्वा विकरोति। तत्तद्विशिष्टरूपतामापादयति।

द्वाविव वा अग्रे भवतस्तत उपप्रजायेते। ( कौ० ब्रा० १५।४ )

प्रारम्भे द्वावेव भवतः। ताभ्यां चानन्तरमन्यस्योत्पत्तिरिति भावः।

द्विगुणान्यङ्गानि भवन्ति। ( कौ० ब्रा० २६।८ )

तथा च हस्तौ द्वौ, कर्णौ द्वौ, पादौ द्वौ, नासिके द्वे, अक्षिणी द्वे।

द्वे वै पुरुषः कपाले। ( कौ० ब्रा० ३०।४ )

द्व्यङ्गुले वा इदं मुखस्यान्नं धीयते। ( कौ० ब्रा० २।२ )

न्यूङ्खमानक इव वै प्रथमं चिचरिषुश्चरति। ( कौ० ब्रा० २५।१३ )

जातः प्रथमं चिचरिषुर्न्यूङ्खमानक इव चरति। स्खलद्गत्या चरति। उखि गतौ। गत्यर्था वा चुरादय इति विकल्पितो णिच्। निरुपसर्गः। दीर्घस्तु—"अन्येषामपि दृश्यते" [अष्टा० ६।३।१३७] इति। (विनायकः)।

पयोभाजनो वै तरुणः कुमारः। तद्यथा जाताय स्तनमुपदध्यादेवं तद् ··। यदा वै वर्धतेऽतिस्नो वै तदा। (कौ० ब्रा० १३।२)

मध्ये हीयमात्मनो भिया एव योनिः। (कौ० ब्रा० १६।७)

आत्मनो मध्ये। शरीरस्य मध्यभागे। सुरक्षिते स्थान इति यावत्।

बीव वै स्त्रियै पुमान् गृह्णाति। यद्वेव विगृह्णाति प्रतिष्ठयोस्तद्रूपम्। (कौ० ब्रा० १४।२)

वै यतः पुमान् स्त्रियै विवक्तैक्यरूपेणालिङ्गने गृह्णाति। यदु एव विविक्तैक्यरूपेण गृह्णाति प्रतिष्ठयोस्तद्रूपम्। तथा संलग्नयोर्द्वयोरन्योन्यप्रतिष्ठे भवतः। नैकमपि स्खलति विघ्न-संभवात्। (विनायकः)।

षडङ्गोऽयमात्मा षड्विधः। (कौ० ब्रा० १३।३)

अयमात्मा षडङ्गः। शरीरिणः शरीरे षडङ्गानि मुखं घ्राणं नेत्रे श्रोत्रे हस्तौ पादौ चेति प्रोक्तानि। तथा षड्विधः। शरीरे षडवस्थाः—बाल, पौगण्डः कुमारस्तरुणो वृद्धो दशमीति वैद्यकोक्ताः। (विनायकः)।

## (ख) पशवः

उपनिवर्तमिव वै पशवः सौयवसे रमन्ते। (कौ० ब्रा० ११।५)

उपनिवर्तमिव। निवर्तः पयःप्रभृतीनां संपादनम्। ततोऽव्ययीभावः समासः। समीपे पयःप्रभृति संपादयन्त इव। सुयवसस्य भावः सौयवसम्। तत्र सस्याभिवृद्धिसमये। (विनायकः)।

चतुष्टया वै पशवोऽथो चतुष्पादाः। (कौ० ब्रा० १६।३)

चतुष्टया इत्यस्यैव व्याख्यानं चतुष्पादा इति।

त्रैष्टुभाः पशवः। (कौ० ब्रा० ८।२)।

चतुष्पात्त्वसाम्यादिति विनायकः।

पाङ्क्ताः पशवः। (कौ० ब्रा० २६।१६)

वत्सं वै पशवो वाञ्छन्ति। (कौ० ब्रा० २५।१५)

षड्विंशतिरस्य वङ्क्रय इति। पर्शव उ ह वै वङ्क्रयः। (कौ० ब्रा० १०।४)

अस्य आलभ्यमानस्य पशोः।

अथो गौर्वै सार्पराज्ञी। गौर्हि सर्पतो राज्ञी। ( कौ० ब्रा० २७।४ )

राज्ञी श्रेष्ठतमा।

तत उ हैतदुत रासभो न सर्वमिव जवं धावति सृत मयेति हतं मन्यमानः। ( कौ० ब्रा० १८।१ )

सृतमित्यस्य स्थाने श्रितमिति पाठमाश्रित्य "मद्ब्राह्यं सर्वं मया श्रितं मद्विरोधि सर्वं मया हतमिति मन्यमानः" इति विनायकभाष्ये व्याख्यानम्।

## (ग) वयांसि

( तस्माद् ) वयांसि बहु किञ्च किञ्चिदिव भक्षयन्ति श्वेतमिव प्रस्राव (?) यन्ति। ( कौ० ब्रा० २।२ )

प्रस्राव(?)यन्ति उत्सृजन्ति।

## ११—प्रकीर्णकम्

कृतस्यानावृत्तिरिति ह स्माहारुणिः। गुणलोप इति श्वेतकेतुः।
( कौ० ब्रा० २६।४ )

चतुष्टयं वा इदं सर्वम्। ( कौ० ब्रा० २।१)

इदं सर्वं चतुष्टयं धर्मार्थकाममोक्षरूपमिष्टमिति विनायकः।

षोडशकलं वा इदं सर्वम्। ( कौ० ब्रा० ८।१ )

इदं सर्वं भोगसाधनं शरीरं षोडशकलम्। पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च प्राणा मनश्चेति कलाः। चतस्रो दिशः। एकैकस्या दिशि चत्वारो भागा इति जगदिदं सर्वं षोडशकलमिति वा। इति विनायकभाष्ये।

तदाहुः कस्माद् ब्रह्मक्षत्रे एव प्रच्यावुके, विडच्युतेति। ब्रह्म वै प्रातःसवनम्, क्षत्रं माध्यदिनं सवनम्, विट् तृतीयसवनम्। तद्यद्यथोपपादमेव प्रातःसवनमाध्यंदिनयोः परिदधाति। तस्माद् ब्राह्मणयः प्रजा अनवधृत क्षियन्ति, अनवधृत क्षत्रियाः। अथ यत्तृतीयसवनस्य परिगानीयाच्युता तस्माद्विडच्युतेति। ( कौ०ब्रा० १६।४ )

"आहुः प्रष्टारः। लोके ब्रह्मक्षत्रे प्रच्यावुके एव। आर्जवे युद्धे चैकाकित्वं भजेते। आदावन्ते चैकरूपे न भवतः। विडच्युतेति। व्यवसाये एकरूपा आदावन्ते च। एतत्कस्मादिति प्रश्नः। उत्तरम्। ब्रह्म वै प्रातःसवनं क्षत्रं माध्यन्दिनं सवनं विट् तृतीयसवनमिति। क्रमानुरोधादेतद् युज्यते। तद्वद् यथोपपादमेव प्रातःसवनमाध्यन्दिनयोः परिदधाति। अर्धर्चशः शंसनं तथा छन्दसोऽनुरोधाच्छंसनम्। अक्षरपङ्क्तीना द्विपदाना च स प्रणवो द्वितीयश्चतुर्थश्च पच्छस्त्रिष्टुब्जगतीना द्वाभ्यामवसाय द्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनामेवमादिशाखान्तरोपपादितमनतिक्रम्य यथोपपादम्। तस्माद् ब्राह्मण्यः प्रजा अनवधृतं ध्रियन्ति। परस्परमाद्यन्तयोरेकरूपेण न वसन्ति। किन्तु स्वातन्त्र्येणैकाकित्वं भजन्ते। अनवधृतं क्षत्रियाः। अथ यत् तृतीयसवनस्य परिधानीयाच्युता। आदिना सहैकरूपा। तस्माद्विडच्युतेति। परस्परं गणश ऐकरूप्यं भजते, नैकैका स्वतन्त्रा।" इति विनायकभाष्ये।

त्रिवृद्वै शिल्पम्। नृत्यं गीतं वादितमिति। ( कौ० ब्रा० २६।५ )

माध्यमाः सरस्वत्यां सत्रमासत। तद्धापि कवषो मध्ये निषसाद। ते हेम उपोदुर्दास्या वै त्वं पुत्रोऽसि, न वयं त्वया सह भक्षयिष्याम इति। स ह क्रुद्धः प्रद्रवन् सरस्वतीमेतेन सूक्तेन तुष्टाव। तं हेयमन्वेयाय। तत उ हेमे निरागा इव मेनिरे। तं ह्यन्वावृत्योचुः। ऋषे नमस्तेऽस्तु, मा नो हिंसीः, त्वं वै नः श्रेष्ठोऽसि यं त्वेयमन्वेतीति। तं ह ज्ञपयांचक्रुः। तस्य ह क्रोधं विनिन्युः। स एष कवषस्यैव महिमा। सूक्तस्य चानुवेदिता। (कौ० ब्रा० १२।३)

माध्यमा ऋषयः। मध्यमेषु भवा माध्यमाः। तत् तेषु माध्यमेषु। उपोदुः परुषमुक्तवन्तः। इयं स्तुता सती सरस्वती। ततो हेतोः। विनिन्युरपनीतवन्तः।

यद्वै प्रत्यक्षमस्पृष्ट तत्कुर्वत्। ( कौ० ब्रा० २२।२ )

यद्वै प्रत्यक्षं सदस्पृष्टमनतीतं निदिश्यते तत् कुर्वदित्युच्यते। ( विनायकः )।

यद्वै भविष्यत्तत्करिष्यत्। ( कौ० ब्रा० २२।१)

यद्वै भूतानुवादि तच्चकृवत्। ( कौ० ब्रा० २२।३ )

यद्वै भूतानुवादि परोक्षार्थानुवादि निर्दिश्यते तच्चकृवदित्युच्यते। ( विनायकः )।

इति श्रुतिविमर्शे महानिबन्धे 'कौपीतकिब्राह्मण आचारविचाराः'
अथवा 'कौपीतकिब्राह्मणपर्यालोचनम्' नाम
तृतीयो निबन्धः।

# ऋग्वेदस्य ऋक्संख्या

श्रीयुधिष्ठिरो मीमांसकः, प्राच्यविद्याप्रतिष्ठानम्, दिल्ली ।

( पूर्वतोऽनुवृत्तम् )

## महिदासीया ऋग्गणना

महिदासेन स्वीये चरणव्यूहव्याख्याने ऋक्संख्या विस्तरशो न्यरूपि। तत्र तेन द्विपदापक्षे बालखिल्यसहिता १०५५२ द्वापञ्चाशदधिकपञ्चशतोत्तरदशसहस्रमृचः, बालखिल्यैर्विना १०४७२ द्वासप्तत्यधिकचतुःशतोत्तरदशसहस्रमृचः, द्विपदापक्षाभावे च बालखिल्यरहिता द्वयधिकचतुःशतोत्तरदशसहस्रमृचः परिगणिता इत्युक्तं पुरस्तात्। एतस्मिन्नेव प्रकरणे प्रतिवर्गर्क्संख्यानुसारेण वर्गसंख्याप्रतिपादकान् कांश्चिच्छ्लोकानुदाजहार। तथा हि—

एकर्चं एकवर्गश्च एकर्चं नवकस्तथा।
द्वौ वर्गौ तु द्वृचौ ज्ञेयौ ऋक्त्रयस्य शतं स्मृतम् ॥
चतुर्ऋचा पञ्च सप्तत्यधिकं च शतं तथा।
पञ्चर्चं तु द्विशतकं सहस्रं रुद्रसंयुतम् ॥
पञ्चचत्वार्यधिकं तु षड्ऋचा तु शतत्रयम्।
सप्तऋचा शतं ज्ञेयं विंशतिश्चाधिका स्मृता ॥
अष्टऋचा तु पञ्चाशत् पञ्चाधिकास्तथैव च।
दशाधिकद्विसहस्राः पञ्चशाखासु निश्चिताः ॥
वर्गाः संज्ञानसूक्तस्य चत्वारश्चात्र मीलिताः।
एवं पारायणे प्रोक्ता ऋचां संख्या न न्यूनतः ॥

एषु प्रतिपादिता वर्गसंख्या ऋक्संख्या चैवं विस्पष्टमवगन्तव्या—

| प्रतिवर्गर्क्संख्या | | वर्गसंख्या | | ऋक्संख्या |
|---|---|---|---|---|
| १ | × | १ | = | १ |
| २ | × | २ | = | ४ |
| ३ | × | १०० | = | ३०० |
| ४ | × | १७५ | = | ७०० |
| ५ | × | १२११ | = | ६०५५ |
| ६ | × | ३४५ | = | २०७० |
| ७ | × | १२० | = | ८४० |
| ८ | × | ५५ | = | ४४० |
| ९ | × | १ | = | ९ |
| योगः | | २०१० | | १०४१९ |

एवमाहत्य २०१० दशाधिकद्विसहस्रं वर्गाः, १०४१९ एकोनविंशत्यधिकचतुःशतोत्तर-दशसहस्रमृचः संपद्यन्ते। एषा वर्गसंख्या ऋक्संख्या च शाकलचरणान्तर्गताना पञ्चाना शाखा-नाम्, अत्र संज्ञानसूक्तस्य चत्वारो वर्गाः पञ्चदशर्चश्चापि संकलिताः। तदभावे १०४०४ चतुरधिकचतुःशतोत्तरदशसहस्रमृचो भवन्ति। एषा छन्दःसंख्यापरिशिष्टप्रतिपादितायाः संख्यायाः सकाशाद् द्व्यधिका। तच्चाधिक्यं शाखान्तरकृतं द्रष्टव्यम्।

## आस्माकीना वर्गगणना ऋक्संख्या च

ऋक्संख्यागणनाय शौनकवेङ्कटमाधवमहिदासैर्वर्गान्तर्गतर्चोऽनुसृत्य वर्गाः संख्याताः। तत्रैतेषा वर्गपरिसंख्याने महान् भेदो वर्तते। एषु कस्य समञ्जसा वर्गसंख्येति परिज्ञानायास्माभि-रपि सूक्ष्मेक्षिकया वर्गाः संख्याताः। आस्माकीना वर्गगणना एभ्यो नितरा विसंवदतीति स्वीयवर्गगणनापरिशुद्ध्यर्थं १० द्विपदापक्षे, २० नैमित्तिकद्विपदाश्चतुष्पदीकृत्य, ३० बालखिल्याना दश वर्गान्न्यूनीकृत्य त्रिधा पुनर्वर्गाः परिगणिताः। एवं त्रिधा परिगणनेऽपि नैवास्माभिः स्वीयगणनाया कश्चिद्दोष उपलब्धः। सा चेत्थं त्रिधा वर्गगणना—

( १ ) नैमित्तिका द्विपदा द्विपदारूपेण परिगणय्य प्रत्यष्टकं बालखिल्यसहिता वर्गसंख्या एवं वेदितव्या—

# ऋग्वेदस्य ऋक्संख्या

| अष्टकं | एकर्चः | द्व्यृचः | तृचः | चतु० | पञ्च० | षड्० | सप्त० | अष्ट० | नव० | दश० | एका० | द्वाद० | योगः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | × | १२ | २२ | १७३ | ४२ | ५ | ४ | × | ५ | १ | × | २६५ |
| २ | × | × | १७ | १५ | १२४ | ४६ | १२ | ७ | × | × | × | × | २२१ |
| ३ | × | × | ४ | १६ | १३५ | ४१ | २० | ६ | × | × | × | × | २२५ |
| ४ | × | × | १२ | २६ | १५५ | २६ | १५ | १० | × | × | × | × | २५० |
| ५ | × | × | १३ | १७ | १३८ | ४० | २० | ७ | × | ३ | × | × | २३८ |
| ६ | × | × | ११ | २८ | २०७ | ५८ | १६ | १० | × | १ | × | × | ३३१ |
| ७ | × | × | ८ | ३६ | १५६ | ३३ | १० | २ | १ | १ | × | १ | २४८ |
| ८ | × | × | २३ | २१ | १२० | ५२ | २४ | ६ | × | × | × | × | २४६ |
| योगः | १ | × | १०० | १८१ | १२११ | ३४१ | १२२ | ५५ | १ | १० | १ | १ | २०२४ |
| बालखिल्यान्तर्गता वर्गाः | × | २ | ६ | १० | × | × | × | × | × | × | × | | १८ |
| | × | × | | | | | | | | | | | |
| बालखिल्यातिरिक्ता वर्गाः | १ | ६८ | १७५ | १२०१ | ३४१ | १२२ | ५५ | १ | १० | १ | १ | | २००६ |
| | १ | × | | | | | | | | | | | |

वर्गान्तर्गतर्क्संख्यानुसारं समस्तस्यर्ग्वेदस्य वर्गसंख्या ऋक्संख्या चेत्थं ज्ञेया—

| प्रतिवर्गर्क्संख्या | | वर्गसंख्या | | समस्तर्क्संख्या |
|---|---|---|---|---|
| १ | × | १ | = | १ |
| २ | × | × | = | × |
| ३ | × | १०० | = | ३०० |
| ४ | × | १८१ | = | ७२४ |
| ५ | × | १२११ | = | ६०५५ |
| ६ | × | ३४१ | = | २०४६ |
| ७ | × | १२२ | = | ८५४ |
| ८ | × | ५५ | = | ४४० |
| ९ | × | १ | = | ९ |
| १० | × | १० | = | १०० |
| ११ | × | १ | = | ११ |
| १२ | × | १ | = | १२ |
| योगः | | २०२४ | | १०५५२ |

(२) चत्वारिंशदुत्तरशतं नैमित्तिकद्विपदाश्चतुष्पदीकृत्यैवं वर्गसंख्या ऋक्संख्या च वेद्या—

| प्रतिवर्गर्क्संख्या | | वर्गसंख्या | | समस्तर्क्संख्या |
|---|---|---|---|---|
| १ | × | १ | = | १ |
| २ | × | २ | = | ४ |
| ३ | × | १०१ | = | ३०३ |
| ४ | × | १८० | = | ७२० |
| ५ | × | १२२० | = | ७१०० |
| ६ | × | ३४३ | = | २०५८ |
| ७ | × | १२२ | = | ८५४ |
| ८ | × | ५५ | = | ४४० |
| ९ | × | १ | = | ९ |
| योगः | | २०२४ | | १०४८२ |

अस्मिन् परिगणने वर्गसंख्या तु सैव २०२४ चतुर्विंशत्युत्तरद्विसहस्रम्, परं मन्त्रसंख्याया नैमित्तिकद्विपदाना चतुष्पदीभावे सततिसंख्याया न्यूनता जायते।

(३) यदा तु चतुष्पदापक्षे बालखिल्यानामृचामष्टादशवर्गा अशीतिऋचश्च परिहीयन्ते तदेयं वर्गसंख्या ऋक्संख्या च बोध्या—

| प्रतिवर्गर्क्संख्या | | वर्गसंख्या | | समस्तर्क्संख्या |
|---|---|---|---|---|
| १ | × | १ | = | १ |
| २ | × | २ | = | ४ |
| ३ | × | ९९ | = | २९३ |
| ४ | × | १७४ | = | ६१६ |
| ५ | × | १२१० | = | ६०५० |
| ६ | × | ३४३ | = | २०५८ |
| ७ | × | १२१ | = | ८४७ |
| ८ | × | ५५ | = | ४४० |
| ९ | × | १ | = | ९ |
| योगः | | २००६ | | १०४०२ |

## ऋग्वेदस्य ऋक्संख्या

सम्प्रति शौनक-माधव-महिदासानामस्माकं च वर्गसंख्यापरिगणने यो भेदस्तद्विवृत्त्यै सर्वेषामपि वर्गान्तर्गतर्क्संख्यानुसारं वर्गाः परिसंख्यायन्ते—

| प्रतिवर्गर्क्संख्या | शौनकीया | वेङ्कटमाधवीया | आस्माकीना | महिदासीया |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| २ | २ | २ | २ | २ |
| ३ | ९७ | ९९ | ९९ | १०० |
| ४ | १७४ | १७५ | १७४ | १७५ |
| ५ | १२०७ | १२०९ | १२१० | १२११ |
| ६ | ३४६ | ३४३ | ३४३ | ३४५ |
| ७ | ११९ | १२१ | १२१ | १२० |
| ८ | ५९ | ५४ | ५५ | ५५ |
| ९ | १ | २ | १ | १ |
| योगः | २००६ | २००६ | २००६ | २०१० |

इदमत्रावधेयम्—शौनकादीनां वर्गसंख्याने बालखिल्या ऋचो न संख्यायन्ते, न च नैमित्तिका द्विपदा द्विपदारूपेण। अतोऽस्माभिस्तत्पत्नीया एव स्वीया वर्गसंख्याऽत्र निर्दिष्टा। सर्वश्चैष वर्गसंख्याभेदोऽवान्तरशाखाभेदकृत एवेत्यनुमिनुमः। महिदासीया वर्गसंख्या तु शाकल-चरणान्तर्गताना पञ्चानां शाखानामिति स एव विस्पष्टं जगाद।

## स्वामिदयानन्दपरिसंख्याता ऋक्संख्या

स्वामिदयानन्देन स्वीयर्ग्वेदभाष्यस्योपोद्घाते ऋग्वेदान्तर्गतानामृचा परिगणनमकारि। तत्र प्रतिमण्डलं या ऋक्संख्याः परिसंख्यातास्तासामयं योगः —

१९७६ + ४२६ + ६१७ + ५८९ + ७२७ + ७६५ + ८४१ + १७२६ + १०९७ + १७५४ = १०५२१।

अत्र प्रतिमण्डलर्क्संख्यायां लेखकप्रमादाद् द्वे अशुद्धी बभूवतुः। तत्रैका—अष्टममण्डला-न्तर्गतविंशतितमसूक्तमन्त्राणां षड्विंशतिसंख्यास्थाने षट्त्रिंशत् संख्या लिखिता। तेन तन्मण्डली-यम्योगोऽपि १७१६ षोडशाधिकसप्तशतोत्तरैकसहस्रस्थाने १७२६ षड्विंशत्यधिकसप्तशतोत्तरै-कसहस्रं संजातः। द्वितीया—नवममण्डलस्य प्रतिसूक्तनिर्दिष्टसंख्यायोगकाले दृष्टिदोषात् काचिद्

एकादश संख्या परित्यक्ता, तेन तद्योगोऽपि ११०८ अष्टाधिकशतोत्तरैकसहस्रस्थाने सप्तनवत्यधिकैकसहस्रं बभूव। इमौ दोषौ परिमृज्य सकलर्क्संख्या १०५२२ द्वाविंशत्यधिकपञ्चशतोत्तरदशसहस्रं संपद्यते।

अयमृचा योगो मैक्समूलरीयर्क्संस्करणानुसारं विद्यते। तदीयर्क्संस्करणे च ये दोषास्ते पुरस्तात् प्रतिपादिताः। अतोऽत्रापि प्रथममण्डलान्तर्गताः षष्टिर्नैमित्तिका द्विपदाश्चतुष्पदीकृत्य त्रिंशत् परिगणिताः। एतद्दोषपरिमार्जने कृते सैव १०५५२ द्विपञ्चाशदधिकपञ्चशतोत्तरदशसहस्रं संपद्यते।

प्रतिमण्डलमृक्संख्यामुक्त्वा सर्वर्क्परिगणना ब्रुवन् स्वामिदयानन्द आह—

"दशसहस्राणि पञ्चशतानि एकोननवतिश्च १०५८९ मन्त्राः सन्तीति वेद्यम्।"

एषा संख्या प्राङ्निर्दिष्टर्क्संख्यातो नितरा भिद्यते। न च तद्भेदे किञ्चित् कारणमुक्तम्। अतो मन्यामहे, अत्रापि लेखकप्रमाद एव कारणं स्यात्। स चेत्थम्—प्रतिमण्डलमुक्तानामृक्संख्याना कृत्स्नं योगं कुर्वता लेखकेनैकविंशत्यधिकपञ्चशतोत्तरदशसहस्रसंख्या अङ्कैः १०५२१ निर्दिष्टा। तदनु स्वामिभिस्तस्मिन्नस्पष्टाङ्कैर्लिखिते योगे एकाङ्को नवाङ्कत्वेन, द्वयङ्कोऽष्टाङ्कत्वेन (१०५८९) चावबुद्धयाक्षरेषु—"दशसहस्राणि पञ्चशतानि एकोननवतिश्च मन्त्राः" इत्येवं सर्वर्ग्योगोऽलेखि। नागर्या लिप्यामेतयोरङ्कयोरस्पष्टलेखने प्रायेणैतादृशो भ्रमो जायते। तेन—"दशसहस्राणि पञ्चशतानि नवतिश्च मन्त्राः" इति लेखो लेखकपाठकभ्रममूलक एव।

पण्डितभगवद्दत्तमहोदयः स्वीये वैदिकवाङ्मयैतिह्ये स्वामिदयानन्दनिर्दिष्टविभिन्नर्क्संख्यासमन्वयं प्रतिपादयन्नाह—

"यदि स्वामिदयानन्दस्य १०५२१ ऋग्गणनाया नैमित्तिकद्विपदानामर्धासु सप्ततिसंख्यासु पञ्चममण्डलस्य चतुर्विंशसूक्तस्य द्विगुणत्वेन परिगणिता द्विसंख्या परिहायाष्टषष्टिसंख्याया योगः क्रियेत तर्हि १०५८९ संख्योपपद्यते" [भा० १, पृ० १३७]।

वस्तुतः पण्डितभगवद्दत्तमहोदयेनापि नैतदवगतं यन्मैक्समूलरीयऋक्संस्करणे कति ऋचो द्विपदारूपेण मुद्रिताः, कति च चतुष्पदारूपेण। यदि ह्यस्य ज्ञानमभविष्यत्तर्हि न स एवमवक्ष्यत्। यतो हि मैक्समूलरीये संस्करणे षट्सप्ततिर्द्विपदा द्विपदारूपेणैव मुद्रिताः, अतो नैव तासां पुनर्द्विगुणीभावो युज्यते।

## ऋग्वेदस्य ऋक्संख्या

### अध्यापकमैकडानलस्य ऋग्गणना

अध्यापकमैकडानलेन स्वसम्पादिताया ऋक्सर्वानुक्रमण्या उपोद्घाते ऋग्वेदस्य ऋग्गणनामधिकृत्य विस्तरेण लिखितम् । तत्र तस्य बह्व्यो भ्रान्तयः संजाताः । तद्यथा—

**प्रथमा**—मैकडानलस्य प्रतिच्छन्दोऽनुसारं परिगणितानामृचां सर्वयोगः १०४४२ द्विचत्वारिंशदधिकचतुःशतोत्तरदशसहस्रं भवति । तत्र द्विपदा योगः १२७ सप्तविंशत्युत्तरैकशतम्, प्रथममण्डले चैकत्रिंशद् द्विपदाः परिगणिताः । ऋक्सर्वानुक्रमण्यनुसारं प्रथममण्डले पञ्चषष्टितमसूक्तादासप्ततितमसूक्तमेकषष्टिर्द्विपदाः सन्ति । मैक्समूलरेणाऽऽद्यमण्डलस्थाः षष्टिर्द्विपदाश्चतुष्पदीकृत्य त्रिंशन्मन्त्रा मुद्रिता इत्युक्तं पुरस्तात् । मन्यामहे मैकडानलो मैक्समूलरीये ऋग्वेदे चतुष्पदीकृतास्त्रिंशदृचो भ्रान्त्या द्विपदा मत्वा त्रिंशदेव द्विपदासु परिगणितवान्, सर्वानुक्रमण्याश्च सम्पादनं विदधन् सर्वानुक्रमण्या मैक्समूलरीयक्संस्करणे चाद्यमण्डलान्तर्गतानां पञ्चषष्टितमादासप्ततितमं षण्णां सूक्तानां परस्परमृक्संख्याभेदं दृष्ट्वाऽपि मैक्समूलरीयं दोषं नावगतवान् ।

**द्वितीया**—छन्दःसंख्यापरिशिष्टे सप्तदश द्विपदा निर्दिष्टाः । मैकडानलेन द्विपदानामृचां योगः सप्तविंशत्युत्तरशतमुक्तः (१७ नित्याः + ३० प्रथमे मण्डले, + ८० अन्यमण्डलस्थाः) । अनयोः संख्ययोर् ( छन्दःसंख्योक्ताया स्वीयाया च ) आद्यन्तयोरङ्कयोः साम्यं (आदावेकाङ्कोऽन्ते सप्ताङ्कः) दृष्ट्वा मैकडानल ऊहितवान् नूनं छन्दःसंख्यापरिशिष्टे द्विपदायोगे मध्यवर्ती द्व्यङ्को नष्ट इति ( अर्थात् १२७ स्थाने कथञ्चित् प्रमादात् १७ संख्या निर्दिष्टा ) । महदाश्चर्यम् ! यन्मैकडानल इदमपि नावबुबुधे यच्छन्दःसंख्यापरिशिष्ट उक्ता सप्तदशसंख्या नित्यानां द्विपदानामस्तीति । अतो मन्यामहे—मैकडानलो द्विपदानां नित्यनैमित्तिकभेदमपि नावबुबुध इति ।

**तृतीया**—मैकडानलो निर्दिशति यत्—"ऋग्वेदस्य शाकलसंहितायामृचां पूर्णयोगो १०४४२ द्वाचत्वारिंशदधिकचतुःशतोत्तरदशसहस्रं जायते । छन्दःसंख्यापरिशिष्टे तु १०४०२ द्व्यधिकचतुःशतोत्तरदशसहस्रमृच उक्ताः" [ऋक्सर्वा० भूमिका० पृ० १७] ।

छन्दःसंख्यापरिशिष्टे यद्दङ्मानमुक्तं तत्र १४० चत्वारिंशदुत्तरमेकशतं द्विपदाश्चतुष्पदीकृताः सप्ततिः परिगणिताः, तासां द्विपदापक्षे १०४७२ सप्तत्यधिकचतुःशतोत्तरदशसहस्रं योगो जायत इत्यवोचाम पुरस्तात् । मैकडानलीये ऋग्योगे प्रथममण्डलस्थद्विपदायोगे त्रिंशत्संख्याया अशुद्धिर्वर्तत इत्यप्यनुपदमुक्तमेव । तस्याः परिशोधने विहिते मैकडानलस्य सर्वयोगोऽपि

# समासशक्तिवादः

[1]स्वर्गीयः श्रीयदुनाथमिश्रः ।

नत्वा वाचं परां तातं मातरं च गुरूनपि ।
समासे शक्तिरेकेति परीक्ष्यास्थास्यते मतम् ॥

समर्थः पदविधिरिति पाणिनीयानुशासनात् सुबन्ततिङन्तान्यतरात्मक पदमुद्दिश्य विधीयमानानां कार्याणां पदसामर्थ्यमन्तरेणाप्रवृत्ते राजपुरुषादिसमासेनापि सामर्थ्यमवश्यमपेक्ष्यते । तच्चैकधर्मावच्छिन्ननिरूपितैकशक्तिमत्त्वरूप एकार्थीभावः, एकपदेऽपरपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वरूपा निरूप्यनिरूपकभावापन्नविषयताशालिशाब्दबोधप्रयोजकाकाङ्क्षाशालित्वरूपा वा व्यपेक्षेति विचिकित्सायामेकार्थीभाव एव इति शाब्दिकसिद्धान्तः ।

तत्र केचित् प्रत्यवतिष्ठन्ते—समासघटकराजादिपदानां प्रत्येकं नृपादिषु पृथक् शक्तेः राजा वदति, राजानं प्रणमतीत्यादौ, पुरुषोऽस्तीति, पुरुषमानयेत्यादौ च नृपादिविषयकशाब्दबोधान्यथाऽनुपपत्त्याऽवश्यक्लृप्ततया राजपुरुषादिसमासेऽपि प्रत्येकपदनिरूपितया शक्त्या लक्षणया वोपस्थितयोरर्थयोः परस्परमन्वये बुभुत्सितार्थविषयकशाब्दबोधसंभवाद्राजसम्बन्धिपुरुषत्वाद्यवच्छिन्ननिरूपितैकातिरिक्ता शक्तिः समुदाये नोपगमनीया, "अनन्यलभ्यो हि शब्दार्थः" इति न्यायात् ।

---

1. *दरभङ्गामण्डलान्तर्गतलालगञ्जग्रामवास्तव्यजयनाथशर्मात्मजन्मा श्रीयदुनाथमिश्रः सोदरपुरनामके मैथिलश्रोत्रियवंशे पञ्चाशीत्यधिकाष्टादशशततमे खैष्टे वर्षे जन्म लेभे । एष महानुभावः प्रथमं शब्दशास्त्रमधीत्य म०म०लोकनाथशर्मणः सकाशात् कुलक्रमागतं तर्कशास्त्रमध्यैष्ट । विदुषाऽनेन व्यञ्जनावादः, समासशक्तिवादः, पदवाक्यरत्नाकरस्य गूढार्थदीपिकानाम्नी टीका चेति ग्रन्थत्रयी निर्मिता, दैवदुर्विलसितेन चाकस्मादेवाष्टाविंशत्यधिकोनविंशतिशततमे खैष्टे वर्षेऽल्पीयस्येव वयसि त्रिदिवपथातिथिरभावि । एषु ग्रन्थेषु व्यञ्जनावादो बिहारसंस्कृतसमित्यवयवीभूतशास्त्रविचारपरिषदा १९२९ खैष्टाब्दे पुरस्कृतः प्रकाशितश्च वर्तते । साम्प्रतमेष समासशक्तिवादाख्यो निबन्धः पुरतो मनीषिणां समुपस्थाप्यते । निबन्धपाण्डुलिपिप्रदातारो ग्रन्थकारसगोत्राः काशिकश्यामाविद्यालयाध्यापका न्यायसाहित्याचार्याः श्रीनन्दिनाथमिश्राः साधुवादमर्हन्ति—*

*सम्पादकः ।*

समुदाये शक्तिसत्त्वे वृत्तिमत्त्वरूपार्थवत्त्वस्य सत्त्वादर्थवत्सूत्रेणैव समासस्य प्रातिपदिकसंभवेन कृत्तद्धितेत्युत्तरसूत्रे समासग्रहणस्य वैयर्थ्यप्रसङ्गाच्च। समासस्य प्रातिपदिकसंज्ञाया अभावे प्राचीनविभक्तिलोपविभक्त्यन्तरोपस्त्यादिकार्याणा तत्राभावप्रसङ्गात्। समासस्यार्थवत्त्वाभावादप्राप्तायाः प्रातिपदिकसंज्ञायाः सिद्ध्यर्थमेवोत्तरसूत्रे समासग्रहणात्तत्रार्थवदित्यस्यानुवृत्तेः। न च तत्रापि तदनुवृत्तिरावश्यकी, अन्यथा कृत्तद्धितपदाभ्या कृदन्ततद्धितान्तयोरबोधप्रसङ्गात्। येन विधिस्तदन्तस्येति सूत्रेण विशेष्यविशेषणभावे विशेषणस्य तदन्तबोधकत्वज्ञापनात् कृत्तद्धितपदयोर्विशेषणपदत्व एव तत्प्रवृत्तिसंभवात्। तत्त्वं चार्थवदिति विशेष्यवाचकपदसत्त्व एव तयोः संभवतीति वाच्यम्, शब्दस्वरूपादिरूपविशेष्यवाचकपदाध्याहारेणैव तदन्तविधिसंभवात् तत्रार्थवदित्यस्यानावश्यकत्वात्। न चैवं पूर्वसूत्रेऽप्यर्थवदित्यस्य वैयर्थ्यम्, 'अधातुः' इत्यादौ नञः पर्युदासतया तद्भिन्नतत्सदृशबोधकत्वेन सादृश्यस्य चार्थवत्त्वेन विवक्षणादेव निरर्थकाभ्या प्रातिपदिकसज्ञाया अप्रवृत्तेरिति वाच्यम्; तथा सति विशेष्यवाचकपदान्तरस्य नञः पर्युदासत्वस्य तद्घटकसादृश्यस्य चार्थवत्त्वरूपस्य कल्पनाया गौरवात्। वस्तुतः कृत्तद्धितसूत्रं न विधायकम्, अपि तु पूर्वसूत्रेण धात्वादिभिन्नाना येषा प्रातिपदिकसंज्ञा विहिता तेषा प्रपञ्चमात्रम्। अन्यथा कृद्ग्रहणेन गतिकारकपूर्वकस्यापि ग्रहणापत्त्या 'मूलकेनोपदंशम्' इत्यस्यापि कारकपूर्वकत्वात् प्रातिपदिकसंज्ञाया तृतीयालोपापत्तेः, तद्धितग्रहणेन तद्धितान्तमात्रग्रहणे बहुगुडादिपदाना प्रातिपदिकसंज्ञानापत्तेश्च, तद्धितविशिष्टस्य ग्रहणे मध्यस्थिततद्धितके पचतकीलादावपि प्रातिपदिकसंज्ञापत्तेरिति समासस्य प्रातिपदिकसंज्ञासिद्धये तत्र शक्तिरावश्यकीति चेदेवमपि वृत्तिमत्त्वं नार्थवत्त्वम्, किन्तु वृत्तिमदविषयकप्रतीत्यविषयत्वमेव तत्। राजपुरुषादिसमासविषयिण्याः प्रतीतेर्वृत्तिमद्राजादिपदमात्रविषयकत्वादर्थवत्त्वं तत्रापि सुलभम्। वृत्तिमद्विषयकसमूहालम्बनप्रतीतिमादाय निरर्थकेष्वप्यतिप्रसङ्गः स्यादतो निषेधद्वयगर्भता। धनम्, वनमित्यादौ नान्तभागस्यापि निरुक्तार्थवत्त्वेन प्रातिपदिकत्वान्नकारलोपापत्तिरिति तु नाशङ्कनीयम्, तत्र समुदायशक्त्यार्थवत्त्वस्य विवक्षणे तादृशशक्तिमत्समुदायाविषयत्वस्यैव प्रत्येकवर्णविषयकप्रतीतौ सत्त्वात्। अवयवशक्त्या तद्विवक्षणे च शाब्दबोधानुकूलपदार्थोपस्थितिजनकवृत्तेरेव वृत्तिपदेन ग्रहणात् समुदायघटकप्रत्येकवर्णशक्तेस्तादृशोपस्थित्यजनकत्वात्।

एवं समर्थः पदविधिरिति सूत्रोपात्त सामर्थ्यं यद्येकार्थीभावात्मकं स्यात्तदा 'द्रवत्पाणी शुभस्पती' इत्यादौ तस्य त्वयाऽप्यनुपगमेन "सुबामन्त्रिते पराङ्गवत्स्वरे" इति सूत्रेण शुभ्धातोः क्विपि शुभ इति षष्ठीसुबन्तस्य पती इत्यामन्त्रिते परे पराङ्गवद्भावः परस्यामन्त्रितस्या-

ङ्गवदेकदेशवद्भावस्तद्ग्रहणेन ग्रहणं न स्यादिति षाष्ठिकेनामन्त्रितस्य चेति सूत्रेणाप्युदात्तत्वं न स्यात्। न चाष्टमिकेनामन्त्रितस्य चेति सूत्रेण निघातस्वरोऽत्र शङ्क्यः, अनुदात्तं सर्वमपादादा-वित्यस्य ततोऽधिकारेण पूर्वस्यामन्त्रितस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यनेनाविद्यमानवद्भावे शुभ इत्यस्य पादादित्वात्। न च 'सुबामन्त्रिते' इति सूत्रे सामर्थ्यं नोपतिष्ठत इति वाच्यम्; तथा सति "समर्थः पदविधिः" इत्यस्याव्यवहितोत्तरं "सुबाममन्त्रिते पराङ्गवत्स्वरे" इति सूत्रं महर्षिर्न पठेत्, किन्तु 'सुबामन्त्रिते' इति सूत्रानन्तरं समर्थः पदविधिरिति सूत्रं पठेत्। अन्यत्रैकार्थीभावात्मक सामर्थ्यं स्वरे कर्तव्ये तु व्यपेक्षात्मकं तदित्यर्द्धजरतीयताभयेन वक्तुम-न्याय्यमिति सर्वत्र व्यपेक्षात्मकमेव तद्वक्तुमुचितम्। एवं "सुबामन्त्रिते" इत्यत्र सामर्थ्यस्यानपे-क्षणे "यत्ते दिवो दुहितर्मर्तभोजनम्" इत्यादौ यथा दुहितरित्यामन्त्रिते परे 'दिवः' इत्यस्य पराङ्गवद्भावादनुदात्तं सर्वमपादादावित्यधिकारीयेणाष्टमिकेनामन्त्रितस्य चेत्यनेन निघातस्वरो भवति, तथा "अयमग्ने जरिता", "ऋतेन मित्रावरुणावृतावृधावृतस्पृशौ" इत्यादावपि संबोधनप्रथमान्तस्याग्निमित्रावरुणादिपदस्य सत्त्वात्तस्मिन् परे अयमित्यस्य ऋतेनेत्यस्य च पराङ्गवद्भावे निघातस्वरः स्यात्। न च तस्मिन्निमित्तग्रहणं कर्तव्यमिति वार्त्तिकात्तस्यामन्त्रि-तस्य यन्निमित्तं भवति तदेव पराङ्गवद्भवतीत्यर्थकात् 'अयम्', 'ऋतेन' इत्यनयोरामन्त्रितनिमित्त-कत्वाभावान्नाय दोष इति वाच्यम्; तथा सति मित्रावरुणावित्यस्यापि ऋतावृधाविति परे पराङ्गवद्भावानापत्तेः, ऋतस्य सत्यस्य वर्द्धयितारावित्यर्थेऽन्तर्भावितण्यन्ताद् वृधेः क्विपि ऋतावृधावित्यस्य सिद्धेर्मित्रावरुणावित्यस्य तन्निमित्तत्वविरहात्। तस्य पराङ्गवद्भावा-भावे ऋतावृधावित्यस्य निघातस्वरानापत्तेः, तस्य द्वितीयपादादित्वेनापादादावित्यनेन पर्युदासात्, मित्रावरुणावित्यस्य पराङ्गवद्भावे तस्यैव पादादित्वात्। पादादित्वेऽथाष्टमिक-निघातस्वरस्य प्रवृत्तौ "इमं मे गङ्गे यमुने सरस्वति" इति मन्त्रे गङ्गे इत्याद्या-मन्त्रितत्रयस्याविद्यमानवद्भावेऽपि 'मे' इति पदात्परेषां 'गङ्गे' इत्यादित्रयाणां यथा निघातस्तथा पादादिस्थितस्यापि 'शतद्रु' इत्यस्य 'मे' इति पदात्परत्वादेव निघातस्वरः स्यात्। पराङ्गवद्भावे पादादित्वेऽपि षाष्ठिकेनामन्त्रितस्य चेति सूत्रेणाऽऽद्युदात्ततायाः प्रवृत्तौ 'ऋतेन' इत्यादीनामाद्युदात्तताया दुर्वारत्वात्। न च मित्रावरुणावित्यस्याविद्यमानवद्भावात् कथं पराङ्गवद्भावस्तस्येति वाच्यम्, "आमन्त्रितं पूर्वमविद्यमानवत्" इति सूत्रे पूर्वग्रहणाद् ज्ञापकात् परस्य कार्ये कर्तव्येऽविद्यमानवद्भावस्यातिदेशात् पराङ्गवद्भावस्तु न कार्यः, किन्तु स्वस्येति तद्विषये तस्याप्रवृत्तेः। अथवा मित्रावरुणाविति सामान्यवचनमामन्त्रितं तद्विशेषणं च

ऋतावृधाविति 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति सूत्रेणाविद्यमानवद्भावस्तत्र निषिध्यत इति, तस्मात्तन्निमित्तग्रहणमिति वार्त्तिके कृते मित्रावरुणावित्यस्यापि पराङ्गवद्भावानापत्तेः समर्थपरिभाषयैव निर्वाहः कर्तव्यः, तन्निमित्तग्रहणं त्याज्यमित्येव वेदभाष्यशब्दकौस्तुभयोः सिद्धान्तितम् ।

तत्र च व्यपेक्षारूपमेव सामर्थ्यम् । तस्य च 'ऋतेन', 'मित्रावरुणौ' इत्यादौ ऋतेनेत्यस्या 'शाखे' इत्यनेनैवान्वयाद् मित्रावरुणावित्यनेनानन्वयाच्च न पराङ्गवद्भावः । मित्रावरुणावृतावृधावित्येतयोस्त्वभेदान्वयादेव व्यपेक्षाऽस्तीति तत्र पराङ्गवद्भावः सुघटः । पदार्थाना परम्परान्वयरूपसामर्थ्यसत्त्वादेवाधिहरि राजपुरुषश्चित्रगुरित्यादौ समासः । तादृशसामर्थ्याभावादेव च भार्या राज्ञः पुरुषो देवदत्तस्येत्यादौ न समासः । अथैवं रामकृष्णौ पश्य, धवखदिरौ छिन्धीत्यादौ रामकृष्णादिपदेषु कथं द्वन्द्वः, रामकृष्णपदार्थयोर्धवखदिरपदार्थयोश्च मिथोऽन्वयाभावेन निरुक्तव्यपेक्षाया अभावात् । न चैकक्रियाऽन्वयित्वरूपं सामर्थ्यं तत्राप्यस्तीति कैयटोक्तं समाधानमत्र युक्तम्, तथा सति कृतः सर्वो मृत्तिकयेत्यत्र कृतः सर्वमृत्तिकेति समासापत्तेः, एकस्यामेव कृञर्थक्रियाया सर्वपदार्थस्य मृत्तिकापदार्थस्य चान्वयात् । सूर्यं न पश्यन्तीत्यर्थेऽसूर्यम्पश्या राजदारा इत्यादावपि नञ्पदसूर्यपदयोर्दृश्यर्थक्रियान्वय्यर्थकत्वात् समर्थसमासस्यैव संभवे तस्यासमर्थसमासत्वोक्तिरसङ्गता स्यात् । न चैकस्या क्रियाया कर्मत्वाद्येकरूपेणान्वयित्वमेव सामर्थ्यम्, तच्च रामादिपदार्थाना दृश्यादिक्रियाया कर्मत्वेनैवान्वयादक्षतम्, कृतः सर्व इत्यादौ चैकस्य कर्मतयाऽन्यस्य करणतया कृञर्थे सूर्यस्य कर्मतयाऽभावस्य प्रतियोगितया च दृश्यर्थेऽन्वयादेवाव्रत्तीति वाच्यम्, तथा सति 'भिक्षामट गा चानय' इत्यादौ,'अहरहर्नयमानो गामश्वं पुरुषं पशुम्' इत्यादौ चातिप्रसङ्गमाशङ्क्यम्, अधिक्रियत इत्यधिकरणं पदार्थस्तेषा युगपद्वचनमेकेनैकदोपस्थापनं तत्रैव द्वन्द्व इत्यर्थकेन युगपदधिकरणवचने द्वन्द्व इति भाष्येण सह भावविवक्षाया वृत्तिर्द्वन्द्वैकशेषयोः, क्रमेणार्थप्रतीतौ हि न स्याद् द्विवचनादिति वाक्येन च तन्निराकरणस्य वैयर्थ्यापत्तेः । प्रथमे भवन्निरुक्तसामर्थ्यस्यासत्त्वाद्, द्वितीये तस्य सत्त्वेऽपि विभाषाधिकारेण समासस्य वैकल्पिकत्वादिति चेत्, तत्प्रयोज्यविषयतया साक्षात् परम्पराया वा निरूपिता या विषयता तत्प्रयोजकत्वस्यैव व्यपेक्षारूपत्वात् । रामकृष्णौ धवखदिरावित्यादिवाक्यजन्यबोधस्य समूहालम्बनात्मकबोधवैलक्षण्याय द्विवचनार्थद्वित्वप्रकारतानिरूपिता या रामत्वावच्छिन्ना कृष्णत्वावच्छिन्ना च विशेष्यताद्वयी, एवं धवत्वाद्यवच्छिन्ना विशेष्यताद्वयी, तच्छालित्वस्यैवोपगमात् । समूहालम्बने प्रकारताद्वयनिरूपितविशेष्यताद्वयस्यैव सत्त्वात् । तथा च रामत्वावच्छिन्नविशेषतया

निरूपिता द्वित्वप्रकारता, तया निरूपिता कृष्णत्वावच्छिन्नविशेष्यतेति रामपदप्रयोज्यविषयतया परम्परया निरूपिता या कृष्णत्वावच्छिन्नविषयता तत्प्रयोजकत्वस्य कृष्णादिपदे सत्त्वादेव न व्यपेक्षाहानिः। एवं जलपृथिव्योः स्नेहगन्धावित्यादितोऽपि जले स्नेहः पृथिव्या गन्ध इति समूहालम्बनात्मको बोधो येन तत्रापि व्यपेक्षाविरहप्रसक्तौ समासो न स्यात्; किन्तु द्वित्वत्वाद्य-वच्छिन्नैकप्रकारतानिरूपिता या जलत्वावच्छिन्ना पृथिवीत्वावच्छिन्ना च विशेष्यता-द्वयी, प्रत्येकं तदवच्छिन्ना या निरूपितत्वसंबन्धावच्छिन्ना प्रकारता तन्निरूपिता याऽऽधेयतात्वा-वच्छिन्ना विशेष्यता तदवच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपिता या द्वित्वत्वावच्छिन्ना वच्छेदकतानिरूपिता स्नेहत्वाद्यवच्छिन्ना विशेष्यताद्वयी तन्निरूपक एवेति तत्रापि जलादिपदप्रयोज्य-विषयतया परम्परया निरूपितत्वस्य पृथिव्यादिपदप्रयोज्यविषयताया सत्त्वान्न व्यपेक्षाहानिः। एव व्यपेक्षात्मकसामर्थ्यस्यैव समासप्रयोजकत्वाच्छशशृङ्गकूर्मरोमादिपदेष्वपि समास उपपन्नः, निरूप्यनिरूपकभावापन्नविषयताशालिभ्रमात्मकबोधस्य तेभ्योऽप्युत्पत्तेः शशादिपदप्रयोज्यविषयता-निरूपितविषयताप्रयोजकत्वस्य शृङ्गादिपदेष्वक्षतेरिति।

अत्राहुः शाब्दिकाः—एकधर्मावच्छिन्नशक्तिमत्त्वरूपैकार्थीभाव एव सामर्थ्यं समासप्रयोजकम्, राजा वदतीत्यादौ राजादिपदाना राजत्वाद्यवच्छिन्ननिरूपितशक्तेरावश्यकत्वेऽपि राजपुरुषादिसमासे राजसंबन्धिपुरुषत्वाद्यवच्छिन्ननिरूपितैका शक्तिरेवोपेयते, न तु प्रत्येकराजाद्यर्थनिरूपिता शक्तिरपि प्रत्येकपदनिष्ठा, अन्यथा राजपदजन्यराजोपस्थितेः पुरुषपदजन्यपुरुषोपस्थितेश्च राजपुरुषादिसमास-जन्यशाब्दबोधसामग्र्या भिन्नविषयकप्रत्यक्षप्रतिबन्धकताया च प्रवेशे गौरवापत्तेः। न चैवं विशिष्ट-शक्त्युपगमेऽपि प्रत्येकपदशक्तिरावश्यकी, अन्यथा राजपदं चन्द्रनिरूपितशक्तिमदिति ज्ञानेऽपि राजपुरुषादिसमासान्नृपसंबन्धिपुरुषनिरूपितविशिष्टशक्तिज्ञानं शाब्दबोधश्च तादृशः स्यात्, नेष्यते च शाब्दिकैरपि तथेति वाच्यम्; राजपुरुषादिसमासान्ना राज्ञः पुरुष इत्यादिवाक्यघटकराजादिपदसदृश-राजादिपदावयवकत्वेऽपि यथा राजादिपदघटकरेफादिप्रत्येकवर्णाना निरर्थकत्वं तथैव समासघटक-राजादिपदानामपि निरर्थकत्वमेव। वस्तुतो राजादिपदाना तदवयवत्वमपि नेष्यत एव, किन्त्वखण्डमेव राजपुरुषादिपदं केवलमसत्या प्रक्रियासाधनिकावस्थिकाश्रित्य राज्ञः पुरुष इत्यादिभिर्विगृह्यत इति तत्र राजादिपदाना पृथक्शक्तेरभावात्तज्ज्ञानस्यासंभवात्।

ये तु कार्यशाब्दिका वाक्याद्वैकल्पिकी वृत्तिनिष्पत्तिं मन्यन्ते तेषा मते जहत्स्वार्थाजहत्स्वार्थ-पक्षविकल्पोपगमः, 'अथयेवृत्तिं वर्णयन्ति', 'किन्तु आहुः' इत्यादिना भाष्ये तथैवोक्तेः। तत्रजहत्स्वार्थत्वं नाम राजपदार्थस्य राज्ञो विशेषणान्तरऋद्धाद्यभेदान्वयसहिष्णुत्वरूपप्राधान्यस्य त्यागः। यथा तत्रा

राजकर्मणि प्रवर्तमानः स्वं तक्षकर्म जहाति, न हिक्कितश्वसिते इत्यादिना भाष्ये तथैव व्युत्पादनात्। एकार्थीभावोऽप्यत्र पक्षे राजसंबन्धिपुरुषस्योपस्थितिसिद्धयर्थमेवाङ्गीक्रियते, अन्यथा राजपदाद्राजमात्रस्योपस्थितौ पदार्थभूते तत्र ऋद्धादिविशेषणान्तरान्वयस्यापत्तेः। एकार्थीभावाङ्गीकारे तु राज्ञः पदार्थैकदेशतया पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिभयेन तत्र विशेषणान्तरान्वयस्याप्राप्तेः। अजहत्स्वार्थत्वं चात्र पक्षे राजांशस्यापरित्यागमात्रादेवोपेयते, भिक्षुकोऽयं द्वितीया भिक्षां लब्ध्वा पूर्वां भिक्षां न जहाति संचयाय प्रवर्तते इत्यादिभाष्येण तथैव व्युत्पादनात्। अथवेतरपुरुषव्यावर्त्तकतामात्रेण राजांशस्योपयोग इति राजपदं जहत्स्वार्थमेव, तावतापि तन्निमितकस्य पुरुषे राजसंबन्धज्ञानस्य न निवृत्तिः। नहि घटेऽग्निसंयोगस्य नाशेऽपि तन्निमित्तकस्य पाकजरूपादेर्नाशः, अस्यार्थस्य "अथवाऽन्वयाद्विशेषणं भवति, धृतघटश्चम्पकपुटः" इत्यादिभाष्येण स्पष्टमुक्तत्वात्।

यच्चोक्तं समासे शक्तेरुपगमे तस्य वृत्तिमत्त्वरूपार्थवत्त्वादर्थवत्सूत्रेणैव प्रातिपदिकसञ्ज्ञासिद्धौ कृत्तद्धितेति सूत्रे समासग्रहणं व्यर्थं स्यादिति; तत्रेष्टापत्तिरेवास्माकम्। अत एव समासग्रहणं यत्र संघाते पूर्वो भागः पदं तस्य प्रातिपदिकसंज्ञा चेत्तर्हि समासस्यैव नान्यस्येति नियमार्थम्, तेन राज्ञः पुरुषो मूलकेनोपदंशमित्यादिवाक्यस्य न प्रातिपदिकसंज्ञा, बहुगुच्छादीनां तु वृत्तिमत्त्वादेव तद्धितान्तत्वाभावेऽपि पूर्वसूत्रेणैव सा। यदपि कृत्तद्धितेति सूत्रस्य न विधायकत्वम्, कृत्तद्धितसमासैकशेषसनाद्यन्तधातुषु पञ्चस्वेवैकार्थीभावस्योपगमात्, तेषां पूर्वसूत्रेणैव प्रातिपदिकसंज्ञासिद्धेः। सुबन्ततिङन्तयोरेकार्थीभावाभावेनार्थवत्त्वाभावादेव प्रातिपदिकसंज्ञाया अप्रवृत्तेः। पूर्वसूत्रे प्रत्ययान्तपर्युदासोऽपि व्यर्थः। एवं समुदायस्य प्रत्येकानतिरिक्ततया राजपुरुषादिसमासानां प्रत्येकराजादिपदानतिरेकेण समासे वृत्त्यभावेऽपि वृत्तिमदविषयकप्रतीत्यविषयत्वस्यैवार्थवत्त्वरूपतया प्रत्येकपदनिष्ठवृत्तिमादायैव तस्य प्रातिपदिकसंज्ञा। एवं कृदन्तादावपि वृत्त्यभावेऽपि धातुनिष्ठा प्रत्ययनिष्ठा वा वृत्तिमादायैव प्रातिपदिकसंज्ञा। न चैवं पचति,रामः,छागी, गामानयेत्यादीनामपि प्रकृतिप्रत्ययनिष्ठवृत्तिमादाय प्रातिपदिकत्वं स्यादिति वाच्यम्; कृत्तद्धितसमासाश्चेति सूत्रस्य नियमार्थकतया वारणात्। तथा हि —प्रकृतिप्रत्ययान्तसमुदायस्य चेत्प्रातिपदिकसंज्ञा तर्हि कृदन्ततद्धितान्तयोरेव, पदसमुदायस्य चेत्समासस्यैवेति नियमद्वयेन सुबन्ततिङन्तआबन्तानां गामानयेत्यादिवाक्यानां च प्रातिपदिकसंज्ञाव्यवच्छेदात्। एवं चार्थवत्सूत्रे प्रत्ययपदमावर्त्यैकस्य तस्य प्रत्ययान्तपरतेत्यावृत्तिक्लेशोऽपि न करणीयः, दर्शितेन प्रथमनियमेनैव तत्प्रयोजनस्य वृत्तत्वादित्युक्तम्; तदपि न, कृत्तद्धितसूत्रस्याविधायकत्वे क्विबन्तधातूनां क्विब्लोपे सति धातुभिन्नत्वाभावात्प्रातिपदिकसंज्ञानुपपत्तेः। न च कृदन्तत्वस्यापि तत्राभावेन कृत्तद्धितसूत्रेणापि तस्य

कथं प्रातिपदिकसंज्ञेति वाच्यम्, प्रत्ययलक्षणेन कृदन्तत्वात्। एवमिदंशब्दात्परिमाणेऽर्थे 'किमिदंभ्या वो घः' इति सूत्रेण वतुप्प्रत्यये वकारस्य घकारे च 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इत्यनेन घस्येयादेशे 'इदं किमोरीश्की' इत्यनेनेदं शब्दस्य सर्वस्यैवेशादेशे तस्यापीकारस्य यस्येति चेति लोपे इयदिति प्रत्ययमात्रशेषे तस्य प्रातिपदिकसंज्ञाया इयानिति पुंलिङ्गे इयदिति क्लीबे प्रथमाया रूपम्। अत्र वैयाकरणानामौपनिषदाना च प्रक्रियामाश्रित्य केषाञ्चिच्छ्लोकः—

उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ गतवति विलयं च प्राकृतेऽपि प्रपञ्चे।
सपदि पदमुदीतं केवलः प्रत्ययो यत्तदियदिति मिमीते को हृदा पण्डितोऽपि॥ इति।

तथा चैतस्येयच्छब्दस्य प्रत्ययभिन्नत्वाभावात् प्रातिपदिकसंज्ञा न स्यात्। कृत्तद्धितसूत्रस्य विधायकत्वे तु व्यपदेशिवद्भावेन तस्य तद्धितान्तत्वात् प्रातिपदिकसंज्ञा, तथा सति कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणापत्त्या मूलकेनोपदंशमित्यादीना प्रातिपदिकसंज्ञापत्तिः। तद्धितग्रहणेन तद्धितान्तमात्रग्रहणे बहुगुडादिपदाना प्रातिपदिकसंज्ञानापत्तिश्चेति दोषयोः समासग्रहणस्य नियमार्थत्वाद् वृत्तिमत्त्वादर्थवत्त्वेन पूर्वसूत्रेणैव प्रातिपादिकसंज्ञासिद्धेर्वारणात्। न च समासस्य विशिष्टार्थलाक्षणिकत्वादेव वृत्तिमत्त्वेन प्रातिपदिकसंज्ञा स्यादिति वाच्यम्, लक्षणायाः शक्यसंबन्धरूपतया समासपदशक्यस्याप्रसिद्धौ लक्षणाया अप्यसंभवात्। न च ज्ञाप्यसंबन्धरूपैव लक्षणा न शक्यसंबन्धरूपा, गभीराया नद्या घोष इत्यतो गभीराभिन्ननदीतीरबोधानुपपत्तेः। तथा हि—तत्र गभीरपद नदीतीरलक्षकम्, नद्यामित्यस्यानन्वयापत्तेः, नद्या तीराभेदस्य बाधात्, 'निम्नं गभीरं गम्भीरम्' इति कोषेण गभीरादिपदानां द्रव्यवाचकत्वावगमेन समवायादिना तदर्थस्य तीरेऽन्वयासंभवात्। नदीपदस्य नदीतीरलक्षकत्वे नद्याः पदार्थैकदेशतया ऋद्धस्य राजमातङ्गा इत्यत्रेव तत्र गभीराभेदान्वयस्यासंभवादित्यादिदूषणैः प्रत्येकपदस्य तत्र लाक्षणिकत्वासंभवेन गभीराया नद्यामिति समुदायस्यैव गभीराभिन्ननदीतीरलक्षकत्वस्य वाच्यतया लक्षणायाः शक्यसंबन्धरूपत्वे वाक्यशक्तेरभावेन तदनुपपत्तेः। ज्ञाप्यसंबन्धस्य तथात्वे तु वाक्यज्ञाप्यस्य विशिष्टार्थस्य प्रसिद्धत्वादेवानुपपत्तेरभावात्। अत एव भट्टपादवाचस्पतिमिश्रकल्पतरुकारादिभिरपि वाक्येन वाक्यार्थो लक्ष्यत इत्येव निर्णीतम्। अत एवार्थवादवाक्यानामपि प्राशस्त्यलाक्षणिकत्वं प्राभाकराणामनुमतम्, एकैकपदार्थसंबन्धस्य प्राशस्त्येऽभावेऽपि समुदायसंबन्धसत्त्वात्। लक्षणाहेत्वोः संबन्धानुपपत्त्योरेकपदार्थसंबन्धिनीव समुदायसंबन्धिन्यपि तुल्यत्वादिति नयविवेकटीकाया वरदराजेनाप्युक्तम्। अत एव संक्षेपशारीरककृता यज्ञाद्यधिशब्देन यजमानो लक्ष्यत इति, अथातो

ब्रह्मजिज्ञासेत्यत्र जिज्ञासाशब्देन विचारो लक्ष्यत इति च विवरणाचार्यैरुक्तम्। यज्ञाद्यधि- जिज्ञासाशब्दयोः शक्तत्वलक्षणपदत्वाभावाच्छक्यसंबन्धरूपाया लक्षणायास्तत्रासभवात्। अत एव च सत्य ज्ञानमनन्तं ब्रह्मेत्यत्र तत्त्वमसीत्यत्र च वाक्य एव लक्षणेति वेदान्तैकदेशिनः। अत एव तद् ब्रह्म विजिज्ञासस्वेत्यत्र जिज्ञासया विचारो लक्ष्यते, लक्षणा च छत्रिणो यान्तीत्यत्रैव समुदाय एवेति वेदान्तभूषणकृतः। एवं चैतत्सर्व वाक्यलक्षणापक्ष एवोपपद्यते। सोऽपि ज्ञाप्यसंबन्धस्यैव लक्षणात्वमादृत्यैव। शक्यसंबन्धस्य तथात्वे वाक्ये शक्त्यभावस्य सर्वानुमततया तदनुपपत्तेरिति समासस्याशक्तत्वेऽपि लाक्षणिकत्वादेवार्थवत्त्वेन प्रातिपदिकत्वमिति वाच्यम्; ज्ञाप्यसंबन्धस्य लक्षणात्वेऽपभ्रंशानामपि ज्ञापकतया तेष्वपि लक्षणाप्रसङ्गात्। किञ्च, ज्ञाप्यसबन्धे ज्ञाप्यत्वं वृत्त्या स्वजन्यबोधविषयत्वं स्वजन्यबोधविषयत्वमात्र वा? आद्ये वाक्ये वृत्तेरभावेन तज्ज्ञाप्यस्याप्रसिद्धेर्लक्षणानुपपत्तेः, अन्त्ये च वर्णाना प्रत्येकमप्यन्वयबोधजनकत्वेन तज्ज्ञाप्यत्वस्य पदार्थे सत्त्वात्तत्संबन्धमादाय लक्षणासंभवेनार्थवत्त्वात्प्रातिपदिकसंज्ञाया विभक्त्याद्युत्पत्तिप्रसङ्गात्। किञ्च, एवं सत्येतज्ज्ञाप्यसंबन्धीदमित्याकारकस्यैव ज्ञानस्य लक्षणाज्ञानतया तज्जन्योपस्थितेरेव लक्षणाजन्यत्वात् समवायादिना घटपदज्ञाप्याकाशसबन्धिनोऽप्युपस्थितिसंभवात्तस्यापि तज्जन्यशाब्दबोधविषयत्वापत्तिरिति शक्यसंबन्धस्यैव लक्षणात्वमास्थेयम्, गभीराया नद्यामित्यादौ यत्र यत्र वाक्ये लक्षणा भवतामभिमता तत्र तत्रैकपदस्यैव विशिष्टार्थे लक्षणाऽपरस्य तदर्थतात्पर्यग्राहकतामात्रमित्यस्य वक्तव्यत्वात्। छत्रिणो यान्तीत्यत्र तु न समुदाये लक्षणा, किन्तु छत्रपदस्यैवैकसार्थवाहिवृत्तित्वेन छत्रतदभावयोर्लक्षणा तत एव बुभुत्सितार्थबोधः। युगपद् वृत्तिद्वयोपगमे तु छत्रपदेनैव शक्त्या छत्रस्य लक्षणया तदभावस्योपस्थितेश्छत्रिणस्तदभाववन्तश्च यान्तीति बोधस्योपपत्तिः। अथातो ब्रह्मजिज्ञासेत्यत्र ज्ञाधातोः साध्यावस्थापन्ने ज्ञाने लक्षणा, सन्प्रत्ययस्य विचारे इति स्वीकृत्य "श्रोतव्यो मन्तव्यः" इति श्रुतिजन्यबोधेन सहैतत्सूत्रार्थबोधस्य समानविषयकत्वरक्षायै कर्तव्य इत्यध्याहृत्य ज्ञानाय विचारः कर्तव्य इति तदर्थो नृसिंहाश्रमैर्विवरणटिप्पणतत्त्वविवेकयोर्निर्णीतम्।

वस्तुतो ज्योतिष्टोमः स्वर्गसाधनमित्यत्र साध्यत्वेन स्वर्गस्योपस्थिति विनाऽपि स्वर्गस्य साधनं स्वर्गसाधनमिति षष्ठ्यन्तविग्रहानुसारेण साधनत्वे स्वर्गनिरूपितत्वप्रतिपत्तौ साधनत्वस्य साध्यत्वानियततयोपस्थितत्वात् साधनतानिरूपकत्वाच्च स्वर्गस्यैव साध्यत्वं प्रतीयते, तथाऽत्रापि श्रोतव्य इति श्रुतिसमानार्थत्वायानुवादादिदोषपरिहाराय चाध्याहृतस्य कर्तव्य इत्यस्येष्टसाधनत्वार्थकतयेष्टनिरूपितसाधनताया विचारे ज्ञाने तस्यैवेष्टतयोपस्थितत्वात्तन्निरूपितत्वमेव साधनत्वे निश्चीयेत, ततश्च साध्यत्वमपि तस्यैव प्रतीयेतेति न साध्यावस्थापन्नज्ञाने ज्ञाधातोर्लक्षणेति।

यच्चोक्तं "सुबामन्त्रिते पराङ्गवत्स्वरे" इति सूत्रे समर्थपरिभाषाया अप्रवृत्तौ 'अयमग्ने जरिता', 'ऋतेन मित्रावरुणावृतावृधावृतस्पृशौ' इत्यादावपि पराङ्गवद्भावापत्तिरिति। तदपि न युक्तम्, सुबामन्त्रित इति सूत्रे षष्ठ्यामन्त्रितकारकवचनमिति वार्त्तिकस्यामन्त्रित प्रति षष्ठ्यन्तं यत्कारकं तद्वाचकमित्यर्थकस्य संबन्धादयमित्यस्य ऋतेनेत्यस्य च षष्ठ्यन्तत्वाभावात्तत्सूत्रस्याप्रवृत्तेः। न च पती इत्यादेरामन्त्रितस्य द्रव्यवाचकतया कुतः कारकापेक्षेति वाच्यम्; आमन्त्रितपदार्थान्विततया धातुवाच्या या क्रिया तस्याः कारकत्वापेक्षत्वादामन्त्रितस्यापि परम्परया तदपेक्षत्वानपायात्। एवं समासे विशिष्टशक्तेरनुपगमे पण्डितो ब्राह्मणः, नीलमुत्पलमित्यादौ ब्राह्मणमुत्पलं चोद्दिश्याभेदेन पण्डितादीना विधेयतयाऽन्वयबोध इव पण्डितब्राह्मणो नीलोत्पलमित्यादिसमासेऽपि तादृशान्वयबोधः स्यात्, तत्कारणस्य पण्डितादिप्रत्येकपदशक्तिज्ञानजन्यप्रत्येकार्थोपस्थितेः सत्त्वात्। समासशक्तिस्वीकारे च तज्ज्ञानजन्यायाः पण्डिताद्यभिन्नब्राह्मणादिविषयिण्या विशिष्टोपस्थितेरेव सत्त्वेन पृथगुपस्थित्योरभावान्न तादृशोऽन्वयबोधः। अत एव वषट्कर्तुः प्रथमभक्ष इत्यत्र भक्षमुद्दिश्य प्राथम्यविधेयकान्वयबोधस्य, त्र्यङ्गैः स्विष्टकृत यजतीत्यत्र पशौ विधिप्राप्त. स्विष्टकृद्धोमः प्रधानहविर्भ्यो हृदयादिभ्य एकादशभ्योऽपि कर्तव्यत्वेन प्राप्त इति त्र्यङ्गैरिति वचनेनाङ्गान्युद्दिश्य त्रित्वविधेयताकान्वयबोधस्य च प्रथमभक्षत्र्यङ्गपदाभ्या समासाभ्या पृथगुपस्थित्योरुद्देश्यविधेयभावावगाहिशाब्दबोधकारणीभूतयो रसत्त्वेनानुत्पत्तेः प्राथम्यविशिष्टभक्षान्तरस्य त्रित्वविशिष्टाङ्गान्तरस्यैव च विधेयत्वमिति मीमासासिद्धान्तोऽपि सङ्गतः।

न च यच्छब्दयोगः प्राथम्यमित्यादिना निरुक्तस्योद्देश्यताबोधकस्य ब्राह्मणोत्पलभक्षाङ्गेषु तच्छब्दयोग औत्तर्यमित्यादिना निरुक्तस्य विधेयताबोधकस्य च पण्डितनीलप्राथम्यत्रित्वेषु चाभावादेव नोक्तस्थलेषूद्देश्यविधेयभावेन बोधप्रसङ्ग इति वाच्यम्; पण्डितो ब्राह्मणः, नीलमुत्पलम्, प्रथमो भक्ष इत्यादितोऽपि सति तात्पर्ये ब्राह्मणाद्युद्देश्यताकपण्डितादिविधेयताकस्य बोधस्यानुभविकत्वेन यच्छब्दयोगादेर्व्यभिचारित्वात्। ब्राह्मणाद्युद्देश्यताकपण्डितादिविधेयताके बोधे ब्राह्मणाद्युपस्थापकपदसमभिव्याहृतपण्डितादिवाचकपदज्ञानमेव कारणम्, तस्य चोक्तस्थलेषु निराबाधत्वात्। न च समासेऽपि तत्सत्त्वात्तद्दोषतादवस्थ्यमिति वाच्यम्; अत एव समासघटकप्रत्येकपदाना जहत्स्वार्थताया अस्माभिरुपगमात्। न चोद्देश्यविधेयभावावगाहिशाब्दबोधं प्रत्यसमस्तपदजन्याया उपस्थितेरेव कारणत्वान्नोक्तस्थलेषु तादृशो बोध इति वाच्यम्; दामोदरः पूज्यः, राजपुरुषः सुन्दरः, प्रथमभक्षः कर्तव्य इत्यादौ पीतवासाश्चतुर्भुजः, गङ्गाधरः सर्वेश्वरः, राजपुरुषः, चित्रगुरित्यादौ चानुभविकस्योद्देश्यविधेयभावा-

वगाहिबोधस्यानुपपत्तेः। न च प्रथमभक्ष इत्यादिकं समस्तमेकं पदं तस्य चैकप्रसरत्वान्नैकांशेन भक्षणमुद्दिश्य प्राथम्यविधानमुक्तमेकप्रसरताभङ्गात्। प्राथम्यविशिष्टभक्षान्तरविधानमेव तत्रेति मीमांसासिद्धान्तः। एकस्मिन् पदे विधेयस्य परतन्त्रात्मकस्योद्देश्यस्य प्रधानात्मकस्य चोपस्थापकत्वमव्युत्पन्नं कल्प्येतेत्यस्यैवैकप्रसरताभङ्गपदार्थत्वादिति वाच्यम्, भक्षान्तरकल्पनामपेक्ष्य तथा कल्पनस्यैव युक्तत्वात्। प्रथमो भक्ष इत्यत्रेव प्रथमभक्ष इत्यादिसमासेऽपि पदद्वयस्य सत्त्वाच्चोद्देश्यविधेयभावप्रसक्तेर्दुर्वारत्वात्। न चोद्देश्यविधेयभावावगाहिबोधे विभक्त्यन्तपदद्वयजन्योद्देश्यस्य विधेयस्य चोपस्थितिः कारणम्, समासे प्रथमादिपदानां विभक्त्यन्तत्वविरहान्न तादृशबोध इति वाच्यम्; दधि मधुरमित्यादितस्तादृशस्यैव बोधस्यानुभविकतया दधिपदस्याविभक्त्यन्तत्वेन च तदनुपपत्तेः। न च लुप्तविभक्त्यनुसन्धानेनैव तस्य विभक्त्यन्तत्वमिति वाच्यम्; प्रथमादिपदेष्वपि तदनुसन्धानसंभवात्। न च भक्षमुद्दिश्य प्राथम्यस्याङ्गान्युद्दिश्य त्रित्वस्य च विधानं न युक्तम्, अध्वर्य्वादिभक्षाणामपि तथा सति प्राथम्यापत्तेः, अङ्गानां च बहुत्वेन त्रित्वस्य बाधादिति वषट्कर्तृविशिष्टं भक्षणं स्विष्टकृत्साधनत्वविशिष्टम्, अङ्गं चोद्देश्यमित्येव स्वीकार्यमिति वषट्कर्तुरित्यस्य स्विष्टकृतमित्यस्य च तत्रापेक्षाया आवश्यकत्वान्नैरपेक्ष्यत्याग एव भक्षान्तरादिविधाने बीजमिति वाच्यम्, प्रथमभक्षपदे भक्षाणां त्र्यङ्गपदेऽङ्गानां च विशेष्यतया तत्तद्विशेषविवक्षायामपि राजपुरुषः सुन्दर इत्यत्रेव नैरपेक्ष्यहान्यसंभवात्। उद्देश्यतावच्छेदकावच्छेदेन तत्रैव विधेयान्वयो यत्र न किञ्चिद्बाधकम्, प्रकृते त्वध्वर्य्वादिभक्षणस्य प्राथम्यापत्तिरङ्गाणां बहुत्वमेव च बाधकमिति न तथाऽन्वय इत्यस्य वक्तव्यत्वाच्च। न चैवमुद्देश्यविधेयभावावगाहिबोधस्य समासेऽनभ्युपगमे सप्तदशारत्निर्वाजपेयस्य यूपो भवति, लोहितोष्णीषा ऋत्विजः प्रचरन्ति, यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या, एकं साम तृचे क्रियत इत्यादौ वाजपेययूपारत्निमुष्णीषमवत्तामृचं चोद्दिश्य सप्तदशत्वलौहित्यपञ्चत्वत्रित्वानां विधेयत्वं मीमांसासिद्धान्तसिद्धं व्याहन्येत, सप्तदशादिपदानां समासघटकत्वादिति वाच्यम्; तत्र यूपारत्न्युष्णीषावत्तानामतिदेशप्राप्ततयाऽतिदेशशास्त्रादुपदेशशास्त्रस्य बलवत्त्वादतिदेशशास्त्राकलनात् पूर्वमेवोपदेशशास्त्रेण सप्तदशत्वविशिष्टारत्नियूपलौहित्यविशिष्टोष्णीषपञ्चत्वविशिष्टावत्ताविधेयताकेषु शाब्दबोधेषु जातेषु पश्चादतिदेशवाक्यार्थपर्यालोचनेनारत्नियूपोष्णीषावत्तानां प्राप्ततया विधिरत्यन्तमप्राप्ताविल्युक्त्या तेषु विधेः प्रसरासंभवादप्राप्तेषु सप्तदशत्वलौहित्यपञ्चत्वेष्वेव विधेयत्वव्यवस्थितेः। वषट्कर्तृकर्तृकभक्षणस्य च कुतोऽप्यप्राप्ततया तत्र विधिप्रसरसंभवात्। तृचे क्रियत इत्यत्र तु भावनानुवादेनैव त्रित्वस्य विधानम्, तच्च ऋगाश्रितमेवोपस्थितमिति तथैव लभ्यते।

किञ्च, समासे शक्तेरनुपगमे उद्देश्यविधेयभावावगाहिबोधोपगमे च—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

इति काव्यस्याविमृष्टविधेयांशकत्वात्मकदोषवत्त्वं काव्यप्रकाशकाराद्युक्तं व्याहन्येत, वृथोच्छूनैरित्यनेन बुभुत्सितस्य वृथात्वविधेयकबोधस्यासंभव एव । तस्य दूषकताबीजं तन्निर्वाहश्च विशिष्टशक्तिवादिमते तत्तत्पदार्थनिष्ठविधेयत्वाख्यविषयतासंबन्धेन शाब्दबोधं प्रति तत्तत्पदजन्य-तत्तदर्थनिष्ठमुख्यविशेष्यकोपस्थितेः कारणतया तदभावादेव समासशक्तेरनुपगमे च तादृशकारण-सत्त्वात्तादृशबोधस्य संभवे दूषकताबीजाभावात् । न चैवं निषादस्थपत्यधिकरणीयमीमांसासिद्धा-न्तोऽसङ्गतः स्यात् । तथा हि—समासशक्तेरनुपगमेऽनयैव ऋचा निषादस्थपतिं याजयेदित्यत्र निषादस्थपतिपदे निषादानां स्थपतिरिति षष्ठीतत्पुरुषो निषादश्चासौ स्थपतिरिति कर्मधारयो वेति सन्देहे कर्मधारय एवेति तदधिकरणेन व्यवस्थाप्यते, यतः षष्ठीतत्पुरुषे पूर्वपदस्य षष्ठ्यन्तार्थ-निषादसंबन्धिनि लक्षणाऽऽवश्यकी, नामार्थयोर्भेदान्वयस्य व्युत्पत्तिविरुद्धतया निषादपदार्थस्य स्थपतिपदार्थेऽन्वयासंभवात् । कर्मधारये च निषादपदार्थस्याभेदेन स्थपतिपदार्थेऽन्वयसंभवाल्ल-क्षणाया अनावश्यकत्वादिति लक्षणाकल्पनप्रयुक्तगौरवादेव न षष्ठीतत्पुरुषः, किन्तु कर्मधारय एवेति । समासशक्तेरुपगमे तु निषादस्थपतिपदस्य निषादसंबन्धिस्थपतौ निषादाभिन्नस्थपतौ च शक्तेरेव सत्त्वात् क्व लाघवावकाश इति वाच्यम्, तादृशसिद्धान्तस्योपदर्शितलाघवमूलकत्वाभावात् । वैदिकसमासस्य षष्ठीतत्पुरुषकर्मधारयान्यतरत्वसन्देहे कर्मधारयत्वमेव न षष्ठीतत्पुरुषत्वमित्यादि-लाघवमूलकतात्पर्यज्ञानस्यैव तन्मूलत्वात् । अथवा समासस्य विशिष्टार्थशक्तौ निषादाभिन्नः स्थपतिः समासार्थः, निषादानां स्थपतिस्त्रैवर्णिको निषादभिन्नो वेति सन्देहे निषादभिन्नवर्णो-पस्थित्यकल्पनप्रयुक्तलाघवेन पूर्वस्यैव तत्त्वमित्यस्यैव तन्मूलत्वात् ।

एवं समासशक्तेरनुपगमे चित्रगुरित्यत्र चित्राभिन्नगोस्वामिबोधो दुरुपपादः स्यात् । तथा हि—यदि तत्र गोपदं गोस्वामिलक्षकं तदा गोः पदार्थैकदेशतया चित्रपदार्थस्य तत्रान्वयासंभवः । न च गोपदमेव चित्राभिन्नगोस्वामिलक्षकं चित्रपदं तात्पर्यग्राहकमिति वाच्यम्; एकार्थीभावा-नुपगमे व्यपेक्षाया एव समासप्रयोजकताया वाच्यत्वेन चित्रपदस्य शाब्दबोधीयविषयत्वाप्रयोजकतया गोपदेन निरुक्तव्यपेक्षाया अप्यसत्त्वेन समासानुपपत्तेः । नापि गोपदेन शक्त्या गौर्लक्षणया च

स्वामी बोध्यते, स्वामिनि स्वनिष्ठस्वत्वनिरूपकत्वसंबन्धेन गोरन्वयस्तत्राभेदेन चित्रपदार्थान्वयस्तथा सति नैकदेशान्वयप्रसङ्गो न वा व्यपेक्षाहानिरिति वाच्यम्; युगपद्वृत्तिद्वयानङ्गीकारात्। तदङ्गीकारेऽपि नामार्थयोर्गोस्वामिनोरभेदातिरिक्तेनोपदर्शितसंबन्धेनान्वयासंभवात्। न च चित्रपदस्य गोपदस्य च लक्षणया चित्राभिन्नगोस्वाम्यर्थस्तयोश्च तादात्म्येनैवान्वयः, अत एव बहुव्रीहेः सर्वसमासापेक्षया जघन्यत्वप्रवादोऽपि सङ्गतः, तद्घटकानामखिलानामेव पदाना लाक्षणिकत्वादिति वाच्यम्, तादात्म्येन पदार्थयोरन्वये विरूपेणोपस्थित्योः कारणतया तदभावेनोपदर्शितान्वयस्यासंभवात्। न चैतदर्थं चित्रपदस्य चित्राभिन्नगोस्वाम्यर्थः, गोपदस्य स्वरूपमर्थः, चित्रपदस्यैव वा स्वरूप गोपदस्य चित्राभिन्नगोस्वाम्यर्थ इति चित्राभिन्नगोस्वामित्वस्वरूपत्वावच्छिन्नयोरभेदान्वयो निराबाध एव स्यादिति वाच्यम्, तथा सति गोपदघटकस्यौकारस्य ह्रस्वविधिनोदन्तताया अनुपपत्तेः, गोस्त्रियोरुपसर्जनस्येति सूत्रेणेतरपदार्थान्वितस्वार्थबोधकत्वरूपोपसर्जनत्वाश्रयस्यैव गोपदस्य ह्रस्वताविधानात्, तत्रेतरपदार्थस्य समासाघटकपदार्थात्मकतयैतद्गोपदस्य च समासघटकचित्रादिपदार्थमात्रान्वयिस्वार्थतयोपसर्जनत्वाभावात्।

केचित्त्वत्र पक्षे चित्रापदगोपदयोर्द्वन्द्वैकशेषयोरन्यतरप्रसङ्गो यथा नीलत्वावच्छिन्नार्थकनीलपदघटत्वावच्छिन्नार्थकघटपदयोर्नीलघटयोरभेद इत्यत्र, यथा वा वक्रदण्डं च कुटिलदण्डं चेत्यत्र वक्रदण्डौ कुटिलदण्डौ चेत्यत्र चार्थे द्वन्द्व इत्यनेन द्वन्द्वः, विरूपाणामपि समानार्थानामित्यनेनैकशेषश्चेत्याहुः; तन्न, यत्र पदार्थयोः साक्षादनन्वयस्तत्रैव तयोः प्रसङ्गाद्यथोपदर्शितस्थलयोरेव नीलश्च घटश्चेति विग्रहे समासे च नीलपदार्थघटपदार्थयोः साक्षादन्वयाभावः। एवं वक्रदण्डावित्यादावपि। प्रकृते च चित्रपदार्थगोपदार्थयोरभेदान्वयात् साक्षादेवान्वय इति तयोरप्रसक्तेः। न च गोपदं चित्राभिन्नगोस्वामिलक्षकं चित्रपदं तात्पर्यग्राहकं तथा सति स्वप्रयोज्यविषयतेत्यादिनिरुक्तव्यपेक्षायास्तत्रासत्त्वेऽपि ह्रस्वतापन्नचित्रापदाव्यवहितोत्तरवर्त्तिनस्तादृशगोपदस्यैव तादृशार्थबोधे तात्पर्येणान्वयव्यतिरेकाभ्या च चित्रगुपदजन्यान्वयबोधे चित्रपदाव्यवहितोत्तरगुपदत्वरूपाकाङ्क्षाज्ञानस्य कारणताया अवश्यं वाच्यतया मिथो निरूप्यनिरूपकभावापन्नस्वस्वार्थनिष्ठविषयताशालिशाब्दबोधप्रयोजकाकाङ्क्षाशालित्वरूपाया व्यपेक्षायास्तत्राक्षतत्वात्। स्वार्थत्वमत्र स्वप्रयोज्यविषयताश्रयत्वमेव शाब्दबोधीयविषयताया चित्रपदप्रयोज्यत्वस्योपस्थितिद्वारकस्यासत्त्वेऽपि चित्रपदवृत्तिग्रहं विना तात्पर्यग्राहकताया अपि तत्रासंभवेन तात्पर्यज्ञानद्वारकाकाङ्क्षाघटकत्वेन तस्य सत्त्वादिति वाच्यम्; समासाघटकपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वस्यैवोपसर्जनतया स्वामिनोऽपि गोपदार्थत्वे समासा-

घटकपदस्य तन्निष्ठविषयत्वाप्रयोजकत्वेनोपसर्जनताविरहेण ह्रस्वतानापत्तेरित्यस्योक्तत्वात् । अन्यथा गोपदस्य गोस्वामिनि स्वारसिकलक्षणायामप्युपसर्जनतया ह्रस्वतापत्तेः । एवं गोपदस्यैव शक्त्या लक्षणया च गौः स्वामी चार्थः, स्वामिनि गोः स्वनिष्ठस्वत्वनिरूपकत्वेनान्वयोऽप्येकधात्वर्थयोः संयोगव्यापारयोरनुकूलत्वेनान्वय इव प्रातिपदिकार्थयोरपि न विरुद्धो व्युत्पत्तिवैचित्र्यात् । अत एव युगपद् वृत्तिद्वयाङ्गीकारोऽप्यत्र न विरुद्ध इत्यपि न, तथा सति चित्रगुरस्ति तामानयेत्यादौ तत्पदेन गोर्बोधापत्तेः । प्रधानपरामर्शकतायास्तदादिपदे व्यवस्थापनात् प्राधान्यस्य तत्र तद्वृत्ति-ज्ञानीयमुख्यविशेष्यतारूपत्वाच्छाब्दबोधीयमुख्यविशेष्यतायास्तथात्वे चैत्रेण स्थीयते तमानयेत्यादौ तत्पदेन चैत्रपरामर्शानुपपत्तेः । अथ चैत्रस्य गुरुकुलमित्यादावनेकत्र पदार्थैकदेशे पदार्थान्वयस्य दृष्टत्वात्पदार्थः पदार्थेनान्वेतीत्यादिव्युत्पत्तेरवश्यं सङ्कोचनीयत्वमिति सङ्कोचे चित्रग्वादिसमासा-नपि निवेश्य गोपदस्य गोस्वामिनि लक्षणापक्ष एव साधीयानिति चेत्, भेदान्वयस्य पदार्थैक-देशे बहुधा दृष्टत्वेऽप्यभेदान्वयस्य कुत्राप्यदर्शनेन प्रकृते सङ्कोचासंभवात् । अन्यथा गौर्नित्या, घटो नित्य इत्यादीनामपि प्रामाण्यापत्तेः । तथापि चित्रग्वादिपदेषु सङ्कोचस्याग्रहे प्राप्तमुदकं यमिति विग्रहे प्राप्तोदकेति बहुव्रीहिसमासाद् बुभुत्सितार्थबोधानुपपत्तिरेव ।

तथा हि—कर्तृक्तप्रत्ययान्तप्राप्तपदस्य प्राप्तिकर्तार्थः । उदकपदस्य लक्षणयोदकसंबन्धी । तदेकदेशे उदके प्राप्तिकर्तुरन्वयेऽप्युदककर्तृकप्राप्तिकर्मेति बोधस्यानुपपत्तिरेव । एवं कृतः पाको येनेति विग्रहे कृतपाकेति समासात् स्वकीयकृतिकर्मपाककर्तेति बुभुत्सितार्थबोधस्यानुपपत्तिः, कृतपाकपदयोरुभयोऽप्यशक्तत्वेन लाक्षणिकत्वासंभवात् । न च प्राप्तोदक इत्यत्र धातोः प्राप्तिः, क्तप्रत्ययस्य कर्म कर्ता चार्थः, कर्तर्युदकस्य कर्तुः प्राप्तौ प्राप्तेः कर्मण्यन्वयादुदककर्तृकप्राप्ति-कर्मत्वेन बुभुत्सितस्य ग्रामादेर्बोधः, कृतपाक इत्यत्र च कृधातोः स्वकीयकृतौ, क्तप्रत्ययस्य कर्मणि, घञः संबन्धिनि च लक्षणा; तत्र कृतेर्जन्यत्वेन कर्मणि, कर्मणोऽभेदेन पच्यर्थपाके, तस्य जनकत्वेन संबन्धिन्यन्वयात् स्वकीयकृतिकर्मपाकसंबन्धित्वेन बुभुत्सितस्य चैत्रादेर्बोध इत्यपि न साधु, क्तप्रत्ययस्य कर्मकर्त्रुभयार्थकताया अननुशासनिकत्वात्, प्रत्ययार्थस्य प्रकृत्यर्थमात्रान्वितस्वार्थबोधकत्वस्य व्युत्पत्तिसिद्धतया क्तप्रत्ययार्थे कर्तर्युदकस्यान्वयासंभवात् स्वकृतिकर्मपाकसंबद्धित्वेन चैत्रादेर्बोधे-ऽपि तादृशपाककर्तृत्वेन तरया बोधाच्चैत्रो न पाककर्तेति निश्चयेऽपि कृतपाकश्चैत्र इति वाक्या-द्बोधापत्तेर्विशेषाभावनिश्चयस्य सामान्यबुद्ध्यप्रतिबन्धकत्वात् । एवमुदकपदस्य कर्मणि क्तप्रत्य-यस्य प्राप्तौ धातोरुदककर्तृत्वे लक्षणेत्युदककर्तृकप्राप्तिकर्मेति बोध इत्यप्युदक्षरार्थत्वादनुपादेयम् । एवम्—'जायाप्रतिग्राहितगन्धमाल्याम्' इत्यत्र जायया प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहवाक्याज्जा-

यानिष्ठप्रेरणाविषयीभूतयत्कर्तृकप्रतिग्रहकर्मणी गन्धमाल्ये इत्यस्य; एवमूढो रथो येन, उपहृतः पशुर्यस्मै, उद्धृत ओदनो यस्याः, बहवः पाचका यस्यामित्याद्यषष्ठ्यर्थबहुव्रीहिविग्रहवाक्येभ्यो यदनडुहादिकर्मकोद्वहनकर्म रथः, यद्रुद्राद्युद्देश्यकोपहरणकर्म पशुः, यत्स्थाल्याद्यवधिकोद्धरणकर्म ओदनः, यच्छालाद्यधिकरणकपाकभावनाश्रया बहव इत्यादिकाना रथपश्वोदनपाचकादि-तत्तदर्थविशेष्यकबोधानाम्। समासेभ्यस्तु जायाप्रतिग्राहितगन्धमाल्यामित्यादिभ्यो जायानिष्ठप्रेरणा-विषयीभूतगन्धमाल्यकर्मकप्रतिग्रहकर्त्री, रथकर्मकोद्वहनकर्ता, पशुकर्मकोपहारोद्देश्यः, ओदनकर्म-कोद्धरणावधिः, बहुपाककर्त्रधिकरणमित्याद्यन्यपदार्थविशेष्यकानामेव बोधानामुदयाद्विग्रहवाक्य-घटकतत्तत्पदाना यादृशार्थविषयकबोधजनकत्वं समासघटकेषु तत्तत्पदेषु तद्भिन्नलक्षणबोधजनकत्व-मेव समासशक्तिविद्वेषिभिः कल्पनीयमिति प्रत्येकं भिन्नैव व्युत्पत्तिस्तेषामप्यावश्यकी, समास-शक्तिवादिभिरपि सैव व्युत्पत्तिः शक्तिपदेनाभिधीयत इति नाममात्रे विवादपर्यवसानात्। न चो-पदर्शितस्थलेषु सर्वत्रैवोत्तरपदानामेव बुभुत्सितेषु तादृशतादृशेष्वर्थेषु लक्षणा, यत्रापि पाकादिपदेषु शक्त्यभावस्तत्र तदुत्तरघञादिपदेष्वेव लक्षणा; तथा सत्यपि समासघटकाना पदानां मिथो यथा सामर्थ्य तथा पूर्वमेव दर्शितमिति वाच्यम्; एवं सति समासस्यैवासंभवात्।

अनेकमन्यपदार्थे इति सूत्रस्यानेकं सुबन्तं यद्यन्यपदार्थविशेष्यकबोधजनकं स्यात्तदा तेषा समासः स्यादित्यर्थकतया समासघटकपदार्थस्य विशेष्यत्वे तस्याप्रवृत्तेर्धेन्वादिसमासाघटकपदार्था-नामेव तत्र विशेष्यत्वमिति न समासानुपपत्तिरिति चेदेवं सति गोघटादिपदानामपि 'गच्छति, घटते' इत्यादिव्युत्पत्त्या 'गम्लृ गतौ', 'घट चेष्टायाम्' इत्यादिधातुभ्यो डोसपचाद्यच्प्रत्ययादिभिनिष्पत्तौ डोसादिप्रत्ययानामेव गवाद्यर्थलाक्षणिकत्वसंभवेन विवक्षितार्थस्य तत एव बोधात्, कुत्रापि पदे शक्तिसिद्ध्यसंभवात्। न च गोघटादिपदेषु समुदायशक्तिर्नास्त्येव पाचकादिपदवत्तेषामपि यौगिक-त्वात्, किन्तु मूकादिपदेष्वेव सा, तेषामव्युत्पन्नप्रातिपदिकत्वादिति वाच्यम्; मूं कायतीति योगस्य तत्रापि संभवात् 'कै गै रै शब्दे' इति धात्वनुसारात्। न चैवमर्थवत्सूत्रस्य वैयर्थ्यप्रसङ्गाद् घटादिपदाना प्रत्ययान्तत्वेन तद्विषयत्वाभावादिति तत्सार्थक्यायैव कश्चिदव्युत्पन्नः प्रातिपदिकोऽ-वश्यमेषितव्य इति वाच्यम्; आदितद्धितकाना बहुपट्वादिशब्दाना प्रत्ययान्तत्वाभावेन तत्र तस्य चरितार्थत्वात्। एतेन पूर्वोत्तरपदयोरुभयोरेव तत्र लाक्षणिकत्वमित्यपास्तम्, घटादिपदेष्वपि धातुप्रत्यययोस्तत्संभवात् समुदायशक्तिविलोपतादवस्थ्यात्।

एवं भेरी च पटहश्च, धवश्च खदिरश्चेति विग्रहे भेरीपटहादिद्वन्द्वेभ्यश्चकारार्थस्य समाहारस्येतरेतरयोगस्य च बोधोऽन्यथानुपपन्न इति तत्रापि विशिष्टशक्तिरावश्यकी। न च

विग्रह एव चकारार्थस्य प्रवेशो न समासेऽपीति वाच्यम्; भेरी चेत्यादिवाक्याना विग्रहत्वानुपपत्तेः। समानार्थकसमस्यमानपदसमूहस्यैव विग्रहत्वात्, समासेऽपि चकारार्थबोधस्य सार्वजनीनत्वादन्यथा समासस्यैवानुपपत्तेः, चार्थे द्वन्द्व इति सूत्रेण चार्थे समाहारादौ वाच्य एव द्वन्द्वविधानात्। न च समाहारस्य वादनादिकर्मत्वायोग्यत्वाद् भेरीपटहं वादयेत्यादावन्वयानुपपत्तिरिति वाच्यम्, परम्परयैव तत्र तस्यान्वयसंभवात्, तेजस्त्वादिना साङ्कर्यात्, घटत्वादिजातीना संस्थानवृत्तित्वमते घटमानयेत्यादौ घटादिपदार्थाना परम्परयैव कर्मत्वान्वयस्य नैयायिकैरप्युपगमात्। न च चार्थे द्वन्द्व इति सूत्रस्य नोक्तार्थकता, किन्तु यत्र चकारार्थस्य समाहारादेर्वस्तुतः सत्त्वं तयोः पदार्थयोर्विवक्षाया द्वन्द्व इत्यर्थकतैव। तथा च भेरीपटहयोर्वस्तुतः समाहारसत्त्वादेव समास इति वाच्यम्, तथा सति भू सत्तायामित्यादावपि भूपदसत्तापदार्थयोर्वस्तुतः समाहारसत्त्वाद् द्वन्द्वापत्तेः, अनुशासनादर्थनिर्णयस्य क्वाप्यसभवाच्च।

किञ्चैव सति भेर्याः पटहस्य च साहित्याविवक्षायामपि भेरीपटहं वादयेत्यस्य प्रामाण्यं स्यात्, एवं चार्थस्यैव सत्यव्यावर्तकतया सूत्रे चार्थ इत्यस्य वैयर्थ्यापत्तेः। न च नीलं च तदुत्पलमिति विग्रहे कर्मधारये द्वन्द्वसमासवारणाय तत्, नीलाभिन्न उत्पले चार्थस्य समाहारस्याभावादिति वाच्यम्; एवमपि ग्रामं गतो ग्रामगत इत्यादि द्वितीयातत्पुरुषे ग्रामगतयोः समाहारसत्त्वाद् द्वन्द्वस्य दुर्वारत्वात्। द्वितीयातत्पुरुषस्य द्वन्द्वबाधकतया कर्मधारयस्यापि तथात्वादेव द्वन्द्वस्य तत्रापि वारणे चार्थ इत्यस्य वैयर्थ्यतादवस्थ्यात्। चार्थस्य समाहारादेः समासवाच्यत्वे चोक्तस्थलेषु चार्थस्य वस्तुतः सत्त्वेऽपि तस्याविवक्षणादेव न द्वन्द्व इति विशिष्टार्थसमाहारादौ द्वन्द्वस्य शक्तिरावश्यकी। किञ्च, धवखदिरौ छिन्धीत्यादौ छेदने धवकर्मत्वान्वयानुपपत्तिरपि विशिष्टशक्तिसाधिका, अन्यथा धवप्रकारकान्वयबोधं प्रति धवोपस्थापकपदाव्यवहितोत्तरवर्तिविभक्तिजन्योपस्थितेर्हेतुताया धववन्तं पश्येत्यादौ दर्शने धवकर्मत्वान्वयबोधवारणायावश्यमुपगन्तव्यतया प्रकृते धवपदोत्तरं विभक्तेरभावात्तस्यासंभवात्। विशिष्टशक्तौ चाभ्युपेताया समासार्थसमाहारस्यैव परम्परासंबन्धेन कर्मत्वे प्रकारतया समासोत्तरं विभक्तेः सत्त्वादेवानुपपत्तेरभावात्। न च यथा राजपुरुषादिसमासे पूर्वपदस्य राजादिसंबन्धिनि लक्षणेष्यते, तथा धवखदिरादिद्वन्द्वे खदिरादीनामुत्तरपदानामेव धवखदिरादिसमाहारे लक्षणा। विशेषस्त्वेतावानेव यत्षष्ठीतत्पुरुषादौ क्वचित्पूर्वपदस्य क्वचिच्चोत्तरपदस्य लक्षणा। तत्र समासोत्तरविभक्त्यर्थस्य पूर्वपदार्थेऽन्वयाभावेन तस्य विभक्तिप्रकृत्यर्थत्वविरहेणापि क्षतिविरहेण पूर्वपदस्यैव लाक्षणिकत्वेऽपि दोषाभावात्। द्वन्द्वे तु प्रत्येकपदार्थे विभक्त्यर्थस्यान्वयेन पूर्वपदस्य लाक्षणिकत्वे तस्य

प्रचलितुं कृतसाहसा भवेयुस्तदर्थञ्च प्रभूतसभादिकमनुष्ठायान्दोलनं किञ्चिदभूतपूर्व्वमारचयामासुः। यस्य "स्वदेशि-आन्दोलन"मिति संज्ञा तत एव समुत्पत्येदानीमपि प्रणयादुदाक्रियमाणा विदेशिनोऽधुनाप्यनिशं भीषयति। तत्रैव स्वदेशियुगे तस्मिन्नेवान्दोलने अग्रणीरूपेणायं गोष्पतिकाव्यतीर्थः स्वार्थमविगणय्य केवलदेशसेवामुपलक्ष्य क्षपयामासात्मनोऽमूल्यं समयं जीवनञ्च। एतदर्थञ्च "हाओड़ाहितैषी"ति नामकं सन्देशपत्रं स्वसम्पादकतया प्राचालयत्। तद्द्वारेण च वैदेशिकशासकानां नीतिहीनता अविमृश्यकारिता शासितानामुन्नतिप्रतिबन्धकतेत्यादीनि प्रतिपाद्य प्रतिपाद्य प्राप्तराजद्रोहापवादो राजपुरुषैरर्थेन दण्डितोऽभूत्। वयःपरिणामे पुनः "कायस्थजातितत्त्व"मिति नामकं कायस्थानामुत्पत्तिप्रवृत्त्यादिविषयकं किञ्चित् पुस्तकं विरचयितुमारब्धवान्, सांसारिककर्म्मबाहुल्येन च प्रारब्धमपि तत्कार्य्यमितः पूर्व्वं निःशेषीकर्त्तुं नालमभवत्। परं दैहिकासुस्थतया संसारविरक्तः काशीप्रवासमङ्गीकृत्यापि प्रत्यावृत्य केनचित्कारणव्यपदेशेन, तदेवासम्पूर्णं प्रारब्धं कर्म्म प्रणेतुं कृताध्यवसायः कायपातान्तमचेष्टत। प्रतिकूलदैवप्रतिबन्धकतया चासमाप्तकृत्य एव परलोकं प्रस्थितवान्।

एतेषां गोष्पतिकाव्यतीर्थानां सोदरसंख्याप्रतिपत्तिस्तावन्निपुणकवीनामितत्तातपादानामुपादीयमानादलुप्तवर्णादुद्ध्रियमाना वाचकानां चमत्कारातिशयप्रतानाय प्रतन्यते, यथा—

"कन्ये मदालसासन्ध्ये पुत्रौ भूपतिगोष्पती" इति।

इदानीमत्रभवतो विधवा भार्य्या, तिस्रः कन्याः पञ्च पुत्राश्च वर्त्तन्ते। सहोदरश्चास्य ज्यायान् ज्यावियोगदूनो धनुःखण्ड इवाकाण्डे संघटितेनानेनात्याहितेन स्वस्याङ्गसन्धिरन्धीभूत इव प्रवहता शोकाश्रुप्रवाहेण प्राणमात्रशेषः कथञ्चिद् ध्रियते। शैशवात् प्रभृत्येव प्रवृद्धप्रेमप्रसरः किञ्चिद् ज्यायानपि वयसा सहाध्ययनं सहावस्थानं सह पानाशनं कुर्व्वाणः

स्याविधानेन तस्य प्रकृतित्वाभावात्। तस्यासमासत्वेनाप्रातिपदिकत्वात्। न च विभक्तेः स्वसन्निहितपदार्थान्वितस्वार्थबोधकत्वनियम एवोपेयत इति नोक्तदोषः, खदिरादिपदाना विभक्तिसान्निध्यानपायादिति वाच्यम्, उपकुम्भाद्यव्ययीभावे पूर्वपदार्थ एव विभक्त्यर्थस्यान्वयेन व्यभिचारात्। दधीयद्ददाति, गौरीयती, लक्ष्मीर्विद्यत इत्यादावियदिति मतुबर्थे दधिगोपदोत्तरविभक्त्योरन्वयापत्तेश्च, तयोर्विभक्तिसान्निध्यसत्त्वात्। अरूपाणि द्रव्याणीत्यादौ नञो भेदवल्लाक्षणिकतया रूपभिन्नेषु विभक्त्यर्थलिङ्गसङ्ख्यादेरन्वयानापत्तेश्च, नञो विभक्तिसान्निध्याभावात्। न चानुशासनिक सान्निध्यं विवक्षितम्, तथा च यत्पदोत्तरं या विभक्तिरनुशिष्टा तस्यास्तदर्थान्वितस्वार्थबोधकत्वमेवोपेयत इति नोक्तदोषाणामवकाशः, दधीयद्ददातीत्यादौ विभक्तेरियदादिपदोत्तरमननुशासनात्। अरूपाणि द्रव्याणि, नीलोत्पलम्, धवखदिरावित्यादौ तु समस्यमाननञादिपदोत्तरमेव विभक्तेरनुशासनादिति वाच्यम्, विशिष्टस्य समासस्य प्रातिपदिकसंज्ञाया जायमानाया विभक्तेर्विशिष्टपदोत्तरमेवानुशासनात्। प्रत्येकपदोत्तरं तदननुशासनात् प्रत्येकपदार्थे विभक्त्यर्थान्वयस्यासंभवात्।

अथ प्रकृतित्वं न प्रकृतितात्पर्याधिकरणत्वं विवक्षितम्, किन्तु प्रकृतित्वाश्रयत्वमात्रम्। तच्च समुदाय इव प्रत्येकमप्यक्षत इति नोक्तदोष इति चेत्; तर्हि पङ्कजमानय, दण्डिनं प्रणम, शूलिनं पश्येत्यादौ सति तात्पर्ये लक्षणा विनाऽपि पङ्कदण्डशूलाना विभक्त्यर्थकर्मतायामन्वयसंभवेनानयनप्रणामदर्शनेषु पङ्कादिकर्मकत्वबोधापत्तिः। न चैकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणताया व्युत्पत्तिविरुद्धत्वादेव जनिधात्वर्थे इन्यर्थे च विशेषणाना पङ्कादीना न विभक्त्यर्थेऽन्वय इति वाच्यम्; वह्निमान् धूमादित्यादौ पञ्चम्यर्थज्ञानज्ञाप्यत्वस्य मतुबर्थविशेषणीभूते वह्न्यादावन्वयस्य सर्वानुमततया तादृशव्युत्पत्तेरनङ्गीकारात्। न च प्रकृतित्वं प्रत्ययाव्यवहितपूर्वपदत्वमेव, प्रकृत्यर्थान्वितस्वार्थबोधकत्व प्रत्ययानामिति नियमश्च पूर्वपदार्थप्रधानाव्ययीभावोभयपदार्थप्रधानद्वन्द्वार्द्धपिप्पल्यादितत्पुरुषातिरिक्तस्थल एवोपेयत इति नोपकुम्भमित्यादौ तद्व्यभिचारः, बहुव्रीहौ चोत्तरपद एव लक्षणा। अथवाऽव्ययीभावादावप्युत्तरपद एव लक्षणा, तेनोक्तनियमस्य सार्वत्रिकत्वेऽपि न व्यभिचार इति वाच्यम्; बहुपटुः, सर्वक इत्यादौ बहुच्प्रत्ययाकच्प्रत्ययपूर्वपदत्वस्य पटुशब्दसर्वादिशब्देष्वभावात्तदर्थे बहुजाद्यर्थान्वयानुपपत्तेः, 'विभाषा सुपो बहुच्पुरस्तात्', 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति सूत्राभ्या बहुच्प्रत्ययस्यादावकच्प्रत्ययस्य मध्ये विधानात्, एवं 'व्यतिसे' इत्यत्रोपसर्गस्य तिङ्प्रत्ययाव्यवहितपूर्ववृत्तितया तत् प्रकृतित्वापत्तेश्च। तस्मात् प्रत्ययविधानावधित्वमेव प्रकृतित्वम्। तच्च बहुपटुः, सर्वक इत्यादौ पटुशब्दसर्व-

शब्दयोरप्यक्षतमेव। समासे चोत्तरपदमात्रस्य तथात्वाभावात्तदर्थे प्रत्ययार्थान्वयानुपपत्तिर्दुर्वारैव। एतेन प्रकृत्यर्थत्वं प्रकृतिज्ञानजन्यज्ञानविषयत्वमात्रम्, प्रत्ययपूर्ववृत्तिपदजन्योपस्थितिविषयत्वं वा। तच्चोत्तरपदार्थेऽपि निराबाधम्, द्वन्द्वादावुभयोरेव पदयोः प्रत्ययपूर्वतया तज्जन्योपस्थितिविषयत्वादित्यपि परास्तम्, प्रथमे पङ्कजमित्यादौ पङ्कादेरपि तथात्वप्रसङ्गात्। घटं पश्येत्यादौ घटादिपदात् समवायेनाकाशस्योपस्थितेस्तत्र विभक्त्यर्थान्वयापत्तेश्च वृत्त्या प्रकृत्युपस्थाप्यत्वस्यावश्यविवक्षणीयतया समासे विशिष्टशक्तेरावश्यकत्वात्। द्वितीयेऽपि पङ्कजमानयेत्यादावतिप्रसङ्गस्योक्तत्वात्।

अथ प्रकृत्यर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्योपस्थितिः कारणमिति सामान्यतः कार्यकारणभावो नोपगन्तव्यः, प्रमाणाभावात्। घटः कर्मत्वमित्यादिवाक्याद् घटनिष्ठकर्मत्वान्वयबोधश्च तादृशपदसमभिव्याहारस्य तथाविधान्वयबोधजनकत्वभ्रमसत्त्वे इष्ट एव, घटप्रकारककर्मत्वविशेष्यकान्वयबोधं प्रति घटार्थकपदोत्तरकर्मत्वार्थकविभक्तिजन्योपस्थितिः कारणमिति विशिष्टकार्यकारणभावं वोपगम्य वारणीयः। न चैवमननुगमः, तत्प्रकृतित्वस्यापि तत्प्रत्ययविधानावधित्वरूपतयाऽननुगतत्वात्। प्रकृतित्वस्य कथञ्चिदनुगमेऽपि दण्डेन गामभ्याजेत्यत्र दण्डे कर्मत्वस्य गवि करणत्वस्य चान्वयापत्तेर्दुर्वारत्वात्, दण्डस्य गोश्च प्रकृत्यर्थतायाः कर्मत्वस्य करणत्वस्य च प्रत्ययार्थताया अक्षतत्वात्। अस्माकं तु दण्डादिप्रकारककर्मत्वादिविशेष्यकान्वयबोधं प्रति दण्डाद्यर्थकपदोत्तरकर्मत्वाद्यर्थकविभक्तिजन्याया उपस्थितेः कारणतया तृतीयायाः कर्मत्वार्थकताया द्वितीयायाश्च करणत्वाद्यर्थकताया अभावादुक्तापत्तेरसंभवात्। एवं च समासे उत्तरपदस्य विशिष्टार्थलक्षणाया न विभक्त्यर्थान्वयानुपपत्तिः, तत्तत्पदार्थप्रकारकतत्तद्विभक्त्यर्थविशेष्यकबोधे तत्तदर्थकपदोत्तरतत्तदर्थकविभक्तिजन्योपस्थितेरेव कारणतया तस्यास्तत्रानपायात्। पुरुषमानयेत्यत्र पुरुषपदस्य राजविशिष्टपुरुषार्थलाक्षणिकत्वे तादृशान्वयबोधं प्रति पुरुषपदोत्तरकर्मत्वार्थकविभक्तिजन्योपस्थितेः कारणतायाः सर्वानुमततया तादृशकार्यकारणभावस्यापूर्वत्वविरहात्, क्लृप्तेनैव कार्यकारणभावेन निर्वाहे प्रकृत्यर्थप्रकारकेत्यादिसामान्यकार्यकारणभावस्याप्रामाणिकत्वात्। समासे विशिष्टशक्तिस्वीकारे चोपदर्शितबोधं प्रति राजपुरुषपदोत्तरविभक्तिजन्याया उपस्थितेः कारणत्वमन्यत्राक्लृप्तं कल्पनीयमिति गौरवम्। किञ्च, प्रकृत्यर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्याया उपस्थितेः कारणत्वोपगमे स्तोकं पचति, मृदु पचतीत्यादौ स्तोकमृद्वादिप्रकृत्यर्थस्याभेदेन धात्वर्थपाकादावन्वयानुपपत्तिः, पाकादेः प्रत्ययानुपस्थाप्यत्वात्।

## समासशक्तिवादः

एवं प्रकृतित्वप्रत्ययत्वादीनामननुगततया सामान्यतः कार्यकारणभावग्रहो न संभवत्येवेति चेन्न, सामान्यकार्यकारणभावानभ्युपगमे दण्डिनं पश्येत्यादौ दण्डपदार्थस्य यथेनिप्रत्ययार्थे संबन्धिन्यन्वयस्तथा द्वितीयार्थकर्मत्वेऽप्यन्वयप्रसङ्गात्। दण्डप्रकारककर्मत्वविशेष्यकान्वयबोधे दण्डार्थकपदोत्तरकर्मत्वार्थकविभक्तिजन्योपस्थितेर्विशिष्टकारणतायास्त्वदुपगतायास्तत्रापि सत्त्वात्। न च तदर्थकपदाव्यवहितोत्तरवृत्तित्वं विभक्तौ विशेषणीयम्, ता पश्य, आचार्यकल्पं पूजय, शिवतमं प्रार्थयेत्यादौ द्वितीयाविभक्तेष्टाप्कल्पप्तमप्प्रत्ययैर्व्यवधानात्तदर्थे तदादिपदार्थानां प्रकारतयाऽन्वयानुपपत्तेः। न च प्रत्ययातिरिक्ताव्यवहितत्वं विभक्तौ विशेषणीयं दण्डिमन्तमानयेत्यादौ दण्डादेर्द्वितीयार्थकर्मत्वान्वयस्य तथाप्यवारणात्, तत्र विभक्तेर्मतुप्प्रत्ययेनैव व्यवधानात्। न च दण्डिनं पश्येत्यादौ दण्डपदाम्पदयोरसत्यभावादेव न तदर्थयोरन्वय इति वाच्यम्, पदयोरव्यवधानस्यासत्तिरूपत्वे गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादावपि गिरिरग्निमान् भुक्तं देवदत्तेनेत्याकारकयोर्बोधयोस्तात्पर्यविषयत्वे सर्वानुमततया तदनुपपत्तेः, पदजन्योपस्थितीनामेवाव्यवधानमासत्तिरित्यस्यैव वाच्यतया तस्य च गिरिर्भुक्तमित्यादाविव दण्डिनमित्यत्रापि समूहालम्बनोपस्थितिमादायाक्षतत्वात्। अन्यथा वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यं भगवतश्चरणारविन्दं भजेतेत्यादावपि पदानामव्यवधानाभावेनान्वयबोधो न स्यात्। प्रकृत्यर्थप्रकारकबोधे प्रत्ययजन्योपस्थितेः कारणत्वे तु प्रकृत्यर्थत्वस्य प्रकृतित्वपर्याप्त्यधिकरणपदार्थत्वरूपस्य विवक्षणीयतया दण्डिनं पश्येत्यादौ दण्डादिपदस्याम्प्रकृतित्वपर्याप्त्यधिकरणतया तदर्थे तदर्थान्वयासम्भवात्।

किञ्च, सामान्यकार्यकारणभावानुपगमे काष्ठं तण्डुलः पचति, रामो बाणो हतो बालीत्यादावपि करणत्वकर्मत्वकर्तृत्वसंबन्धैः काष्ठबाणतण्डुलरामपदार्थाना पाकहननादिक्रियाऽन्वयः प्रसज्येत, विशिष्टकार्यकारणभावाना कर्मत्वादिविशेष्यताघटितत्वात्, कर्मत्वादीना संसर्गतया भाने तदपेक्षाविरहात्। अत एव भवन्मते स्तोकं पचतीत्यादौ स्तोकादीना द्वितीयार्थमद्वारीकृत्य साक्षादेव पाकादिक्रियाऽन्वयोऽप्युपपन्नः। अस्मन्मते च स्तोकमिति द्वितीयार्थभेद एव स्तोकादेरन्वय इति तस्य प्रत्ययोपस्थाप्यत्वादेव नानुपपत्तिः।

नन्वभेदातिरिक्तसंसर्गेण नामार्थप्रकारकान्वयबोधं प्रति तत्तदुत्तरसार्थकविभक्तिजन्योपस्थितेः कारणत्वात् काष्ठं तण्डुलः पचतीत्यादौ नोक्तान्वयबोधपत्तिस्तस्य प्रकारतया पाकादौ सत्त्वेन सार्थकविभक्तिजन्योपस्थितेस्तत्राभावात्। स्तोकमिति द्वितीयाया अभेदार्थकताया अस्माभिरुपगमादिति चेन्न, दण्डिनं चक्रिणं वा पश्येत्यादौ व्यभिचारात्। दण्ड-

प्रकारकान्वयबोधस्येन्यर्थे सत्त्वादिनेर्विभक्तित्वविरहात्। विभक्तिपदस्थाने प्रत्ययपदप्रक्षेपेणैतद् व्यभिचारवारणेऽपि दधीयद्ददातीत्यादौ मतुबर्थे दधिपदार्थान्वयापत्तेः, इयदिति मतुप्प्रत्ययस्य दधिपदोत्तरत्वात्। तन्नामविहितत्वेन प्रत्ययस्य विशेषणीयत्वे समासेऽपि प्रत्येकपदोत्तरं विभक्तेरविधानेनोत्तरपदार्थस्य विभक्त्यर्थेऽनन्वयतादवस्थ्यम्, तथा च प्रकृत्यर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्योपस्थितिः कारणमिति सामान्यकार्यकारणभाव आवश्यकः।

यच्चोक्तं प्रकृतित्वप्रत्ययत्वादीनामननुगतत्वेन तादृशकार्यकारणभावज्ञानासंभव इति; तदपि न, यथा पितृत्वपुत्रत्वादीनामननुगमेऽपि स्वपितृभ्यः पिता दद्यादित्यादितश्चैत्रपितृभ्यश्चैत्रो दद्यान्मैत्रपितृभ्यो मैत्रो दद्यादिति सर्वोपसंहारेण बोधः, यथा वा दारत्वसत्वयत्वादीनामननुगमेऽपि—'ऋतौ भार्यामुपेयादेव', 'ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति' इत्यादिवाक्येभ्यश्चैत्रीयतद्दारसंबन्धितदृतौ चैत्रस्तान् दारानभिगच्छेत्, चैत्रस्तद्दारीयतदृतुसमानकालीनगमनमकुर्वन् प्रत्यवैतीत्याद्याकारकोऽन्वयबोधस्तथा तत्तत्प्रकृतित्वादीनामननुगमेऽपि प्रकृत्यर्थप्रकारकान्वयबोधं प्रतीत्यादितः सर्वोपसंहारेण कार्यकारणभावग्रहसंभवात्। स्वपितृभ्य इत्यादौ स्वत्वत्वपितृत्वत्वादीनामनुगततया तान्येव स्वरूपसन्त्युपलक्षणीकृत्य तदादिपदवच्छक्तिग्रहे योग्यतावशाद्विशिष्टपदार्थबोध इति चेत्तर्हि प्रकृतित्वं स्वरूपसदनुगमकमादाय प्रकृतेऽपि शक्तिग्रहः सुघटः। न चैवं गम्यादिधातोः संयोगव्यापारोभयार्थकत्वमिति मते व्यापारसंयोगादीनां कथमन्वयो व्यापारस्य प्रत्ययानुपस्थाप्यत्वादिति वाच्यम्; एकस्य धात्वर्थस्यापरत्र तस्मिन्नन्वये गम्याद्येकधातुजन्योपस्थितेरेव कारणत्वोपगमात्, अत एव पश्य नृत्यतितराम्, पचतिकल्पमित्यादौ समुदायशक्तेरभावेऽपि धात्वर्थभावनया सह यथा धात्वाख्यातार्थयोरन्वयस्तथा तरबाद्यर्थस्यापीति सिद्धम्।

यच्च पुरुषमानयेत्यादौ पुरुषपदस्य राजसंबन्धिपुरुषलाक्षणिकत्वे राजसंबन्धिपुरुषकर्मकान्वयबोधे क्लृप्तेन कार्यकारणभावेनैव निर्वाहादतिरिक्तकार्यकारणभावाकल्पनेन लाघवमिति; तदपि न, समासेऽपि विशिष्टशक्तिभ्रमात्तादृशबोधस्य जायमानत्वात्तत्रास्मदभिमतकार्यकारणभावस्य भवतामप्यावश्यकतयाऽक्लृप्तकल्पनाया अभावात्। तस्मादुत्तरपदमात्रस्य प्रत्ययविधानावधित्वरूपप्रकृतित्वाभावात्तदर्थे विभक्त्यर्थान्वयासंभवात् समासे शक्तिर्दुर्वारा।

यदपि राजपुरुषादिषष्ठीतत्पुरुषसमासे राजादिपूर्वपदस्यैव राजसंबन्धे राजसंबन्धिनि वा लक्षणामुपगम्य स्वरूपसंबन्धेनाभेदसंबन्धेन वा तयोः पुरुषेऽन्वयाद् बुभुत्सितार्थविषयकबोधोपपत्तेः समासे विशिष्टशक्तिर्नोपगन्तव्येति; तदपि न, राजपदस्य राजसंबन्धे लक्षणोपगमे तस्याभेदाति-

रिक्तेन स्वरूपसंबन्धेन पुरुषेऽन्वयस्याभेदातिरिक्तसंसर्गकप्रातिपदिकार्थप्रकारकबोधे विभक्तिजन्योपस्थितेः कारणतया पुरुषस्य विभक्त्यनुपस्थाप्यत्वेनासंभवात्। अन्यथौदनः पचतीत्यादावपि कर्मतासंसर्गेणौदनस्य पाकेऽन्वयसंभवात्तद्वाक्यस्यापि प्रामाण्यापत्तेः। अभेदसंसर्गकप्रातिपदिकार्थप्रकारकान्वयबोधे च प्रातिपदिकजन्याया उपस्थितेः कारणतया तत्र तस्याः सत्त्वाद्राजसंबन्धः पुरुष इत्याकारकान्वयबोधस्यापत्तेश्च। न चैवं नीलो घट इत्यत्र नीलपदार्थघटपदार्थयोरभेदान्वयबोधानापत्तिः, विशेषणविभक्तेस्तत्र साधुत्वमात्रार्थकतया घटरूपप्रातिपदिकार्थ एव नीलपदार्थस्याभेदेनान्वयात्। न च राजपुरुषादिसमासे राजादिपदबोध्यराजसंबन्धप्रकारकबोधे पुरुषादिपदजन्योपस्थितेः, राजपदाव्यवहितोत्तरपुरुषादिपदत्वरूपाकाङ्क्षाज्ञानस्य च कारणत्वान्तरमुपगम्यते, ओदनः पचतीत्यादौ च स्वन्तौदनपदजन्योपस्थितेस्तादृशसमभिव्याहाररूपाकाङ्क्षाज्ञानस्य च न कारणत्वमुपगम्यते व्युत्पत्तिवैचित्र्यादिति नोक्तदोषावकाश इति वाच्यम्, तथा सति व्युत्पत्त्यन्तरकल्पनामपेक्ष्य शक्तिकल्पनाया गौरवविरहेण तस्या एव युक्तत्वापातात्। राजपदशक्यार्थस्य राज्ञः स्वत्वसंबन्धेनैव पुरुषेऽन्वयस्यैव सति संभवात् संबन्धलक्षणा नोचिता, व्युत्पत्तिवैचित्र्यादेव। ओदनः पचतीत्यादावोदनादेः कर्मत्वसंबन्धेन पाकादावन्वयापत्तेरसंभवादिति तु न वाच्यम्; समासस्य विग्रहसमानार्थताप्रवादरक्षायै तस्या उपगमात्, विग्रहे षष्ठ्याः स्वत्वार्थकत्वात्। तत्रापि षष्ठ्यास्तात्पर्यमात्रग्राहकत्वेन राजपदार्थस्य स्वत्वसंबन्धेनैवान्वय इति चेत्तर्हि समासेऽपि तथैवान्वयः क्षतिविरहात्। राजसंबन्धिनि राजपदस्य लक्षणा, तस्याभेदेनैव पुरुषेऽन्वयाद् व्युत्पत्त्यन्तरमपि च तत्र कल्पनीयमिति पक्षोऽपि न युक्तः, तथा सति समानाधिकरणतत्पुरुषस्यैव कर्मधारयत्वाद् राज्ञः पुरुष इति विग्रहे राजपुरुषादिषष्ठीतत्पुरुषस्यापि कर्मधारयत्वापत्तेः, सामानाधिकरण्यस्याभेदसंबन्धावच्छिन्नतत्पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वात्मकत्वात्। न च समासात् पूर्वं विग्रहवाक्याद्यत्समासघटकयोः पदयोरभेदेन स्वार्थान्वयस्तस्यैव समासस्य कर्मधारयत्वम्, यत्र च तयोर्विभक्त्यर्थमन्तराकृत्याभेदातिरिक्तसंसर्गेणान्वयस्तस्य षष्ठीतत्पुरुषत्वम्, वाक्ये विग्रहत्वं च समासघटकतत्तत्पदाव्यवहितोत्तरविभक्तिलोपविधायकशास्त्रस्मारितविभक्तिमत्स्वघटकपदसजातीयपदघटितत्वम्, कर्मधारयस्य समानविभक्तिकपदघटितं नीलश्चासौ घट इति विग्रहवाक्यम्, षष्ठीतत्पुरुषस्य च विरुद्धविभक्तिमत्पदघटितं राज्ञः पुरुष इत्यादिकं विग्रहवाक्यम्, प्रकृते विग्रहवाक्यात् स्वत्वसंबन्धेन राजप्रकारकस्य स्वरूपसंबन्धेन राजनिरूपितस्वत्वप्रकारकस्य वाऽन्वयबोधस्यैव जननादभेदसंसर्गकबोधस्याजननान्न कर्मधारयत्वमिति वाच्यम्; नित्यसमासेषु कुपुरुषसुपुरुषसुजनदुर्जनातिवेलोद्विद्यादिषु विग्रहस्याभावेन, भावे वा तस्यास्वपदत्वेन तेषु व्याप्तेः।

तथा हि—कुत्सितः पुरुषः, प्रकृष्टः प्रपतितो वा पुरुषः, शोभनो जनः, दुष्टो जनः, वेलामतिक्रान्तः, विद्यामुद्गत इत्यादीना समासाघटकपदकानामेवान्वयबोधजनकत्वात्, तेषा निरुक्तविग्रहत्वाभावेनोपदर्शितलक्षणस्य तेष्वसत्त्वात्। कु सु पुरुष सु इत्याद्यलौकिकविग्रहवाक्यानामन्वयबोधाजनकत्वात्। कस्मिन् समासे कीदृशो विग्रह इति संशयेऽर्थविवक्षानुसारेणैव समासपूर्वावस्थायाः कल्पनीयतया राजपुरुषादिष्वर्थस्याविलक्षणत्वे विग्रहवाक्यभेदस्य निश्चेतुमशक्यत्वाच्च।

न च यत्र समासे समासघटकपदार्थस्य विशेष्यत्वे सति समासघटकयोः पदयोः पूर्वपदोत्तरप्रयोगयोग्यषष्ठ्यर्थसबन्धावच्छिन्नलक्षणयैव सामानाधिकरण्यमस्ति तस्य षष्ठीतत्पुरुषत्वमेव न कर्मधारयत्वम्। अत्र पञ्चाना मूलाना समाहारः पञ्चमूलीति समाहारद्विगोः कर्मधारयत्ववारणाय सत्यन्तम्, तत्रोत्तरपदस्यैव पञ्चाभिन्नमूलसमाहारलक्षकतया पञ्चपदमूलपदयोर्विभक्त्यर्थसबन्धाश्रये लक्षणा विनैव सामानाधिकरण्यात्। सत्यन्तोपादाने च पञ्चपदस्य मूलपदार्थमूलान्तर्भावेणैव मूलपदसामानाधिकरण्यान्मूलस्य च मुख्यविशेष्यत्वाभावात्। पञ्चपदप्रयोज्याभेदसबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावन्मूलरूपार्थमुख्यविशेष्यिकाया उपस्थितेर्मूलपदादनुदयात्।

न चोत्तरपदस्यैव तत्र विशिष्टार्थलाक्षणिकत्वमिति पञ्चपदस्य शब्दबोधीयाया उपस्थितीयायाश्च विषयताया अप्रयोजकत्वात्तन्निरूपितसामानाधिकरण्यं कथं मूलपदे संभवतीति वाच्यम्, उपस्थितीयविषयत्वाप्रयोजकत्वेऽपि तात्पर्यग्राहकतया शाब्दबोधीयविषयताप्रयोजकत्वात्। अनुगमश्च पदविशिष्टपदत्वं कर्मधारयत्वम्, पदे पदवैशिष्ट्यं स्वप्रयोज्याभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावन्निष्ठमुख्यविशेष्यताकोपस्थितिजनकत्व-स्वविशिष्टपदनिरूपितसामानाधिकरण्याभ्याम्, अत्र च वैशिष्ट्यं स्वतादात्म्य-स्वोत्तरप्रयोगयोग्यविभक्त्यर्थावच्छिन्नलाक्षणिकत्वाभ्यामिति वाच्यम्, परमसुन्दरः, महाकविः, महाविज्ञ इत्यादिकर्मधारयेष्वव्याप्तेस्तत्राभेदेन परमस्य महतश्च सुन्दरकविविज्ञपदार्थैकदेशेषु सौन्दर्यकवित्वविज्ञत्वेष्वेवान्वयात्, परमादिपदप्रयोज्याभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावत्सौन्दर्यादिमुख्यविशेष्यताकोपस्थितिजनकत्वस्य सुन्दरादिपदेष्वभावेन प्रथमसंबन्धस्याभावात्।

न च पञ्चमूलीत्यादेः कर्मधारयत्ववारणाय द्वितीयसंबन्धघटकं सामानाधिकरण्यं स्वप्रयोज्योपस्थितीयमुख्यविशेष्यताप्रयोज्याभेदसबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकत्वमेव वाच्यम्, तात्पर्यमात्रग्राहकपञ्चपदस्य शाब्दबोधीयविषयताप्रयोजकत्वेऽप्युपस्थितीयविषयताप्रयोजकत्वान्न स संबन्धस्तत्र, परमसुन्दर इत्यादौ परमादिपदप्रयोज्यतादृशविशेष्यताप्रयोजकत्वस्य सुन्दरादिपदे सत्त्वं निराबाधमिति नोक्तदोषाणामवकाश इति वाच्यम्, तात्पर्यग्राहकताया व्यर्थत्वकल्प-

नया तदपेक्षयैकदेशान्वयस्यैव सोढव्यतया परमसुन्दर इत्यादाविव पञ्चमूलीत्यत्रापि पञ्चपदस्य मुख्यार्थकताया मूलपदस्य समाहारलक्षकतायाश्चोपगमेन द्वितीयसंबन्धस्यापि निराबाधत्वादतिव्याप्तितादवस्थ्यात्। यथा द्वन्द्वस्य समाहारलक्षकत्वे भेरीपटहं वादयेत्यादौ समाहारस्य वादनकर्मत्वान्वयायोग्यतया तत्प्रयोगानुपपत्तेर्द्वन्द्वस्य न समाहारलक्षकत्वं तथा पञ्चमूलीं छिन्धीत्यादीनामप्यप्रामाण्यप्रसङ्गभिया द्विगोरपि न समाहारलक्षकत्वम्, पञ्चाभिन्नमूलसमाहारस्य छेदनकर्मत्वान्वयायोग्यत्वात्।

न चैवं पञ्चानां खट्वानां समाहारः पञ्चखट्वीत्यादौ खट्वापदस्यापि मुख्यार्थकत्वे समाहारविशेषणत्वाभावेनोपसर्जनताविरहेण 'गोस्त्रियोरुपसर्जनस्य' इति सूत्रेण खट्वापदस्य ह्रस्वत्वाप्राप्तावदन्तत्वाभावेन द्विगोरिति सूत्रेण ङीब् न स्यादिति वाच्यम्, द्विगोरपि ह्रस्वविधेः स्वातन्त्र्येण कल्पनीयत्वात् कल्पनायाः प्रयोगानुसारित्वादिति मते तु पुनरपि पञ्चमूलीत्यादावतिव्याप्तिः। एतेन पञ्चमूलीत्यादिसमाहारद्विगोः संख्यावाचकपदपूर्वकत्वनियमात्तस्य च शक्त्यैव संख्याबोधतात्पर्यविषयत्वात् स्वनिष्ठसंख्यानिरूपितशक्तिप्रयोज्यस्वाविषयकबोधजनकत्वरूपं किंचिदभिन्नत्वं संबन्धघटकवैशिष्ट्यनियामकं तृतीयं संबन्धं प्रवेश्य तत्रातिव्याप्तिर्वारणीया। त्रिखट्वादिकर्मधारये त्र्यादिपदस्य शुण्ठीपिप्पलीमरिचपर्याप्तत्रित्वावच्छिन्नलाक्षणिकतया न तत्राव्याप्तिः। द्वौ गार्ग्यौ वंश्यौ द्विगार्ग्यम्, द्वयोर्मुन्योः समाहारो द्वियमुनमित्याद्यव्ययीभावे त्र्यादिपदस्य लाक्षणिकत्वाभावादेवातिव्याप्त्यनवकाशः। एवं यत्समासत्वावच्छेदेन स्वघटकपदशक्यार्थस्य मुख्यविशेष्यत्वाभावस्तदन्यत्वम्, यत्समासत्वसामानाधिकरण्येन स्वघटकपदशक्यार्थस्य मुख्यविशेष्यत्वम्, तत्त्वं वा कर्मधारयलक्षणे निवेश्य पञ्चमूलीत्यादावतिव्याप्तिर्वारणीया, समाहारद्विगोर्नियमतोऽन्यपदार्थप्रधानकत्वादित्यादिकमपास्तम्, प्रथमे एकपुरुषादिकर्मधारयेऽप्येकपदस्य शक्त्यैव संख्याबोधकत्वादव्याप्तेश्च, द्वितीये तृतीये च लाक्षणिकोत्तरपदके सुन्दरनीलादिकर्मधारयेऽव्याप्तेश्च। एवं संबन्धघटकवैशिष्ट्यनियामकद्वितीयसंबन्धघटकलक्षणायां स्वोत्तरप्रयोगयोग्यविभक्त्यर्थावच्छिन्ननिरूपितत्वानुपादाने नीलरूपशक्तनीलपदस्य नीलरूपविशिष्टलाक्षणिकत्व एव घटादिपदसामानाधिकरण्यसंभवान्नीलघटादिकर्मधारयेऽव्याप्तिः स्यादिति तदुपादानम् तथा सति नीलपदस्य तादृशलाक्षणिकत्वाभावात्। एवं च राजपुरुषादिपदराजादिपदानां यत्र स्वत्वसंबन्धेन राजविशिष्टत्वावच्छिन्ने लक्षणा तत्र राजादिपदस्यापि तादृशलाक्षणिकत्वविरहात्तस्य कर्मधारयत्वं स्यात्। तत्रेष्टापत्तावपि राज्ञः पुरुष इत्यादिविग्रहे राजपुरुषादिसमासघटकानामपि राजादिपदानां राजादिसंबन्धिनि लक्षणां विनाऽपि पुरुषेऽभेदान्वययोग्यतया द्वितीयसंबन्धस्यापि सत्त्वात् कर्मधारयत्वापत्तिः।

न च सामानाधिकरण्यमत्र न स्वार्थभेदान्वयबोधप्रयोजकतामात्रम्, किन्तु स्वप्रयोजक-बुबोधयिषाविषयो यः स्वार्थस्तदभेदान्वयबोधप्रयोजकत्वमेव ऽथमवैशिष्ट्यघटको द्वितीयः संबन्धः। तत्र पदे पदवैशिष्ट्यंपूर्ववत्, अर्थे पदवैशिष्ट्यं च स्वप्रयोजकबुबोधयिषाविषयत्व-स्वनिष्ठ-सङ्केतनिरूपकत्वाभ्याम्। प्रकृते राजरूपार्थस्याभेदान्वयबोधप्रयोजकतायाः पुरुषपदे सत्त्वेऽपि वक्तृबुबोधयिषाविषयीभूतराजसंबन्धिरूपार्थभेदार्थस्य विभक्त्यर्थसंबन्धवति लक्षणा विनाऽसभवान्न राजपदनिरूपितमेतादृशं सामानाधिकरण्य पुरुषपदेऽस्तीति वाच्यम्; यत्रैकत्वविशिष्टनीलाद्यभिन्न-घटादिबोधेच्छया नीलघटादिकः कर्मधारयो युक्तस्तत्र निरुक्तसामानाधिकरण्यस्य स्वोत्तरप्रयोग-योग्यप्रथमार्थकत्वावच्छिन्ने नीलपदलक्षणा विना निर्वाहसभवेनाव्याप्तेः।

न च विभक्त्यर्थे स्वार्थान्वितत्वं विशेषणीयम्, तथा च स्वविशिष्टार्थलाक्षणिकत्वाभाव एव वैशिष्ट्यनियामकः संबन्धः, अर्थे स्ववैशिष्ट्यं स्वार्थान्वितत्व-स्वोत्तरप्रयोगयोग्यविभक्ति-वाच्यत्वाभ्याम्। प्रकृत एकत्वावच्छिन्ननील एव नीलपदस्य लक्षणा न तु नीलान्वितैकत्वावच्छिन्न इति नाव्याप्तिरिति वाच्यम्, नीलवृत्त्येकत्वावच्छिन्नलाक्षणिकनीलपदघटितकर्मधारयेऽव्याप्तेः। एवं विभक्तौ स्वोत्तरप्रयोगयोग्यत्वं न स्वप्रकृतिकत्वम्, राजादिपदोत्तरं विभक्तेरभावेन तत्र तस्याभावात्। स्वोत्तरत्वप्रकारकानुसन्धानविषयत्वं च तत्तत्समासे तत्तद्विभक्तेरेव लुप्तत्वेन समासविशेषकर्मधारयत्वादिज्ञानं विना नीलोत्पलराजपुरुषादिघटकनीलादिपदोत्तरं सुर्ङस् वेत्यादिविशेषनिश्चयस्यासंभवेन कर्मधारयादिलक्षणे तादृशविशेषणप्रवेशासंभवात्। कर्मधारयत्व-ज्ञान एव नीलादिपदोत्तरं सुरित्यादिनिश्चयसंभवात्कर्मधारयत्वज्ञानस्य तल्लक्षणज्ञानपूर्वकत्वात्। एवं समासात्पूर्वं यत्र पदयोस्तुल्यविभक्तिकत्व तत्रैव कर्मधारयत्वमित्यपि न साधु, समासार्थ-विवक्षानुसारेणैव पूर्वावस्थायाः कल्पनीयतया तत्पुरुषकर्मधारयसमासाभ्या भवन्मतेऽविलक्षणस्यैव बोधस्य जननाद्राजपुरुषादिसमासे षष्ठ्यन्तर्भावेणैव पूर्वावस्थेति कल्पस्यासंभवात्। समासे विशिष्टशक्तिस्वीकारे च शक्त्या पूर्वपदार्थाभेदविशिष्टोत्तरपदार्थबोधकसमासस्यैव कर्मधारयतया स्वरूपेण राजादिनिरूपितस्वत्वादिसंबन्धवत्पुरुषबोधकस्य राजपुरुषादिसमासस्यातथात्वान्न कर्मधारयत्वम्। न च तस्य कर्मधारयत्वेऽपि का क्षतिरिति वाच्यम्; षष्ठीतत्पुरुषकर्मधारययोः स्वरभेदानुपपत्तेः।

न च राजपुरुषादिसमासाना कर्मधारयत्ववारणाय राजादिपदस्य मुख्यार्थकतैवोपेया तदर्थस्य राज्ञः स्वत्वादिसंबन्धेनैव पुरुषादावन्वयेन तेषामभेदान्वयबोधौपयिकत्वाभावादेव न कर्मधारयत्वप्रसक्तिः। न च विशेष्यतासंबन्धेन नामार्थप्रकारकाभेदातिरिक्तसंसर्गकबोधे प्रत्ययजन्यो-

पस्थितेर्विशेष्यतासंबन्धेन कारणतया स्वत्वसंबन्धेन राजप्रकारकान्वयबोधस्य विशेष्यतया पुरुषे उत्पत्तिर्न संभवति, विशेष्यतया प्रत्ययजन्योपस्थितेरभावात्, अन्यथा राजा पुरुषः, तण्डुलः पचतीत्यादावपि राजतण्डुलादेः स्वत्वकर्मत्वादिसंबन्धेन राजतण्डुलादावन्वयप्रसङ्गादिति वाच्यम्; राज्ञः पुरुष इत्यादौ षष्ठ्यर्थत्वेनाभिमतस्य संबन्धस्यापि संबन्धात्मकनामपदार्थतया तस्यापि स्वरूपसंबन्धेन प्रकारत्वानुपपत्तेः। तन्नामपदजन्यतन्नामार्थप्रकारकमेदान्वये तादृशो-पस्थितेः कारणत्वोपगमेनैतद्दोषवारणेऽपि राजसंबन्धः प्रमेयो राज्ञः पुरुष इत्येतद्वाक्यद्वयविषयक-समूहालम्बनज्ञानजन्यान्वयबोधे सबन्धपदार्थविभक्त्यर्थसंबन्धस्य पुरुषेऽन्वयानुपपत्तेः। तद्वारणाय प्रत्ययजन्यतत्तदर्थोपस्थित्यजन्यत्वस्य तन्नामार्थप्रकारकबोधे विशेषणत्वेऽपि यत्र राजा पुरुष इत्यादौ पुरुषपदवृत्तिज्ञानजन्यपुरुषोपस्थितिः षष्ठ्यादिवृत्तिज्ञानजन्यस्वत्वादिविषयिणी समूहालम्बना-त्मिकैव जाता तत्र तस्याः प्रत्ययजन्याया विशेष्यतया पुरुषे सत्त्वात्तत्तादृशबोधापत्तेः।

न च प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्ध एव कारणतावच्छेदकत्वेनोपेय इति समूहा-लम्बनोपस्थितीयविशेष्यतायाः स्वत्वादिनिष्ठाया एव प्रत्ययजन्यतावच्छेदकत्वात् पुरुषे तस्या अभा-वान्नोक्तापत्तिरिति वाच्यम्, ज्ञानभेदेन विषयताभेदानुपगमेन यत्र ङसादिप्रत्यये पुरुषनिरू-पितायाः शक्तेर्भ्रमो लक्षणाया वा ज्ञानं तत्र पुरुषविशेष्यताया अपि प्रत्ययजन्यतावच्छेदकत्वेन प्रकृतेऽपि तस्यास्तथात्वानपायात्। न च स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपित-विशेष्यताविशिष्टविशेष्यतासंबन्धेनैवोपस्थितेर्हेतुता वाच्या, विशेष्यताया विशेष्यतावैशिष्ट्यं सामानाधिकरण्येन, तथा चोक्तसमूहालम्बनोपस्थितीयपुरुषनिष्ठविशेष्यतायास्तादृशत्वाभावान्ना-पत्तिरिति वाच्यम्, प्रत्ययत्वस्यानुगतानतिप्रसक्तस्य दुर्वचतया तादृशकार्यकारणभावासंभवात्, धर्मविशिष्टत्वादिना कथञ्चित्तदनुगमेऽपि राजसंबन्धः पुरुष इत्यादौ संबन्धादिपदे ङस्पदत्वादि-भ्रमदशायां स्वत्वादिविशेष्यकोपस्थितेरेव ततो जायमानत्वाद्राज्ञः पुरुष इत्यादाविव राजादि-पदार्थस्य संबन्धपदार्थे सत्त्वादावन्वयस्येष्टतया तदनुपपत्तेः। एवं राज्ञः पुरुष इत्यादौ ङसि संबन्धादिपदत्वभ्रमदशायां तदर्थे राजपदार्थान्वयस्यानिष्टतया तदापत्तेश्च, प्रत्ययत्वप्रकारकज्ञान-विशेष्यस्य प्रत्ययपदेनोपादाने च प्रत्ययत्वाद्यनुपस्थितावपि राज्ञः पुरुष इत्यादिसमभिव्याहार-ज्ञानादिघटितसामग्रीबलादन्वयबोधस्येष्टतया तदनुपपत्तेः। स्वत्वादिसंबन्धेन राजादिपदार्थप्रका-रकपुरुषादिविशेष्यकान्वयबोधे राजपदाव्यवहितोत्तरपुरुषपदत्वरूपाकाङ्क्षाज्ञानस्य कारणत्वाद्राज-पुरुष इत्यत्रैव तादृशबोधो न तु राजा पुरुष इत्यत्र तादृशानुपूर्वीरूपाकाङ्क्षायास्तथाविधान्वय-बोधाप्रयोजकत्वात्। एवं तण्डुलादिप्रकारकबोधेऽपि तण्डुल पचतीत्यानुपूर्व्या एव प्रयोजकत्वं

न तु तण्डुलः पचतीत्यानुपूर्व्या इति तत्तत्स्थलेषु व्युत्पत्तिविशेषमङ्गीकृत्यैवानभिमतो बोधस्तत्तत्स्थलेषु वारणीय इति चेत्तर्हि व्युत्पत्तिविशेषाभिधानाया विशिष्टशक्तेरेवास्माभिरभ्युपगततया नाममात्रे विवादपर्यवसानं स्यात्।

अथ समासे समुदायशक्तिस्वीकारे शशशृङ्गं कूर्मरोम वन्ध्यापुत्रश्च नास्तीत्यादौ शशस्य शृङ्गं कूर्मस्य रोम वन्ध्यायाः पुत्र इति विग्रहे शशशृङ्गेत्यादिसमासो न स्यात्, शृङ्गे रोम्णि पुत्रत्वे च शशीयत्वकूर्मीयत्ववन्ध्यानिरूपितत्वाभावेन शशीयशृङ्गादिरूपविशिष्टार्थानामप्रसिद्धेरेकार्थीभावाभावात्। समुदायशक्त्यनङ्गीकारे तु शशीयत्वादीनामन्यत्र प्रसिद्धानां शृङ्गादौ भ्रमसंभवेन शशादिपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वस्य शृङ्गादिपदेष्वक्षततया व्यपेक्षामादायैव समासः सिद्ध्यति। अलीके सन्निकर्षादीनामसंभवेन प्रत्यक्षादिप्रमाणाप्रवृत्त्याऽसत्ख्यातेरसंभवात्तदुपनीते विशिष्टार्थे शशशृङ्गादिपदानां शक्तिरित्यस्य वक्तुमशक्यत्वात्। अपि च स्वरूपसत्याः शक्तेः शाब्दबोधानुपयोगितया तज्ज्ञानमेवेप्सितव्यम्, तच्च शक्तिस्वरूपसंबन्धस्यालीकैः सह पदानां न संभवति, अलीकानां विशेषतः सामान्यतो वोपस्थितेरसंभवात्। व्यवह्रियमाणेभ्यो घटादिपदेभ्य एव घटादिसत्यपदार्थानां घटत्वादिना विशेषरूपेण द्रव्यत्वादिना सामान्यरूपेण वोपस्थितेः। शशशृङ्गादिपदानामव्यवह्रियमाणत्वात्तेभ्योऽसतः कथमुपस्थितिः स्यात्।

न च शशशृङ्गादिशब्दा उच्चारयितृतात्पर्यपूर्वकाः, बालशुकादिभिन्नकर्तृकोच्चारणकर्मीभूतशब्दत्वादित्यनुमानेन तेषां सतात्पर्यकत्वे सिद्धे तत्तात्पर्यं सविषयकमित्यनुमित्या गृहीते तात्पर्यविषये सामान्यतः शक्तिग्रहः संभवतीति वाच्यम्; तादृशशक्तिग्रहस्य शाब्दबोधानुपयोगित्वेनाकिञ्चित्करत्वात्। नहि तात्पर्यविषयत्वोपलक्षिते धर्मिणि शक्तिग्रहः शाब्दबोधोपयोगी, किन्तु गोत्वादिविशिष्टे धर्मिण्येव, अन्यथा गामानयेत्यादिवाक्यादपि तात्पर्यविषये क्वचित्सामान्यतो गृहीतैः पदैरगृहीतविशेषसङ्गतिकानां गवानयनादिशाब्दबोधप्रसङ्गात्। न च गोत्वादिविशिष्टविषयके बोधे गवादिपदेभ्यो जननीय एव गोत्वादिप्रवृत्तिनिमित्तधर्मविशिष्टे गवादौ गवादिपदशक्तिग्रहोऽपेक्ष्यते, शशशृङ्गादिपदेभ्यः शाब्दबोधे जननीये तु बुद्धिविषयत्वाद्युपलक्षणधर्ममात्रेण शक्तिज्ञानमपेक्ष्यत इति वाच्यम्; तथा सति शशशृङ्गकूर्मरोमादिपदानां पर्यायताप्रसङ्गात्; एकविधार्थबोधकत्वात्।

यत्तु सर्वेऽपि प्रतिपत्तारः स्वस्ववासनात एव गृहीतशशशृङ्गादिपदशक्तिका इति, तदसत्; अतिप्रसङ्गात्, अनुभवं विना संस्कारापरपर्यायवासनाया असंभवाच्चेति चेन्न, घटादीनामखिलानामेव पदार्थानां द्विविधा सत्ता—वैज्ञानिकी, बाह्या च। तत्र घटादिपदानां वैज्ञानिकसत्ताविशिष्ट

एव शक्तिर्न बाह्यसत्ताविशिष्टे, तथा सति घट इत्येतावतैव घटे बाह्यसत्तायाः प्रतीतेः संभवाद-स्तीति तदुत्तरं न प्रयुज्येत, घटो नास्तीत्यस्याप्रामाण्यापत्तिश्च, सत्तातदभावयोरेकत्र विरोधात्। वैज्ञानिकसत्ताविशिष्टस्य घटादेर्घटादिपदवाच्यत्वे तु घटोऽस्तीत्यादावस्तिपदेन बाह्यसत्ता, घट आसीद् घटो भवितेत्यादिव्यावृत्ता वर्तमानकालीना बोध्यत इति तस्य सार्थक्यम्, घटो नास्ती-त्यादेरपि वर्तमानकालीनबाह्यसत्ताभावस्य घटे बोधकत्वादेव प्रामाण्यमुपपद्यते, एवं च शशशृङ्गा-दिषु बाह्यसत्ताविरहेऽपि न क्षतिः। तद्वाच्यस्य वैज्ञानिकसत्ताविशिष्टस्य प्रसिद्धेरेव न समासा-नुपपत्तिः। अत एव तदस्यास्त्यस्मिन्निति सूत्रे भाष्ये—"अथास्तिग्रहणं किमर्थम्, सत्तायामर्थे प्रयोगो यथा स्यात्। नैतदस्ति प्रयोजनम्, सत्ता न पदार्थो व्यभिचरति। इदं तर्हि प्रयोजनम्, सम्प्रतिसत्ताया यथा स्यात्, भूतभविष्यत्सत्ताया मा भूद् गावोऽस्यासन्, गावोऽस्य भवितारः" इत्युक्तम्।

"अथास्ति ग्रहणमिति। संभवे व्यभिचारे च विशेषणविशेष्यभावो भवति, यथा नीलो-त्पलमिति। सत्ता तु पदार्थो न व्यभिचरति, तामन्तरेण पदोच्चारणासंभवात्, तस्या एव सर्वशब्दप्रवृत्तौ कारणत्वादिति प्रश्नः। सत्ताया प्रत्ययो यथा स्यादिति। सत्ताया वर्तमानात् सत्तोपाधिकार्थाभिधायिनः पदात् प्रत्ययो मतुप् यथा स्यादित्यर्थः। न सत्तामिति। यावद् बुद्धया पदार्थो न विषयीकृतस्तावत् पदप्रयोगासंभवस्तस्माद् बुद्धिसत्तासमाविष्टोऽर्थो विधिनिषेधजननादिभिः संबध्यते—वृक्षोऽस्ति, वृक्षो नास्ति, वृक्षो जायत इति। बहिरत्यन्ताऽसतोऽपि शशविषाणादीनर्थान् बुद्धया विषयीकृत्य शशविषाणादिपदप्रयोगः, तस्माद् बुद्ध्यारूढोपचरिता सत्ता प्रयोक्तृप्रतिपत्तॄणां बहीरूपतया भासते, यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात्तदा वृक्ष इत्यतः सत्तावगमादस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात्। नास्तीत्यस्य च सत्ताविरोधात् प्रयोगाऽप्रसङ्गः। अङ्कुरो जायत इति च प्रयोगो न स्यात्, सतो जन्मविरोधात्। उपचारसत्तायां त्वेते दोषा नावतरन्ति। बौद्धसत्ता-समाविष्टस्य बहिःसत्त्वासत्त्वजननप्रतिपादनायास्ति नास्ति जायत इति प्रयोगात्" इति कैयटः।

[1]प्रश्नाशयमाह—संभवेति। यथेति, उत्पले नीलत्वस्य संभवो नीलकमले, व्यभिचारश्च रक्तादौ कमले इति नीलत्वं कमले विशेषणम्। गवादिपदार्थेऽस्त्यर्थसत्तायाः संभवे सत्यपि व्यभि-चाराभावान्न विशेषणत्वमित्याह— सत्ता त्विति। तामन्तरेण = सत्तां विना। पदोच्चारणासंभवे हेतुः सर्वशब्दप्रवृत्ताविति। प्रवृत्तिः = प्रयोगः। सत्तायाः प्रकृत्यर्थत्वविरहेण सत्तायामित्यस्य सत्ताया

---

*१. नागेशकृतोद्द्योतच्छायामाश्रित्य कृतायाः कस्याश्चित् प्रदीपव्याख्याया उद्धरणमेतत्। निबन्धकर्तुर्वोऽत्र भवेदेषा काचित् प्रदीपटिप्पणी—सम्पादकः।*

वर्तमानादित्यर्थो न युक्त इत्यत आह—सत्तोपाधिकार्थाभिधायिन इति, सत्तोपलक्षितघटाद्यर्थवाचकादित्यर्थः। ननु सत्तापद वर्तमानविहितशतृप्रत्ययनिष्पन्नसत्पदोत्तरभावप्रत्ययनिष्पन्नमिति तदर्थो वर्तमानकालवृत्तित्वं भूते भविष्यति च गवादौ कथं न व्यभिचरतीत्यत आह—यावदिति, तथा च भूते भविष्यत्यपि बौद्धसत्ताया आवश्यकतया तत्रापि न तद्व्यभिचार इति भावः। नन्वेवं शशशृङ्गादेरर्थस्यालीकतया तत्रैव सत्ताव्यभिचार इत्यत आह—बहिरत्यन्तेति। बुद्ध्यारूढोपचरितेति, बुद्धिस्था आरोपप्रयोजनवतीत्यर्थः। तथा च शशविषाणादिष्वलीकेष्वप्यर्थेषु बौद्धसत्ताया एव सत्त्वान्न तत्रापि सत्ताया व्यभिचार इति भावः। ननु बौद्धसत्ताविशिष्टस्य शाब्दबोधविषयत्वे गामानयेत्यादावानयनादौ तत्कर्मत्वस्यायोग्यतयाऽन्वयो न स्यादित्यत आह—सैव त्विति, पदार्थस्य बहिस्सत्तावत्त्वे बौद्धसत्तासमानाधिकरणत्वेन बहिस्सत्ताया गवादौ भानात्तद्विशिष्टस्यैवानयनादिकर्मत्वम्, बहिस्सत्ताया अभावे तु बौद्धसत्ताया एव केवलाया बहिस्सत्तात्वेन पदार्थे भानम्, यथा—एष वन्ध्यासुतो यातीत्यादौ। अत एव गेहस्य घटशून्यत्वेऽपि गेहाद् घटमानयेत्युक्ते घटकर्मकानयने प्रवर्तत एव, पश्चात्तदभावस्य निर्णये वक्तृज्ञानस्य भ्रमत्वं कल्पयति, अन्तःकरणे रागादिदोषसत्त्वे तद्वशेन बौद्धसत्ताया बहिःसत्तात्वेन भानमिति भावः। सतो जन्मविरोधादिति, सूक्ष्मरूपेण स्थितस्यैव स्थूलरूपापत्तिर्जन्मेति मतेऽप्यङ्कुरपदार्थस्य तादृशस्यैव जन्मना सत इति भावः। उपचारसत्तायाम्, आरोपप्रयोजनवत्या बौद्धसत्ताया शब्दप्रयोगनिमित्तत्वाश्रयणे तु। नन्वेवं बौद्धसत्तायाः सर्वत्र भानेऽस्तीति प्रयोगस्य कथं सार्थकतेत्यत आह—बौद्धसत्तेति। तया सह बाह्यसत्त्वाभावस्य जननस्य चाविरोधान्नोक्तदोष इति भावः।

अभिमतोऽयमर्थो नैयायिकानामपि। अत एव चतुर्थाध्याये न्यायदर्शने महर्षिरक्षपादोऽपि कार्यमुत्पत्तेः पूर्वमसत्, सद्वेति पूर्वपक्षयित्वा बुद्धिविषयं कार्यमसदित्यसिद्धान्तयत्। तत्र पूर्वपक्षसूत्रम्—"नासन्न सन्न सदसत् सदसतोर्विरोधात्" इति। उत्पत्तेः पूर्वं कार्यं नासत्, उपादाननियमात्, कस्यचिद् घटादेरुत्पत्तये किञ्चिन्मृदादिकमुपादेयं न तन्त्वादिकं सर्वं सर्वस्योत्पत्तये उपादेयमिति नियमः कार्यस्यासत्त्वे नोपपद्येत, तथा चासत उत्पत्तौ मृदादिभ्यः शशशृङ्गादेः सिकताभ्यस्तैलस्योत्पत्तिः स्यादसत्त्वस्य तत्र घटादिसाधारण्यात्। नापि कार्यं सत्, उत्पत्तेः पूर्वं विद्यमानस्य घटादेः पुनरुत्पत्त्यसंभवात्। नापि सदसत्, सत्त्वासत्त्वयोर्विरोधादिति तदर्थः।

अत्र पूर्वसूत्रे सिद्धान्तसूत्रम्—"बुद्धिसिद्धं तु तदसत्" इति। अस्यार्थः—असत उत्पत्तौ नियमो न स्यादित्यत्राह—बुद्धिसिद्धमिति। तत् कार्यम्, असत् प्रागभावप्रतियोगि। बुद्धिसिद्धं बुद्ध्या विषयीकृतम्। तथा हि—इह तन्तुषु पटो भविष्यतीति ज्ञात्वा कुविन्दः पटे प्रवर्तते न तु

पटोऽस्तीति ज्ञात्वा, तथा सति सिद्धत्वेन ज्ञाते इच्छाया असंभवात्प्रवृत्त्यनुपपत्तेः। सिकतासु तैलं भविष्यतीति न ज्ञायते, किन्तु न भविष्यतीत्येव ज्ञायते। कुतो न तथा ज्ञायत इति चेदनुभवं पृच्छति। तथा च महर्षिरत्नपादोऽपि पटादीनामुत्पत्तेः पूर्वं बुद्धिविषयत्वमभ्युपगच्छतीति बौद्धसत्ता तस्याप्यनुमतेति। अत एव 'जन्माद्यस्य यतः' इति सूत्रे भामत्यामपि चेतनो हि बुद्धावालिख्य नामरूपे घट इति नाम्ना रूपेण च कम्बुग्रीवादिना बाह्यं घटं निष्पादयति, अत एव घटस्य निर्वर्त्यस्याप्यन्तःसङ्कल्पात्मना सिद्धस्य कर्मकारकभावो घटं करोतीतीत्युक्तम्। निर्वर्त्यस्य = उत्तरकाले जनिष्यमाणस्य। अन्तःसङ्कल्पात्मना सिद्धस्य = बुद्धिविषयत्वाद्बौद्धसत्ता-विशिष्टस्य। कर्मकारकभावः = कर्मत्वं कारकत्वं च। अन्यथाऽनुत्पन्नस्य धात्वर्थतावच्छेदक-फलाश्रयत्वाभावात् कर्मत्वादिकं तस्य न स्यादिति भावः।

यत्तु क्रियानिमित्तत्वादेव घटस्य कारकत्वं विषयताश्रयत्वादेव च कर्मत्वमिति। तन्न, अविद्यमाने निमित्तताया आश्रयतायाश्चासंभवात्। अत एव पातञ्जला अपि चित्तस्य द्रव्यरूपो वृत्त्याख्यः परिणाम इन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य सूक्ष्मावस्थारूपविषयवासनावशा-त्तद्विषयाकारेण परिणमते। न तु तस्यां संयुक्तबाह्यविषयप्रतिबिम्बः, स्वप्नादौ बाह्यविषयासंयोगेन तत्प्रतिबिम्बासंभवादित्याहुः।

अस्यायं भावः—यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति, तथाऽन्तःकरणमपि चक्षुरादिद्वारा घटादिदेशं गत्वा घटाद्याकारेण परिणमते। स एव परिणामो वृत्तिरित्युच्यते।

साङ्ख्यास्तु—अन्तःकरणस्य स्वच्छत्वात्तत्र घटादीना प्रतिबिम्बे घटादिबुद्धिर्भवति, यथा दर्पणे मुखादिर्गृह्यते; न तु तत्तत्रास्ति। एवं चैतन्यमपि जडेष्वन्तःकरणादिषु संक्रान्तमिव दृश्यते, तत्संक्रमविशिष्टान्तःकरणवृत्तौ सर्वार्थाकारसमर्पणं तादृशवृत्तेरेवेति वदन्ति। तान्निराकरोति—न तु तस्यामिति। तस्या वृत्ताविन्द्रियसंयुक्ताना बाह्यविषयाणा घटादीना प्रतिबिम्बो न संभवति, स्वप्नादौ बाह्यविषयाणा हस्त्यश्वादीनामभावेन प्रतिबिम्बासंभवात्।

अस्माकं तु बाह्यविषयाणा तत्रासत्त्वेऽपि बौद्धविषयाणामेवोपलम्भः। स च नानुपपन्नः। न च स्वप्ने पूर्वानुभूतरथादेः स्मरणं संभवति, तज्ज्ञानस्य रथमद्राक्षमित्याकारकत्वाभावेन स्मरणरूपत्वासंभवात्। अत एव—"अदृष्टमप्यर्थमदृष्टवैभवात् करोति सुप्तिर्जनदर्शनातिथिम्" इति श्रीहर्षेणाप्युक्तम्। अत एव योगवाशिष्ठ उपशमप्रकरणे गाधि प्रति विष्णुवाक्यम्—

विप्र पृथ्व्यादिचित्तस्थं न बहिःस्थं कदाचन।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ॥ इति।

अत एव 'उपदेशेऽजनुनासिक' इति सूत्रे भाष्ये को देवदत्त इति प्रश्ने "अङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुर्लोहिताक्षस्तुङ्गनासो विचित्राभरण ईदृशो देवदत्त." इत्युक्तम्। बौद्धपदार्था-नभ्युपगमे देवदत्तस्यैकस्य भेदाभावेनेदृश इत्यस्यासङ्गतिः स्यात्। मम त्वेतैः शब्दैर्यादृशोऽर्थो बुद्धौ प्रतिभासते, तादृशो बाह्य इत्यर्थान्नेदृशपदस्यासङ्गतिः।

एवं हेतुमति चेति सूत्रे—"इह तु कथं वर्तमानकालता···चिरहते कंसे चिरबद्धे च बलौ। अत्रापि युक्तैव। कथम्? ये तावदेते शौभिका नाम, एते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षं बलिं बन्धयन्ति। चित्रेषु कथम्? चित्रेष्वप्युद्गूर्णा निपतिताश्च प्रहारा दृश्यन्ते कंसस्य च कृष्णस्य च। ग्रन्थिकेषु कथम्? यत्र शब्दग्रन्थगड्डुमात्रं लक्ष्यते, तेऽपि हि तेषामुत्पत्तिप्रभृत्या विनाशात्तद्ध्वी-र्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति" इत्युक्तम्। चिरहत इति वध्यघातकभावस्य चिर-प्रवृत्तत्वात्प्रयोजकव्यापारस्यापि चिरप्रवृत्तत्वादेव वर्तमानत्वासंभव इति भावः। तेन 'चिरहते कंसे' इत्युक्त्या प्रयोजकव्यापारस्य वर्त्तमानत्वाभावो नोक्त इत्याशङ्का निराकृता। शौभिकाः= कंसानुकारिणा नटाना व्याख्यानोपाध्यायाः। कंसानुकारी नटः सामाजिकैः कंसबुद्ध्या गृहीतः कंसो भाष्ये विवक्षितः। उद्गूर्णाः=उद्यताः। 'गूरी उद्यमने' इत्यस्य क्तप्रत्यये रूपम्। एवं च चित्रलेखका अपि चित्रस्थं कंसं तादृशेनैव कृष्णेन घातयन्ति। ग्रन्थिकेषु=कथकेषु। यत्र=ग्रन्थि-केषु। शब्दग्रन्थगड्डुमात्रम्। शब्दः कथकमुखोच्चार्यमाणः। ग्रन्थस्तद्धस्तस्थपुस्तकरूपस्तन्मात्रं लक्ष्यते न तु तत्र कश्चिदपि कंसादिर्बुद्धिविषयः। गड्डो मनुष्यसंघातः। तेऽपि हि=कथका अपि। तेषा कंसादीनाम्। उत्पत्तिप्रभृत्याविनाशात्=उत्पत्तिमारभ्य नाशपर्यन्तम्। तद्ध्वीः=तदैश्वर्याणि। व्याचक्षाणाः कथयन्तो ग्रन्थिकाः स्वबुद्धिविषयान् सतो विद्यमानान् कंसादीन् प्रकाशयन्ति श्रोतृबुद्धौ समर्पयन्तीत्यर्थः। अत एव हरिणाऽप्युक्तम्—

शब्दोपहितरूपास्तु बुद्धेर्विषयता गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते॥ इति,
यदन्तः शब्दतत्त्वं तु नादैरेक प्रकाशितम्।
तदाहुरपरे शब्दं तस्य वाक्ये तथैकता॥
अर्थभागैस्तथा तेषामान्तरोऽर्थः प्रकाशते। इति च।
व्यपदेशे पदार्थाना बाह्यसत्त्वौपचारिकी।

सर्वावस्थासु सर्वेषामात्मरूपस्य दर्शिका ॥ इति च ।

पदार्थाना बाह्याना व्यपदेशे व्यवहारार्थं बाह्यविलक्षणसत्ता बुद्धिसमाविष्टा, औपचारिकी = आरोपप्रयोजनवती । सर्वावस्थास्वित्यनेनातीतानागतनामपि बुद्ध्या प्रतिभासो दर्शितः । सर्वेषामित्यनेन शशशृङ्गादिशब्देऽपि तद्बुद्धिकल्पनया व्यवहाराच्छब्दार्थसंबन्धो नित्यो दर्शितः । अत एव बुद्ध्या शशशृङ्गादिकमुद्दिश्य बाह्यसत्ताव्युदासाय नास्तीति प्रयुज्यत इति ।

न च शशशृङ्गादिशब्देऽर्थस्यालीकतया तस्य बुद्धिसत्तावत्त्वे कि मानमिति वाच्यम्; शशशृङ्गमित्यादितः शाब्दबोधस्यैव तत्र मानत्वात् । न च तत्र बुद्धिसत्तासत्त्वे तद्विशिष्टशक्तिग्रहाच्छाब्दबोधः, शाब्दबोधेन तत्र बुद्धिसत्ताऽनुमानमित्यन्योन्याश्रय इति वाच्यम्; पूर्वपूर्वबोधैर्बुद्धिसत्तानुमानेन शक्तिग्रहादुत्तरोत्तरं शाब्दबोधात् । व्यवहारस्यानादित्वाच्च बीजाङ्कुरवदनवस्थाया अदोषत्वात् । अत एव—

सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥

इति स्मृतिः, "स भूरिति व्याहरत् स भूमिमसृजत्" इति श्रुतिश्च सृष्टेः प्राक् भूःशब्दादिभ्यस्तदर्थज्ञानपूर्वकं भूरादिलोकं सृष्टवानिति बोधयति । तदानीं बाह्याया भुवोऽभावाद् भूशब्दस्य शक्तिग्रहोऽन्वयबोधश्च कस्मिन्नर्थे स्यात् ।

न च भूत्वादिजातेर्नित्यत्वात्तत्र शक्तिग्रहः स्यादिति वाच्यम्; अद्वैतवादिमते जातेरप्यनित्यत्वात्तस्या अपि केनचिद्वैदिकशब्देनैव ज्ञानात् । ब्रह्मणा निर्माणे तत्राप्यस्या एव दुरवस्थायाः सत्त्वात् । जातेराश्रयासत्त्वे सत्त्वस्याननुभविकत्वाच्च । "अपागादग्नेरग्नित्वम्" इत्यादिश्रुत्याऽग्नित्वादिजातिनाशस्य स्पष्टमुक्तत्वाच्चेति । एवं राजपुरुषादिसमासावयवाना शक्ति लक्षणा वाऽजानतामपि समुदायशक्तेर्गुर्वादिभिर्व्युत्पादने विशिष्टार्थविषयकोऽन्वयबोधस्तेभ्यः सार्वजनीनः । अत एव समुदायशक्तिज्ञानात्तेषां विशिष्टार्थविषयके बोधे जातेऽपि व्याकरणव्युत्पत्तिं विना तैः समासे पदविभागो न शक्यते कर्तुम् ।

न च तेषां शक्तिभ्रमादेव ततो बोध इति वाच्यम्, विशिष्टार्थबोधकतायाः समासे सर्वानुमततया शक्तेश्च बोधकतारूपताया एवास्माभिरुपगमात्तस्य तत्राबाधेन तज्ज्ञानं भ्रम इत्यस्य वक्तुमशक्यत्वात् । प्रत्येकपदशक्तेस्तेषामज्ञाने प्रत्येकपदलक्षणाज्ञानस्याप्यसंभवात् । अज्ञाताया एव लक्षणायास्तत्र शाब्दबोधोपयोगित्वोपगमेऽन्यत्रापि तस्याः शक्तेश्च स्वरूपसत्योरेव कारणत्व-

प्रसक्तौ घटादावगृहीतशक्तिकादपि घटादिपदात्तदर्थोपस्थित्यापत्तेः। तीरादिके गङ्गादिसंबन्धज्ञानाभावेऽपि गङ्गादिपदात्तीरादिबोधस्य चापत्तेः।

तथा च प्रत्येकपदशक्तिज्ञानाभावेऽपि समुदायशक्तिज्ञानात् समासाद्विशिष्टार्थबोधोपपत्तये समासे समुदायशक्तिरावश्यकी, घटादिपदान्तर्गतघकारादिप्रत्येकवर्णशक्तिज्ञानाभावेऽपि घटपदशक्तिज्ञानाद् घटाद्यर्थविषयकबोधात् समुदायशक्तिवत्। अपि चापभ्रंशादीना गाछमाछगगर्यादिपदानामपि संस्कृतवृत्तमत्स्यघटादिपदानामिव लोकव्यवहारजनकत्वेऽपि तेषु न शक्तिः, किन्तु संस्कृतेष्वेवेत्यत्र विनिगमकं व्याकरणं कोपादिकं चेति व्याकरणस्य प्रामाण्यमवश्यमुपगन्तव्यम्। तथा च "समर्थः पदविधिः" इति भाष्यादिप्रामाण्यात् "अनेकमन्यपदार्थे" इत्यस्य पूर्वदर्शितार्थकस्य प्रामाण्याच्च समासशक्तिर्निश्चिता न केनचिदपि किञ्चिल्लाघवगौरवादिप्रदर्शनेन वारयितु शक्या। अत एवोक्तं पराशरीयपुराणे—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥

इति दिक्॥

निजा मन्दबुद्धि निवेश्याभिधेये दुरूहेऽनधीते सुमेधोऽधिगम्ये।
कृतो निर्णयो योऽर्पितोऽयं भवान्याः पदोस्तान्मुदेऽमत्सराणा बुधानाम्॥

---

# भास्करीसमीक्षा

श्रीबदरीनाथशुक्लः, प्रधानाध्यापकः, रा० सं० म०, वाराणसी।

भास्करी हि कश्मीरोद्भवस्य तत्रभवतो भास्करकण्ठस्य कमनीया कृतिः। इयं माहेश्वराचार्यवर्येण श्रीमता उत्पलदेवेन प्रणीतम् ईश्वरप्रत्यभिज्ञानामकं ग्रन्थमधिकृत्य महाविदुषा श्रीमता अभिनवगुप्तेन विरचितायाः विमर्शिनीनामकव्याख्यायाष्टीका। यथोक्तं भास्कर्या उपक्रमे स्वयं भास्करकण्ठेनैव—

"इह हि श्रूयते श्रीभगवत्तीव्रतरशक्तिपातहस्तामलकीकृतमहारहस्योपदेशश्रीसोमानन्दनाथेभ्योऽधिगतशास्त्रोपदेशस्तन्निभालने च प्राप्तपराकाष्ठः श्रीमानुत्पलदेवः स्वगुरुनिर्मितं शिवदृष्ट्याख्यं महारहस्यशास्त्रं व्याख्याय तत्प्रतिविम्बकल्पं कारिकामयमीश्वरप्रत्यभिज्ञाख्यं महाशास्त्रं प्रणीय तत्तात्पर्यस्य दुर्बोधतामाशङ्क्य तन्मात्रपरां लघुप्रत्यभिज्ञाख्यां वृत्तिं च कृत्वा तत्रापि मन्दबुद्ध्यनुग्रहार्थं मध्यप्रत्यभिज्ञाख्यां विवृतिं कृतवान्। तत्र च सर्वजनहितार्थं श्रीमताऽभिनवगुप्ताचार्येण बृहत्प्रत्यभिज्ञाख्या बहुविस्तरा टीका कृता, अद्य तु तत्रापि दुर्बोधत्वं दृष्ट्वा श्रीभगवता शिष्यबुद्धिमाविश्य प्रेरितः स्वतःसिद्धश्रीमद्राजानकवैदूर्यकण्ठात्मजश्रीमदवतारकण्ठपुत्रो भास्करकण्ठोऽहं दशसहस्रोत्तरलक्षसंख्याकश्रीमोक्षोपायटीकाकरणेन कृततदवगाहनस्कन्धसंवाहनः स्वपितुः परम्परागतमुपदेशं श्रुत्वा श्रीकौलनरोत्तमेभ्यश्च विद्योपदेशमासाद्य तद्व्याख्याया प्रवृत्तः" इति।

तस्यास्य ग्रन्थस्य महत्त्वोपयोगित्वयोः परिज्ञानार्थं प्रत्यभिज्ञादर्शनस्य कश्चन परिचयो नूनमपेक्ष्यत इत्यतः प्रथमं स एवात्र संक्षेपेण प्रस्तूयते।

भारतं खलु विश्वस्य सर्वदेशानां मूर्धन्यम्। विद्या, धर्मः, दर्शनम्, सभ्यता, संस्कृतिः, कला, नीतिः, शीलम्, सदाचारः, मानवता चात्रैव सर्वप्रथमं समुन्मेषं प्रापुः; अत्रैव च पूर्णं विकासमासाद्य क्रमेण समग्रायां पृथिव्यां प्रससुः। अतः सर्वथा यथार्थैव महाराजस्य मनोरुक्तिरेषा—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः॥

अनुपदमुदितानां भावानामाविर्भावो यया भाषया सह समपद्यत सैव संसारस्य सर्वप्राचीना सर्वश्रेष्ठा च भाषा, सैव च जगद्गुरोर्भारतस्य सर्वस्वम्, सैव च संस्कृतमिति सहजसुन्दरेण नाम्ना सुप्रसिद्धा। तस्याः साहित्यं कियद्विशालं कियद्विपुलं कियन्महत् कियद् गौरवमय चेति न कोऽपि वक्तुमर्हति। यद्यप्यस्या भाषायाः प्रत्येकमेव साहित्यं स्वीयं किमप्यसाधारण्यं निःसंशयं बिभर्ति तथापि दार्शनिकं साहित्यं त्वस्या अतीव विस्तृतं समुन्नतं विकासस्य परा काष्ठा च समारूढम्। अतो बहूनामयमुद्गारो नूनं नोपेक्षणमर्हति यद्देशान्तराणां दर्शनानि भारतीयस्य सुमहतो दर्शनरत्नाकरस्य समक्षं पल्वलपदवीमपि काठिन्येनैवोपारोढुमर्हन्ति।

भारतस्य दार्शनिकविद्याना विकासे कश्मीरस्तस्य कस्यादपि प्रदेशान्तरात्किञ्चिदपि पश्चात्पदो नास्ति, किन्तु शैवागमोपजीव्यदर्शनेषु श्रेष्ठतमं प्रत्यभिज्ञादर्शनमुद्भाव्य केनचिन्महता महिम्ना विभाति।

श्रूयते यदाचार्यवसुगुप्तो भगवतः श्रीकण्ठस्य स्वप्नादेशेन महादेवगिरेः कस्मिंश्चित् प्रस्तरखण्डे समुट्टङ्कितानि सप्तसप्ततिसंख्याकानि शिवसूत्राण्युद्धृत्य तदुपजीवि दर्शनमेकमाततान, यत् पतिपशुपाशेति पदार्थत्रयस्य प्रधानतया प्रतिपादनेन त्रिकदर्शननाम्ना प्रसिद्धिमवाप। तस्यैवाचार्यवर्यस्य कल्लटनामा शिष्यस्तत्प्रणीता स्पन्दकारिका समाश्रित्य स्पन्दसर्वस्वनामकग्रन्थरचनया स्पन्ददर्शनं विकासयामास। सोमानन्दनामा शिष्यश्च शिवदृष्टिनाम्नो ग्रन्थस्य निर्माणेन प्रत्यभिज्ञादर्शनं प्रकाशयामास। सोमानन्दशिष्य उत्पलदेवः शिवदृष्टिमाश्रित्य कारिकामयम् ईश्वरप्रत्यभिज्ञानामानं ग्रन्थं विरचयाञ्चकार, यस्यार्थं विवरीतुकामोऽभिनवगुप्तो विमर्शिनीनाम्नीं तदीयां व्याख्याम्, तां च सुबोधीकर्तुकामः भास्करकण्ठो भास्करीनाम्नीं टीका निर्बबन्ध। यस्या युगानुरूपरामणीयकमयेन सम्पादनेन कर्मण्यकोविदावदातो लक्ष्मणपुरविश्वविद्यालयस्य संस्कृतविभागप्राध्यापको डा०श्रीकान्तिचन्द्रपाण्डेयमहोदयः प्रमोदोदन्वत्तरङ्गरिङ्गमाणमनसो मनीषिनिवहानतनोत्।

## सिद्धान्तः

अस्य दर्शनस्य दृष्ट्या परमेश्वरः परमशिव एवैकमद्वितीयं पारमार्थिकं वस्तु, जीवो जगच्च तस्य स्वाभाविक्याः स्वातन्त्र्यशक्तेर्विजृम्भणमात्रम्। स एव जीवस्य वास्तविकं स्वरूपम्, स्वात्मनः परमशिवताप्रत्यभिज्ञैव च जीवोपार्जनीयस्य महास्वातन्त्र्यलक्षणमोक्षस्य परमपुरुषार्थस्य प्रसवभूमिः। प्रत्यभिज्ञा पुनर्विमर्शिनीवचसा—"प्रतीपमात्माभिमुख्येन ज्ञान प्रकाशः", भास्करी-

भाषया च—"पूर्वं ज्ञातस्य मध्ये विस्मृतस्य पुनराभिमुख्येन ज्ञानं प्रकाशः" इति। अत्र च वर्णवय-आश्रमादिप्रतिबन्धव्यपायेन सर्वो जनः समानभावेनाधिकारी।

## विश्वस्य विकासः

परमशिवो हि विश्वसिसृक्षाया उदये स्वात्मानं युगपदेव शिवशक्तिरूपाभ्यामुन्मीलयति, अर्थात् शिवशक्तिसामरस्यावस्थः परमेश्वरः शिवं शक्तिं चाभिव्यनक्ति। तत्र शिवः प्रकाशात्मा, शक्तिश्च विमर्शरूपा। विमर्शश्च प्रकाशानुप्राणिता पूर्णाऽकृत्रिमाऽहमाकारा स्फूर्तिः। यथोक्तम्—"स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम्" [ ई० प्र० ], "प्रकाशस्य यदात्म-मात्रविश्रमणमनन्योन्मुखस्वात्मप्रकाशताविश्रान्तिलक्षणो विमर्शः सः 'अहम्' इत्युच्यते" [ ई० प्र० वि० ] इति।

अयमेव विमर्शो वक्ष्यमाणस्य समग्रस्य विकासस्य मूलम्। सामर्थ्यं चास्य निस्सीमं बहुविधं च। यथोक्तमभिनवगुप्तेनेश्वरप्रत्यभिज्ञाया ज्ञानाधिकारस्य पञ्चम आह्निके विम-र्शिन्याम्—"विमर्शो हि सर्वंसहः परमप्यात्मीकरोति, आत्मानं च परीकरोति, उभयमेकीकरोति, एकीकृतं द्वयमपि न्यग्भावयति" इति। इयं च विमर्शशक्तिः शिवस्वरूपाभिव्यक्तये तदाश्रये-णैव प्रवर्तते। विमर्शशक्तेर्बाह्य उन्मेष ईश्वरसंज्ञया, आन्तरो निमेषश्च सदाशिवसंज्ञया प्रथते। यथोक्तमुत्पलदेवेन—"ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिवः" [ ई० प्र० ३-१-३ ] इति। उन्मेषणं विश्वस्य स्फुटत्वबाह्यत्वरूपम्, निमेषणं चास्फुटत्वापादनमहन्तारूपतोद्रेचनम्। ईश्वराज्जगतः प्रवृत्तिरिति स उन्मेषः, सदाशिवाच्च जगतः प्रलय इति स निमेष उच्यते। ईश्वरे 'इदमहम्' इत्याकारो विमर्शो भवति, अत्र ग्राह्यग्राहकयोरिदमहमंशयोः स्फुटत्वं चिन्मात्रविषयत्वं च। सदाशिवे तु 'अहमिदम्' इत्याकारो विमर्शो भवति। अत्रेदन्तारूपरूषितोऽहमंशो ग्राहक एव स्फुटश्चिदेव च विषयः।

उक्तोभयाकारश्चिद्रूपे समानेऽधिकरणे प्रवर्तमानो विमर्श एव सद्विद्याशुद्धविद्यादि-शब्दैर्व्यपदिश्यते। यथोक्तम्—

"सामानाधिकरण्यं च सद्विद्याऽहमिदंधियोः" [ ई० प्र० ३-१-३ ]

अयमर्थः—परमशिव एव भगवानहमाकारविमर्शविग्रहः सन् शिवः, प्रधानाप्रधान-भावेनाहमिदमाकारविमर्शशरीरः सन् सदाशिवः, समप्राधान्येनेदमहमाकारविमर्शवपुः सन् ईश्वर उच्यते।

ततोऽधिकरणभेदेन ग्राह्यग्राहकोभयांशे स्फुटतया स्फुरन्ती अहमिदमाकारविमर्शरूपा, इदमहमाकारविमर्शरूपा वा परमेश्वरस्य मायाशक्तिः कञ्चुकरूपाः कला-विद्या-राग-काल-नियती-र्निर्माय कलया सर्वकर्तृताम्, विद्यया सर्वज्ञताम्, रागेण नित्यतृप्तताम्, कालेन नित्यताम्, नियत्या च स्वतन्त्रतां तिरोधाय तदीयविकासस्याहमंशरूपमेकमङ्गं पुरुषभावमिदमंशरूपमपरमङ्गं च प्रकृतिभावं नयति ।

ततः पुरुषप्राप्तगर्भा प्रकृतिर्बुद्ध्यन्तःकरणादिपदपात्रभूतं महत्तत्त्वं प्रसूते । ततो महत्त-त्त्वादहङ्कारः, अहङ्कारात् श्रोत्रत्वङ्नेत्ररसनघ्राणसंज्ञानि पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपाद-पायूपस्थरूपाणि पञ्च कर्मेन्द्रियाणि, ज्ञानकर्मोभयेन्द्रियात्मकं मनः, शब्दस्पर्शरूपरसगन्ध-रूपाणि पञ्चतन्मात्राणि च जायन्ते । तदुत्तरं पञ्चतन्मात्रेभ्यो वियद्वायुतेजोजलभूम्यात्मकं भूतपञ्चकं प्रादुर्भवति, यतो निखिलोऽयं विशालो विविधो भौतिकः प्रपञ्चः प्रख्यातिमेति ।

इत्थमस्मिन्दर्शने दृश्यमानस्य जगतः षट्त्रिंशत्संख्याकानि मूलतत्त्वान्यनुमतानि, तेषां विभक्तिश्च शिवविद्याऽऽत्मतत्त्वात्मना त्रिविधा वर्णिता । तत्र शिवतत्त्वं शिवः शक्तिश्चेति तत्त्वद्वयम् । विद्यातत्त्वं सदाशिवः, ईश्वरः, शुद्धविद्येति तत्त्वत्रयम् । आत्मतत्त्वं च माया, कला, विद्या, रागः, कालः, नियतिः, पुरुषः, प्रकृतिः, महत्, अहङ्कारः, श्रोत्रम्, त्वक्, नेत्रम्, रसनम्, घ्राणम्, वाक्, पाणिः, पादः, पायुः, उपस्थः, मनः, शब्दः, स्पर्शः, रूपः, रसः, गन्धः, आकाशः, वायुः, तेजः, जलम्, भूमिश्चेत्येकत्रिंशत्तत्त्वान्यन्तर्भावयति । परमिदं कृत्स्नं तत्त्वजातं तन्मूलकं विश्वं च परमशिवः परमेश्वर एव स्वकीयया स्वाभाविक्या स्वातन्त्र्यशक्त्या स्वात्मनि निर्मले मुकुरे बिम्बानपेक्ष एव बहिःस्थिततयेव प्रतिबिम्बयति केवल मिति परमशिव एवैकः परमार्थः पदार्थः । यथोक्तम्—

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत् ॥

अन्तःस्थितत्वं चार्थाना विमर्शिनीदृशा—"प्रमात्रैकात्म्यम् । तच्च सदैव, प्रकाशस्य प्रमा-तृत्वात्, तदात्मतया च विनाऽप्रकाशमानस्यावस्तुत्वात्" इति । अयमर्थो विवृतिविमर्शिन्यामभि-नवगुप्तेनेत्थमुक्तः—

अन्तर्विभाति सकलं जगदात्मनीह यद्वद्विचित्ररचना मुकुरान्तराले ।
बोधः पुनर्निजविमर्शनसारयुक्त्या विश्वं परामृशति नो मुकुरस्तथा तु ॥

उक्तस्तत्त्ववर्गस्तदुद्भवं जगच्च शिवमात्राश्रितं शिवैकजीवितं शिवैकप्रकाश्यं चेत्येतदेव दर्शनस्यास्य रहस्यम्। यथोक्तमुत्पलदेवेनेश्वरप्रत्यभिज्ञाया ज्ञानाधिकारस्य प्रथम आह्निके—

वर्तमानावभासाना भावानामवभासकम्।
अन्तःस्थितवतामेव घटते बहिरात्मना॥

अयमेवार्थोऽभिनवगुप्तेन तत्रैव विमर्शिनीग्रन्थ इत्थं प्रणिगदितः—

महाकुहान्तर्निर्मग्नभावजातप्रकाशकः।
ज्ञानशक्तिप्रदीपेन यः सदा तं स्तुमः शिवम्॥

एष एव विषयो भास्करकण्ठेनापि तत्रैव भास्करीग्रन्थेऽधिकतरं स्फुटीकृतः—

स्वरूपगृहमध्यान्तर्भावभाण्डप्रकाशकम्।
प्रज्वाल्य दीपं ज्ञानाख्यं स्वप्रकाशं शिवं स्तुमः॥

भास्कर्यां तत्रोद्धृतमदः पद्यमपि परिपुष्णात्यर्थमेनम्—

ज्ञेयस्य च परं तत्त्वं यः प्रकाशात्मकः शिवः।
बाह्यप्रकाशरूपस्य प्रकाश्यं वस्तुतोऽपि वा॥

## ईश्वरप्रत्यभिज्ञा

सर्वोऽयमर्थसार्थः श्रीमत उत्पलदेवस्येश्वरप्रत्यभिज्ञाया विशदं वर्णितोऽस्ति। स च ग्रन्थो ज्ञानाधिकारः, क्रियाधिकारः, आगमाधिकारः, तत्त्वसंग्रहाधिकार इत्यधिकारचतुष्टयात्मना विभक्तो वर्तते। पूर्णे ग्रन्थेऽशेषा नवत्यधिकशतसंख्याकाः कारिकाः सन्ति। श्रीसोमानन्दनाथप्रणीता शिवदृष्टि च ग्रन्थोऽयमुपजीवति। अयं च प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवप्रयोगात्मकपरार्थानुमानरूपतया प्रतिपादितोऽभिनवगुप्तेन प्रथमश्लोकस्य विमर्शिन्याम्। तच्च—

कथञ्चिदासाद्य महेश्वरस्य दास्यं जनस्याप्युपकारमिच्छन्।
समस्तसम्पत्समवाप्तिहेतुं तत्प्रत्यभिज्ञामुपपादयामि॥

इति श्लोकेन जनस्य महेश्वरताप्रत्यभिज्ञानोपपादनस्य स्पष्टं प्रतिज्ञानादयं श्लोकः प्रतिज्ञावाक्यात्मकः। चतुर्थाधिकारस्थश्च—

इति प्रकटितो मया सुघट एष मार्गो नवो
महागुरुभिरुच्यते स्म शिवदृष्टिशास्त्रे यथा।
तदत्र निदधत्पदं भुवनकर्तृतामात्मनो
विभाव्य शिवतामयीमनिशमाविशन् सिध्यति॥

इति षोडशः श्लोको निगमनरूपः। अनयोर्मध्यवर्तिन्यः कृत्स्नाः कारिकाश्च महेश्वरतया प्रत्यभिज्ञानार्हत्वस्य हेतुं महेश्वरानन्यत्व तदनन्यत्वे तदात्मतया प्रत्यभिज्ञेयत्वव्याप्ति तदुपेतस्य महेश्वरानन्यत्वस्य प्रत्यभिज्ञातव्ये वस्तुजाते संबन्धरूपा पक्षधर्मता च प्रासङ्गिकपदार्थविचारचारुणा युक्त्यागमवाक्यजातेन प्रतिपादयन्त्यो हेतूदाहरणोपनयरूपाः।

## विमर्शिनी

ईश्वरप्रत्यभिज्ञायाः कारिकामयतया सूत्रसादृश्येन स्पष्टतया सरलतया च बहूना विवक्षितार्थाऽवेदकतयाऽभिनवगुप्तेन निष्पादिता विमर्शिनी मूलग्रन्थोक्तानर्थान् विस्तरतो विमृशति। समग्रस्य जगतो विकासस्य मूलभूतो विमर्शो विमर्शिन्याः सविशेषं प्रतिपाद्य इति तन्नाम्नाऽवगम्यते। अपेक्ष्यतेऽप्यस्य विस्पष्टं निरूपणम्, विमर्शनाम्नेदृशस्य पदार्थस्य दर्शनान्तरेष्वप्रसिद्धत्वात्। तत्र विमर्शिन्या वर्णितो विमर्शस्तावदित्थम्—

"विमर्शो नाम प्रकाश्यमानस्य गृह्यमाणस्य वस्तुनः प्रकाशाव्यतिरिक्तं शब्दनम्, सर्वं हि ग्रहणं शब्दानुगमनियतम्। यथोक्तं तत्रभवता भर्तृहरिणा—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥
वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥

प्रत्यवमर्शश्च आन्तराभिलापात्मकशब्दनस्वभावः, तच्च शब्दनं सङ्केतनिरपेक्षमेवाऽविच्छिन्नचमत्कारात्मकमन्तमुंखशिरोनिर्देशप्रख्यम्" [वि० १-५-१३] इति।

"सङ्केतनिरपेक्षमेव = बाह्यशब्दवत् सङ्केतापेक्षारहितमेव। अन्यथा सद्योजातबालादौ तदुत्पादो न स्यात्, तस्यापि हि सूक्ष्मः 'अहम्' इति परामर्शो विद्यत एव, अन्यथा स्वात्मार्थं स्तन्याद्यभिलषणमयुक्तं स्यादिति भावः। तथा अविच्छिन्नः = इदन्तास्पर्शाभावेन परमात्मनोऽप्रच्युतो यश्चमत्कारः 'अहम्' इति स्वरूपः स्वरूपास्वादः स आत्मा यस्य तादृशम्, अत एवान्तमुंखो यः शिरोनिर्देशः = शिरःकम्पादिना कृतो वस्तुनिर्देशस्तस्य प्रख्यं = सदृशम्" ( भास्करी )।

सोऽयं विमर्शः = प्रत्यवमर्शो द्विधा—शुद्धः, अशुद्धश्च। तत्र शुद्धो यः संविन्मात्रे विश्वाभिन्ने विश्वच्छायाच्छुरिताच्छात्मनि वा। अशुद्धस्तु वेद्यरूपे शरीरादौ। द्विविधोऽप्यहंप्रत्ययो द्विधा—अनुभवरूपोऽनुसन्धानरूपश्च। तत्र शिवात्मनि 'अहम्' इति, सदाशिवात्मनि 'अहमिदम्' इति शुद्धो द्विधा। अशुद्धोऽपि 'अहं स्थूल इति, योऽहं स्थूलोऽभवं स एवाहं कृशः'

इत्यादिरूपश्च द्विधा। तत्र शुद्धः 'अहं'प्रत्यवमर्शः शब्दानुविद्धोऽप्यपोहनीयस्य कस्यचिदभावाददविकल्पः। अशुद्धस्तु तस्य भावाद्विकल्परूपः। अहमिति विमर्शो ग्राहकम्, 'इदम्' 'इदमिदम्' इति वा विमर्शो ग्राह्यम्, 'अहमिदम्' इति विमर्शो ग्राह्यरूपरूषितं ग्राहकम्, 'इदमहम्' इति विमर्शश्च ग्राहकरूपरूषितं ग्राह्यमुभयं वा समं परामृशति। विमर्श एव चायं प्रकाशस्य भावाना च व्यवस्थापकः। अयमेव चेतनान् जडतः पृथक्करोति, न तु प्रकाशः; तस्य सर्वस्य जडजातस्य साररूपत्वात्। विमर्शश्च शब्दनात्मा जडेषु न संभवति, किन्तु चेतनेष्वेव। अत एवायं तयोर्विभेदकः। अयमेव महेश्वरत्वप्रत्यभिज्ञाया भित्तिः।

## भास्करी

भास्करी हि विमर्शिन्या अखिलं गुप्तभावजालं भास्करप्रभेव भृश विभासयति। विमर्शिनीनिर्दिष्टः सर्वः पारिभाषिकः शब्दोऽत्र विस्फोरितः, सर्वश्च तद्गतो भावो यथापेक्षं सविस्तरं विविच्य वर्णितः। अनेकत्र विमर्शिन्या गूढमभिसन्धि विलक्षणया विशदतरया च रीत्या विबोधयन्ती स्वकर्तुः पाण्डित्यप्रकर्षं प्रकाशयन्ती च भास्करी बलाद् विवशीकरोति स्वोत्कर्षविशेषसंस्तवाय। यथा प्रारम्भ एव—

निराभासात् पूर्णादहमिति पुरा भासयति यद्
द्विशाखामाशास्ते तदनु च विभङ्क्तुं निजकलाम्।
स्वरूपादुन्मेषप्रसरणनिमेषस्थितिजुष-
स्तदद्वैतं वन्दे परमशिवशक्त्यात्मनिखिलम्॥

इत्यभिनवगुप्तपद्यव्याख्यानावसरे द्विशाखात्वेन शिवशक्ती विवक्षित्वा, श्रीतन्त्रालोकटीकाकृता श्रीजयद्रथेन द्विशाखात्वेन विवक्षितं 'अहम्-इदम्' इति परामर्शद्वयं परिहरन् भास्करकण्ठः स्पष्टमाचष्टे—"निजकला ह्यत्राहंरूपैव, तस्याश्च को द्विशाखो विभागः? अहंभावेन स्वयं स्थितत्वात्। न च तस्यैव तच्छाखात्वं युक्तम्" इति,पुनः किञ्चिदग्रे—"नन्वहंपरामर्शरूपायाः शक्तेः शाखात्वमस्तु, पूर्णशिवस्य तु तत्कथं युक्तमिति चेन्न; शिवशक्त्यैक्यापेक्षया प्रत्येकं शिवशक्त्योरपूर्णत्वात्" इति, अतः किञ्चिदग्रे पुनः—"ननु तर्हि श्रीजयद्रथेन कथं तत्रान्यथा व्याख्या कृता? शिवतत्त्वस्य शाखात्वकथनायोग्यतयेति ब्रूमः। ननु युष्माभिरपि कथं नेयं शङ्का कृता? सत्यम्, अस्माभिः साक्षाद् गुरुमुखादत्र युक्तयः श्रुता एवेति श्रीबहुरूपगर्भस्तोत्रावष्टम्भेन साहसे प्रवृत्तिः कृता" इति च। इदं वचनजातं भास्करीकर्तुर्विनयालङ्कृतपाण्डित्ये स्फुटं साक्षि। इदमेव मङ्गलपद्यं पुनरभिनवगुप्तपरिचयपरतया व्याचक्षाणो भास्करीकारः श्रीगुप्तस्य योगिनीभूत्वं बभाषे। यथा—

"आगमेषु हि स्त्रियः पुंसश्चादियोगाधिरूढिसमये शक्तिभावाभिमानः शिवभावाभिमानश्च शिवशास्त्रोपदेशयोग्ययोगिनीभवसुतोत्पादनायावश्यकर्तव्यत्वेनोक्तः। तदुक्तम्—

तादृङ्मेलककलिकाकलिततनुर्यो भवेद् गर्भे।
प्रोक्तः स योगिनीभूः स्वयमेव ज्ञानभाजनं भक्तः॥ इति।

एतदतिरहस्यमपि ब्रुवतस्तस्य श्रीगुप्तगूढाभिसन्धिग्रन्थिभेदनदाढ्यं स्फुटमेवावद्योतते।

बहुत्र भास्करीकारो विमर्शिनीकार स्वात्मनो वस्तुप्रतिपादनप्रतिभयाभिभवन्निव स्पष्टं प्रतिभाति। यथा ज्ञानाधिकारस्थाम्—

तथा हि जडभूताना प्रतिष्ठा जीवदाश्रया।
ज्ञानं क्रिया च भूताना जीवतां जीवनं मतम्॥

इति कारिका व्याचक्षाणेनाभिनवगुप्तेन जडाना प्रकाशसारता वदता परमार्थदृष्ट्यैव चेतनात्मता प्रतिपादिता। परं तत्र भास्करीकारः—"अत्र च किञ्चिद् वक्तव्यं वर्तते" इत्येवमुपक्रम्य विस्पष्टं ब्रवीति—

"परमार्थदृष्टिस्तावदास्ताम्, बाह्यदृष्ट्यापि जडानामपि ज्ञानक्रियारूपा चेतनता विद्यत एव। तथा हि—वृक्षास्तावत् स्फुटं तद्युक्ताः। अन्यथा तेषां स्वं प्रति रसाकर्षणं योग्यदेशे मूलप्रसारणमारोहणं च न युज्यते। ततस्तदङ्गिभूता भूरपि चेतनैव, न हि निर्जीवस्याङ्गिनोऽङ्गं सजीवं दृष्टम्। जलस्य नियमेन निम्नदेशगमनरूपा क्रिया ज्ञानपूर्विकैवानुमीयते, तस्य ज्ञानाभावे तत्र गमनायोगात्। ज्ञानक्रिये एव च चेतनत्वमित्युक्तम्। तेजसश्चोर्ध्वज्वलनरूपा वायोश्च तिर्यग्गमनरूपस्वभावा क्रिया तादृश्येवेति तयोरपि स्फुटा चेतनता। अवशिष्टस्याकाशस्य च दहरत्वेन कर्णशष्कुल्यवच्छिन्नत्वेन च चेतनता स्फुटैवेति सर्वत्र ज्ञानमनुमीयत एव। यस्तु तां तत्रोपाधिकल्पितां मन्यते स जलादपीन्धनोपाधिना धूममुत्थापयतु, किमस्माकं तेन सह चर्चाभिः। यत्तु तेऽन्योन्यं स्वविषयैः प्रमातृभिः सर्वत्र चित्राः कथा न कुर्वन्ति तत्स्वभावविजृम्भितम्, स्फुटं चेतनत्वेन स्थितस्यापि चक्षुषस्तददर्शनात्; वागिन्द्रिय एव तदवगमात्। तर्हि स्वभाववाद एवास्तु, भवतु सर्वत्र का नो हानिः? अन्तर्यामिशुद्धचित्तत्ववशेनेन्द्रियाणां सा शक्तिरस्तीति चेत्सत्यम्, सर्वत्र तद्वशेनैव सास्तीति सर्वं जडमेवोच्यताम्, अजडमेव वेति किं विशेषकल्पनाभिः? परमार्थविचारे तु—

भावव्रात! हठाज्जनस्य हृदयान्याक्रम्य यन्नर्तयन्
भङ्गीभिर्विविधाभिरात्महृदयं प्रच्छाद्य संक्रीडसे।

यस्त्वामाह जडं ग्वयं सहृदयंमन्यत्वदुःशिक्षितो
मन्येऽमुष्य जडात्मता स्तुतिपदं त्वत्साम्यसंभावनात् ॥

इति नीत्या सर्वेषां भावानां स्वरूपमपि चिन्मयमेवेत्येकप्रकाशवाद एव सर्वत्र सुप्रतिष्ठितः। यस्तु ग्रन्थकृता विशेष उक्तः स स्फुटत्वास्फुटत्वकृतः, अथवा जडानामुपदेशानर्हत्वमपेक्ष्यैवमुक्तमिति न विरोधः" इति।

अयं सर्वत्र यथार्थदार्शनिक इव वास्तविकी वस्तुदृष्टि वितृण्वन्न मनागपि मन्दवाग्भवति। यथा स्फुटं कथयति ज्ञानाधिकारस्याष्टमाह्निकीयं विमर्शिन्याः प्रथमं श्लोकं व्याचक्षाणः—

"सिद्धा हि व्यवहारसमयेऽपि तत्कारणस्मृतिसंबन्धादिमूलभूतभोजकज्ञानक्रियाशक्तियुक्त-परप्रमातृरूपान्तरतत्त्वमेव महेश्वरतया जानते, न तु बहिः कमपि भस्मादिभूषितं मूढोपासामात्रार्थं कल्पितं परिमितं देवविशेषम्। सोऽपि कल्पितः किं ज्ञानक्रियासहितः क्रियते? न चेत्तर्हि पाषाणोपमः स न क्रीडाशीलवाचकदेवशब्दवाच्यतां भजते। यदि तु तद्युक्तः, तर्हि स आत्मैवेति किमर्थं कल्पनया स्वात्मा खेद्यते। या तु ज्ञानक्रिययोः परिमितत्वापरिमितत्वशङ्का, सोपाधिकल्पितैव। उपाधिरप्यत्र विचारितो न ततोऽतिरिच्यते। अत्र चाग्निकण एव दृष्टान्तीकार्यः। स हि महाग्निना सह कमपि भेदं नैव भजते, शनैः शनैः शक्त्यासादेन सोऽपि महाग्निरेव भवति" इति।

एवमेव स्थले स्थलेऽनेकत्र भास्करीकारस्य विशिष्टाः स्वतन्त्राः स्फुटतराश्च विचारा भास्कर्यां समुपलभ्यन्ते, य एनं टीकाकारमप्यत्र मूलकारानुरूपसंमानदानेनावदातयन्ति।

## श्रीपाण्डेयस्य सम्पादनम्

निर्दिष्टेन दिङ्मात्रेण नितरां स्फुटमेतद् यद् भास्करी भाषायाः, व्याख्यानशैल्याः, व्याख्यातव्यविषयस्य, नवनवस्य विचारजातस्य, मूलदर्शनसौन्दर्यस्य च दृष्ट्या नितान्तमुपादेया। न चानया विना विमर्शिनी वस्तुनः प्राप्यप्रवेशा। अतः स्थान एव श्रीपाण्डेयमहोदयेन पाण्डि-त्याभिनवकलाभ्यां पूर्णं संपादनमनुष्ठाय प्रकाशनकर्मतामियं गमिता। सर्वथाऽहमनुमन्ये श्रीपाण्डेय-महोदयस्य कथनमेतत्—

"विमर्शिनीग्रन्थस्य भास्करापेक्षया सरलतरभाषया व्याख्यालिखनं दुष्करम्। भास्करस्य भाषा संक्षिप्ता सुस्फुटा च। प्रायः कोऽपि मौलिकः शब्दोऽव्याख्यातो नास्ति। भास्करस्य व्याख्या केवलं शाब्दिकी नास्ति, अपि तु तेन मौलिकीर्दार्शनिकदृष्टीर्विशदयितुम्, अभिनवगुप्तस्य वास्तविकाभिप्रायं विस्फोरयितुं च प्रयतितम्" इति।

तथाप्येतत्कथने मे मनागपि नास्ति संकोचो यद् यादृशं साफल्यं भास्करकण्ठस्य संस्कृतभाषया विमर्शिनीव्याख्याने वर्तते, न ततः स्तोकमपि न्यूनं श्रीपाण्डेयस्य आङ्गलभाषया तद्व्याख्याने, प्रत्युत संस्कृतमूलस्य संस्कृतेन व्याख्यानापेक्षया भाषान्तरेण व्याख्यानस्य कठिनतरतया किञ्चिदधिकमेव।

श्रीपाण्डेयमहोदयेन ग्रन्थ एष भागत्रयात्मना निष्पादितः। स च प्रथमे भागेऽष्टाह्निकमयं ज्ञानाधिकारम्, द्वितीये च भागे चतुराह्निकमयं क्रियाधिकारमाह्निकद्वयमयमागमाधिकारमेकाह्निकमात्रमयं तत्त्वसंग्रहाधिकारं च क्रोडीकरोति। तृतीयो भागश्चाङ्गलभाषामय एव, स एव च श्रीपाण्डेयमहाभागस्य विशिष्टविद्वत्ताया आदर्शः। तत्रादावुपन्यस्तो दर्शनप्रवेशः शैवदर्शने प्रवेशकामानत्यन्तमुपकर्तुं प्रभवति, तस्य च प्रायः समग्रं प्रमेयवर्गं चारुणा प्रकारेण क्रमेण विस्पष्टं विशुद्धं च प्रतिपादयति। मन्ये, सकृत्कृतैतत्परिशीलनो जनो निस्सन्देहं शैवदर्शनस्य विस्तृतं वाङ्मयमव्याहतगत्यावगाहितुं क्षमत इति।

ग्रन्थे चात्र यथास्थानमेकविषयसंबन्धिनो बौद्धविचारानालोच्य, प्रकृतदर्शनस्यैतिहासिकं परिचयं निबध्य, कारिकाणां विमर्शिन्या भास्कर्यां च चर्चितानां सिद्धान्तानां सैद्धान्तिकानां ग्रन्थानां ग्रन्थकर्तॄणां प्रमाणवाक्यानां च सूचीरुपन्यस्य, पारिभाषिकशब्दान् संगृह्य, टिप्पणीनामुपजीव्यानि प्रमाणवचांसि च पूर्णतया निर्दिश्यास्योपादेयता श्रीपाण्डेयमहोदयेन सुतरां संवर्धिता।

स चायं ग्रन्थमणिर्वाराणसेयराजकीयसंस्कृतमहाविद्यालयस्य सुप्रसिद्धेन सरस्वतीभवनाख्यपुस्तकालयेन चतुःपञ्चाशदधिकैकोनविंशतिशततमे खिष्टाब्दे प्रयागस्थराजकीयमुद्रणालये मुद्राप्य प्राकाश्यं नीतः, "अधीक्षक, राजकीय मुद्रणविभाग, उत्तरप्रदेश, प्रयाग" इत्येतत्स्थाने सुलभश्च।

ग्रन्थमिमं राष्ट्रभाषयाऽसम्पाद्य साम्प्रतमवश्यंकर्तव्ये तत्समृद्धिसंवर्धने यद्योगदानं तैर्न कृतं तत्र मौनमेवावलम्बमान ईदृशस्य महदुपयोगिनो महनीयग्रन्थस्य बहूनामविदितचरस्य श्लाघनीयं सम्पादनं कृतवन्तं श्रीपाण्डेयमहोदयमहं सानन्दमभिनन्दयामि, निवेदयामि चैतादृशानन्यानपि श्रेष्ठग्रन्थानेवमेव समुन्नीय पण्डितजनान् प्रमोदमितुमिति॥

---

# स्पन्दब्रह्मविमर्शः

श्रीबटुकनाथशास्त्री खिस्ते, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

यं प्राप्य सर्वाऽऽगमसिन्धुसंघः पूर्णत्वमभ्येति कृतार्थता च ।
तं नौम्यहं शाम्भवतत्त्वचिन्तारत्नौघसारं परमागमाब्धिम् ॥

[ अभिनवगुप्तपादाचार्याः ]

इह खलु निखिलेऽपि विचारवीचिमालिनि मतिविभवोडुपमात्रेण संचरणसाहसजुषा विदुषा पुरस्तादस्ति चिरादभ्यस्तः प्रश्नोऽयम्—किं तावत् पारमार्थिकं सकलशास्त्रसिद्धान्तभूतं तत्त्वं ब्रह्म-परमेश्वर-हरिहर-प्रकृति-पुरुषप्रभृतिनानाशब्दप्रतिपाद्यमानमिति ।

तत्र केचन प्रत्यभिज्ञातपारमेश्वरस्वरूपा महामाहेश्वराचार्याः सविश्रम्भं प्रदिपादयन्ति यत्—स्पन्द एव परं तत्त्वमिति ।

यद्यपि 'स्पदि किञ्चिच्चलने' इति धातोर्निष्पन्नः किञ्चिच्चलनक्रियारूपः स्पन्दः, स च कथं परं तत्त्वमिति न ज्ञायते वक्तुम्; किन्तु तत्रोपलक्षणन्यायेन सर्वव्यापकक्रियारूपमर्थमादाय सर्वकर्तृत्वलक्षणः परमेश्वरस्वभावः प्रतिपाद्यमानो न दुष्यति । न च कर्तृत्वादिधर्मारोपे ब्रह्मणो निर्धर्मकत्वभङ्गप्रसङ्गः शङ्कनीयः, तस्योपरिष्टाद् वक्ष्यमाणया सरण्या स्वरूपाऽविनाभूत-तयैव समर्थयिष्यमाणत्वात् ।

अयमेव स्पन्दस्तत्तदवान्तरसंप्रदायभेदाद् माया, शक्तिः, ऊर्मिः, चितिः, संवित्, कुण्डली, कला, नित्या, प्रतिभेत्यादिभिः शब्दैर्व्यपदिश्यते । पारमार्थिकं तु स्वरूपमेकमेव ।

ननु स्पन्दशब्दमुखेनैव व्यपदेशे कोऽयमाग्रहः ? ब्रह्मप्रभृतीनि सन्त्येव तदभिधानानीति चेत्; उच्यते—सजातीय-विजातीय-स्वगत-सकलधर्मरहितब्रह्मस्वरूपापेक्षया स्पन्दात्मना तत्त्वी-कारे कोऽप्यनुभवगम्यस्तत्स्वरूपोत्कर्षः प्रतीयते । उद्यन्तृत्वलक्षणो हि परमेश्वरस्वभावः, यद्वशादेव सृष्ट्यादिपञ्चविधकृत्यकारित्वं घटते, नान्यथा ।

ननु प्रपञ्चं प्रति ब्रह्मणोऽप्यस्त्येवाऽभिन्ननिमित्तोपादानकारणत्वम्, तत्कोऽयं भवता नवः पन्थाः ? उच्यते—यथाकथञ्चित् प्रपञ्चजनकत्व-भासकत्वादिस्वीकारेऽपि ब्रह्मणो यदि नास्ति विलक्षणकर्तृत्वलक्षणस्वातन्त्र्यस्वीकारस्तर्हि स संबन्धः शब्दमात्रं स्पृशति, नार्थे विश्राम्यतीति । शब्दानुशासनेऽपि 'स्वतन्त्रः कर्ता' इति सूत्रे क्रियाया स्वातन्त्र्येण विवक्षितत्वमेव कर्तृस्वरूपं

प्रत्यपादि दीक्षितैः। तच्च स्वातन्त्र्यमुपादानान्तरनिरपेक्षक्रियानिर्वाहकत्वरूपमस्मिन्मते व्याख्यायते।

नन्नु ब्रह्मणोऽप्यभिन्ननिमित्तोपादानत्वमस्तीत्यैक्यमेव मतद्वये पर्यवसितमिति कथनीय-मिति चेन्न; कर्तृत्वस्य तत्राऽस्वीकारात्। अत्र च कर्तृत्वस्यैव तदुत्कर्षतत्स्वरूपनिर्वाहकत्वा-दित्यस्ति भेदः। यथोपश्लोकितो भगवान् केनाऽपि—

निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥

पद्येऽस्मिन् लौकिकचित्रकारतो योऽयं भगवतो व्यतिरेकोऽलङ्कारपदवीमधिशयानः कविना निरूपयितुमारब्धः, स तस्य तादृशविलक्षणकर्तृत्वलक्षणस्वातन्त्र्यभूमिकाधारक एवेति विदाङ्कु-र्वन्तु सन्तः। तच्च स्वातन्त्र्यं स्पन्दात्मकमेव।

तदेतत् स्पन्दात्मकं पारमेश्वरं वैभवं परमेश्वरस्वरूपाऽभिन्नमेव। न च धर्मसंपर्ककालुष्य-प्रसङ्ग उद्भावनीयोऽत्र धीमद्भिः। तथा हि—सेतुबन्धव्याख्याने श्रीभास्करराजदीक्षितचरणाः प्राहुः—"परशिवाख्यं ब्रह्म स्वभावादनन्तशक्तिकम्। तदुक्तं ज्ञानवासिष्ठे—"सर्वशक्ति परं ब्रह्म नित्यमापूर्णमव्ययम्" इति। "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतिभिः शक्तिशक्ति-मतोरभेदोपचाराच्च न ब्रह्मणो निर्धर्मकत्वभङ्गः। संक्षेपशारीरकेऽपि—"चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते" इति च।

इयं हि स्पन्दरूपिणी चिच्छक्तिर्निखिलं विश्वमभिव्याप्य प्रसरत्येव। तथा हि श्रुतिः— "स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्" इति। स भूमा परस्पन्दप्रसरस्वभावो भूमिं प्रमेयकक्षा स्वरूपेणापूर्य ततोऽप्यग्रे प्रसरत्येवेति श्रुतेरस्यास्तात्पर्यं प्रतीयते।

मार्कण्डेयपुराणेऽपि—"चितिरूपेण या कृत्स्नमेतद् व्याप्य स्थिता जगत्" इति परस्याः स्पन्दात्मिकायाश्चिच्छक्तेः क्त्वाप्रत्ययेन जगद्व्याप्त्यनन्तरमपि परसत्तारूपेण स्थितिरस्त्येवेति सूच्यते।

एवं परसत्ताऽपि स्पन्दात्मिकैव प्रतीयते। ततश्च स्पन्दरूपेण परापररूपं द्विविधमपि ब्रह्मस्वरूपं कुक्षीकृतं भवतीति विज्ञेयम्। यथोपनिषत्—

असन्नेव स भवति असद् ब्रह्मेति वेद चेत्।
अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः॥ इति।

श्रीप्रत्यभिज्ञायामपि—

सा स्फुरत्ता महासत्ता देशकालाऽविशेषिणी।
सैषा सारतया चोक्ता हृदयं परमेष्ठिनः॥ इति।

अत्रैतदालोचनीयम्—वेदान्तिना मते परस्य चिद्रूपस्य ब्रह्मणः शक्तिर्मायाख्या, सा च जडा। सैव जगतः परिणाम्युपादानम्। परं ब्रह्म तु विवर्त्तोपादानम्। अत एव जगतोऽपि मायिकत्वाज्जडत्वं मिथ्यात्वं च। अद्वैतश्रुतयस्तु पारमार्थिकव्यक्तिरेकैवेत्येवंपराः।

आगमविदा पक्षे तु—"परब्रह्मनिष्ठा या चिच्छक्तिरौपनिषदानामपि संमता सैवानन्तरूपत्वात् 'माया' इत्युच्यते। 'पराऽस्य शक्तिर्विविधैव श्रूयते', 'माया च अविद्या स्वयमेव भवति' इत्यादिश्रुतेः। तद्विलास एव च प्रपञ्चः, अत एव च चिद्रूपः—'चिद्विलासः प्रपञ्चोऽयम्' इति ज्ञानवासिष्ठात्। अत एव च सत्योऽपि। सर्वं ब्रह्मेति सामानाधिकरण्यस्यात्यन्ताऽभेद एव स्वारस्यात्। न चाद्वैतश्रुतिविरोधः, विरोधाऽऽपादकस्यैकस्य भेदस्यैव मिथ्यात्वाङ्गीकारात्" इति श्रीभास्करराजीयसेतुबन्धव्याख्यानप्रदर्शितदिशा चैतन्याद्वयवादब्रह्माद्वयवादयोर्मूलत एव भेदः प्रवर्तते। अत एवैतन्मते स्वीक्रियमाणापि 'माया' न तथा बन्धहेतुः, स्वातन्त्र्यकल्पितत्वात्। तदुक्तमभियुक्तैः—

परमं यत् स्वातन्त्र्यं दुर्घटसंपादनं महेशस्य।
देवी माया शक्तिः स्वात्मावरणं शिवस्यैतत्॥ इति।

एवं स्पन्दात्मकमेव स्वीक्रियमाणं ब्रह्मस्वरूपं हृदयङ्गमतामुपयाति। अन्यथाभावे तु—

अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः।
महेश्वरत्वं संवित्त्वं तदत्यक्षद् घटादिवत्॥

इत्युक्तनीत्या परब्रह्मणोऽपि घटादिषजडत्वापत्तिरपरिहरणीया समापतेत्।

अपरिच्छिन्नस्वप्रकाशरूपस्य परमेश्वरस्य चितिसारतया श्रीशिवसूत्रेष्वपि व्यापकमर्थमुद्भावयितुं 'चैतन्यमात्मा' इति भावप्रधानो निर्देशो व्यधायि।

एवं सर्वव्यापकमहोदधिकल्पस्य परमशिवस्य चिद्रसतरङ्गपरम्परारूपिण्याः स्पन्दात्मिकायाः परस्याः शक्तेर्व्याप्तिसंकोचक्रमेण चितिः, चेतनः, चेत्यम्, चित्तमिति व्यपदेशाः प्रादुर्भवन्ति। अयमपि सङ्कोचविकासक्रमः स्पन्दात्मेति न विस्मरणीयम्। सूत्रे तु सर्वस्यापि संग्रहाय 'चैतन्यमात्मा' इति निर्देशः। एतत्तत्त्वप्रनिपादनेच्छयैव श्रीशङ्करभगवत्पादाचार्या अपि दक्षिणामूर्त्तिस्तवे—

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुन-
र्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम्।
मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया
तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तये॥

इति स्तुतिरूपेण शक्तिस्पन्दस्य माहात्म्यमुपवर्णयन्ति । मायापदेनात्रापि स्वातन्त्र्यरूपिणी मायाशक्तिरभिप्रेता । तथा च प्रत्यभिज्ञाहृदये—"स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" इति ।

अस्याश्च स्पन्दात्मिकायाश्चिच्छक्तेः प्राथमिक उन्मेषः प्राणरूपेण संपद्यते । तदुक्तम्—"प्राक् संवित् प्राणे परिणता" इति । दक्षिणामूर्त्तिस्तवेऽपि—

बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा ।
स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया
तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तये ॥

इत्थमाचार्या अमुमेवार्थं संकेतयन्ति ।

प्राणोन्मेष एव च मातृकोन्मेषः, सैव च शब्दशास्त्रपर्यन्तभूमिरिति विषयान्तरत्वान्नेह प्रतन्यते । श्रुतिरपि तथा—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादि ।

एतन्मतनिष्कर्षः श्रीमद्भट्टवामदेवशब्दैरयमुपस्थाप्यते—

"इह खलु निखिलजगदात्मा सर्वोत्तीर्णश्च सर्वमयश्च विकल्पाऽसंकुचितसंवित्प्रकाशरूपोऽनवच्छिन्नचिदानन्दविश्रान्तः प्रसरदविरलविचित्रप्रपञ्चप्रवाहवाहिनीमहोदधिर्निरतिशयस्वातन्त्र्यसीमनि प्रगल्भमानः सर्वशक्तिखचित एक एवास्ति संविदात्मा महेश्वरः । तस्य प्रकाशरूपता चिच्छक्तिः, स्वातन्त्र्यमानन्दशक्तिः, तच्चमत्कार इच्छाशक्तिः, आमर्शात्मकता ज्ञानशक्तिः, सर्वाकारयोगित्वं क्रियाशक्तिरिति । इत्थं सर्वशक्तियोगेऽप्याभिमुख्याभिः शक्तिभिरुपचर्यते" इति ।

अत्रेदं प्रष्टव्यम्—परशिवाख्यस्य ब्रह्मणो निरवधिकशक्तियोगेऽप्येकयैव स्पन्दापरपर्यायचिच्छक्त्या कथं सृष्ट्याद्यशेषघटनापटुत्वमिति ?

तत्रेदमुत्तरम्—परमतत्त्वं हि वस्तुत एकमेव, तस्य द्वावंशौ प्रकाशविमर्शाख्यौ स्तः । विमर्श एव हि स्पन्दः शक्तिर्वा कथ्यते । यावन्न विमर्शस्तावत् सन्नपि प्रकाशस्तिरोहितप्रायो भवति । विमर्शादेव प्रकाशस्य स्वरूपोपलब्धिः । तदुक्तम्—

"प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः" इति ।

विमर्शाख्यस्पन्दाविनाभूत एव हि भगवान् परं ब्रह्मेति सिद्धान्तः । न च द्वैतविशिष्टाद्वैतादिशङ्काकलङ्कावकाशोऽत्र करणीयः, तादृगननुभवात् । यदुक्तं श्रीप्रत्यभिज्ञाविमर्शिन्याम्—"विमर्शो

हि सर्वसह आत्मानमपि परीकरोति, परमप्यात्मीकरोति, द्वयमप्येकीकुरुते, उभयमपि न्यग्भावयति" इति। एतदभिप्रेत्यैव वचनमेतत् स्मर्यते—

"शिवः शक्तिरिति ह्येकं तत्त्वमाहुर्मनीषिणः" इति।

संविदोऽनवच्छिन्नतया व्यवहारभूमिकायामवच्छेदभावे जायमानेऽपि मूलरूपमखण्डमनवच्छिन्नमेव तिष्ठतीत्युदाहरणद्वारा प्राहुः—

कुम्भकारस्य या संविच्चक्रदण्डादियोजने।
शिव एव हि सा यस्मात्संविदः का विशिष्टता॥ इति।

एवमस्याः स्वरूपमुपदर्श्य प्रधानतः सृष्टिक्रमे समुपयुज्यमानाना स्पन्दशक्तीनामवतारक्रमो निरूप्यते। यथा श्रीमालिनीविजये—

या सा शक्तिर्जगद्धातुः कथिता समवायिनी।
इच्छात्वं तस्य सा देवी सिसृक्षोः प्रतिपद्यते॥
एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम्।
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते॥
एवं भूतमिदं वस्तु भवत्विति यदा पुनः।
ज्ञात्वा तदैव तद्वस्तु कुर्वन्त्यत्र क्रियोच्यते॥
एवमेषा निरूपापि पुनर्भेदैरनन्तताम्।
अर्थोपाधिवशाद् याति चिन्तामणिरिवेश्वरी॥ इति।

एवं क्रमशः परमेशादुल्लसन्त्यस्तिस्र इच्छाज्ञानक्रियाशक्तय एव विश्ववैचित्र्यप्रसरहेतव इत्यवसेयम्। पर्यन्ते पुनः क्रियाशक्तेरेव विलासः स्फुरतीति वाच्यवृत्त्याऽपि स्पन्दशब्दव्यवहारः समीचीनतामालम्बते।

एवं प्राचीनपद्धतिप्रदर्शनेन सहैवाऽऽधुनिकी प्रवृत्तिरपि दिङ्मात्रेणोपदर्श्यते—

वैज्ञानिकाः साम्प्रतं दृश्यस्य जगतः स्थूलं सद्रूपं विभजन्तो यं सिद्धान्तमधिजग्मुः, सोऽप्येतादृशो भातीव। विश्वमेतत्सर्वं परमाणुभिर्घटितं वर्तते। परमाणूना पृथक्करणमपि शक्यते विधातुम्। परमाणुश्च प्रत्येकं सौरमण्डलेन तुल्यो वर्तते, प्रतिपरमाणु च ऋणधनात्मिके विद्युच्छक्ती सन्ततं प्रवहतः। ते च परमाणुषु विद्यमानाः सूक्ष्माणवः सन्ति, ये क्रमशः 'एलोक्ट्रोन', 'प्रोट्रोन', 'न्यूट्रन'-शब्दैरभिधीयन्ते।

'नाइल्स बोहर'-नामकेन विदुषा प्रथममेतत् सिद्धान्तितं यत्—परमाणुं सुमेरुतयाऽङ्गीकृत्य तमभितः 'एलोक्ट्रोन'-संज्ञकास्तेजोमया अणवः सन्ततं स्फुरन्ति। तदीयस्फुरणेनोद्भवन्ती व्यापिका शक्तिरखिलमपि ब्रह्माण्डं व्याप्य विराजत इति।

एवमेव सुप्रसिद्धेन 'आइंस्टाइन'-महोदयेनाप्युद्घोषितमासीदेतद्यत्—पिण्डं शक्तिश्चोभयमप्येकमेव वस्तु। पिण्डस्य शक्तिमयत्वात्, स्थिरस्य पिण्डविशेषस्य कल्पनैवानुचिता। दृग्दृश्ययोः, देशकालयोः सर्वापि कल्पनातीव स्थूला प्रतीयते, सर्वस्यापि जगतो गतिरूपस्पन्दमयत्वात्। ते ते च विद्युदादिस्पन्दाः सूक्ष्मभावतारतम्यवशात् संवेद्या असंवेद्याश्चावभासन्त इति।

अयं चिच्छक्तेः स्पन्दमहासागरो वैज्ञानिकपरिभाषाया विद्युच्चुम्बकीयवर्णावलीति ( इलेक्ट्रो मैगनेटिक स्पेक्ट्रम ) पदेन निगद्यते।

विद्युच्चुम्बकीयवर्णावलीयं सततं मण्डलाकारं स्पन्दमानैव भवति। प्रतिनिमेषं ३०,००० सहस्रमण्डलान्यारभ्याऽसंख्यमण्डलावधिकोऽस्याः स्पन्दनक्रमः। इदमेव सृष्टेर्बीजम्, इयमेव महती चरमा च शक्तिर्ब्रह्म वा वैज्ञानिकाना मते।

यत् किमपि भवतु, तत्त्वान्वेषणे क्रियमाणे बुद्धिसंवादो भवतीति नैव चित्रमेतत्। प्राचीनसिद्धान्तेन सहैतद्विचारणीयतामर्हत्येव। प्राचीनाः परमर्षयस्तु साक्षात्कृततत्त्वार्थसार्था भगवद्रूपसमावेशान्मूलतत्त्वमध्यक्षयन्ति स्म। ततश्च सोऽयं स्पन्दसिद्धान्तोऽपि सुतरा गभीरतरः केवलमेकदेशेन किञ्चिद् व्याख्यातो विदुषा परितोषाय। ततश्च संगच्छते वचनमेतत्—

शक्तयोऽस्य जगत्सर्वं शक्तिमाश्च महेश्वरः।

इति शिवम्॥

---

# क्षणभङ्गवादः

श्रीजगन्नाथ उपाध्यायः, रा० स० म०, वाराणसी।

## क्षणिकवादस्य उद्भवस्तस्य महत्त्वं च

भारतीयदर्शनेषु न्यायशास्त्रस्य प्रादुर्भावकालादेव पदार्थाना क्षणिकत्ववादस्थिरत्ववादयो· विवादः प्रचलति। दर्शनेषु न्यायशास्त्रस्य बौद्धबौद्धेतरशाखयोः कस्या सर्वप्रथमं न्यायशास्त्रं प्रादुरभूदिति न निर्धारयितुं शक्यते। यद्यपीशानः पूर्वं प्रथमशताब्द्या खीष्टीयप्रथमद्वितीय-तृतीयशताब्दीषु च नागसेन-नागार्जुन-वसुबन्धुप्रभृतीना बौद्धाना मिलिन्दप्रश्न-विग्रहव्यावर्तनी-वादविध्यादिग्रन्थेषु न्यायतत्त्वानामुन्मेषो दृश्यते, तथापि स्पष्टतो न्यायतत्त्वान्यधिकृत्य न्यायशास्त्रं महर्षिकणादगौतमाभ्या खीष्टीयतृतीयचतुर्थशताब्दयोः प्रवर्तितम्। पश्चाच्च पञ्चमशताब्द्या दिङ्नागप्रभृतिभिरस्मिन् शास्त्रे प्रवेशः कृतः। गौतमकाणाददर्शनेषु पदार्थाना क्षणिकत्वविचारो नास्त्येवेति प्रतीयते। बौद्धेषु यद्यपि पदार्थमधिकृत्य क्षणिकतायाः प्रयोगो बुद्धवचनादारभ्य समस्तपालिग्रन्थेषूपलभ्यते, तथाप्यसौ क्षणिकवादपदं नाधिरोहति। वस्तुतस्तत्र तत्र प्राचीनबौद्ध-ग्रन्थेषु प्रयुक्तः क्षणिकशब्दोऽनित्यतापरपर्याय एव। सौत्रान्तिकानामेवेदं तर्कवैदग्ध्यं येन पदार्थाना क्षणभङ्गवादो दर्शनेषु महता समारम्भेण प्रवृत्तः, अथ च तद्विरोधेन बौद्धेतरनैयायिकादिषु स्थिरपदार्थवादोऽपि परा पुष्टिमवाप।

स्थिरवादक्षणभङ्गवादयोरिदमत्यर्थं गौरवं यदेतयोर्वादयोः पदार्थतत्त्वज्ञानस्य सरणिमव-लम्ब्यैवान्यभारतीयदर्शनान्यपि विकासमवापुः। एतयोः पर्यालोचनेनेदं स्पष्टमिव भवति यत्समस्तभारतीयदर्शनाना स्थिरवादः क्षणभङ्गवाद इति विभागद्वयेनैव विकासः संपन्नः। वस्तुतः स्थिरवादस्यैव ज्ञानविकासविधया ब्रह्माद्वैतवादे, क्षणवादस्य च शून्याद्वयवादे विरामोऽ-जायत। यतो हि वेदप्रामाण्यवादिन्यायवैशेषिकादिप्रस्थानेषु पदार्थाना स्थिरत्ववादः स्वीकृतः। तांश्च विकासमापद्यमानोऽसाववयविसमवायादिपदार्थनिरसनमुखेन वेदान्तसिद्धान्ते परमस्थिरस्या-द्वितीयस्यात्मनः पारमार्थ्ये पर्यवसन्नः। बौद्धा अपि चिरन्तनकाल एव पदार्थाना क्षणिकत्व-ममन्यन्त, अत एवानन्तरं विविधबौद्धप्रस्थानेषु यथा यथाऽन्तर्बाह्यपदार्थास्तैश्चिन्तिताः, तथा

तथा क्षणिका अपि पदार्था विशीर्णाः सन्तो माध्यमिकाना निरालम्बे तत्त्वे सर्वथा द्वैतविवर्जितेऽद्वये शून्ये पर्यवसन्नाः ।

## सौत्रान्तिका एव परमार्थतः क्षणभङ्गवादिनः

बौद्धानामवान्तरप्रस्थानानभिज्ञाः सर्वानेव बौद्धान् क्षणिकवादित्वेनैवाभ्युपगच्छन्ति, परमिदं न तत्त्वमवगाहते । बौद्धेषु सौत्रान्तिका एव वस्तुतः क्षणिकवादिनः सन्ति । दिङ्नागप्रभृतयो बौद्धनैयायिका मूलतः सौत्रान्तिका एव । केचन विज्ञानवादिनोऽपि क्षणभङ्गवादमङ्गीकुर्वन्ति स्म । साम्प्रतं मूलसौत्रान्तिकाना साहित्यमल्पमेवोपलभ्यते, अत एव सौत्रान्तिकसिद्धान्ताना सम्यगाकलनं न भवति । अथापि बौद्धव्याख्याग्रन्थेषु वैभाषिक-विज्ञानवादि-माध्यमिकाना सौत्रान्तिकेभ्यो यो हि शास्त्रार्थः संप्रवृत्तस्तेनेदं निर्गलति यत् सौत्रान्तिका अपि वैभाषिक-वैशेषिक-गौतमादिवद् बाह्यार्थवादिनः, अथ च परमाणुवादिन आसन् । परन्तु तेषामयं विशेषो यत्ते वस्तूनामतीतानागतकालवर्तित्वं न स्वीकुर्वन्ति । अतीतानागतकालखण्डनेनैव च तेषा मते वस्तूना क्षणिकत्वमापद्यते । अपि च सौत्रान्तिका बाह्यार्थवादिनः सन्तोऽपि वैभाषिकवैशेषिकवद् बाह्यसता वस्तूना केषाञ्चिन्नित्यत्वं केषाञ्चिदनित्यत्वं च न स्वीकुर्वन्ति । सौत्रान्तिकाः क्षणिकानित्यतावादिनः । ते हि सर्वमेव वस्तुजातं क्षणिकमनित्यं चेति कल्पयन्ति । अत एव सौत्रान्तिकाः पराभिमतं क्षणात्परं स्थायिनं भावं नित्यमिति ज्ञात्वा खण्डयन्ति । तेषा मते सौत्रान्तिकातिरिक्ताः सर्वं एव वादिनः पदार्थनित्यतावादिनः स्थिरवस्तुवादिनो वा, क्षणिकवादिनस्तु सौत्रान्तिका एव । एतेनेदं स्पष्टमिवास्ति यद् भारतीयबाह्यार्थसद्वादिदर्शनेषु सौत्रान्तिका एव क्षणभङ्गवादिनः । अन्ये च ये वादिनः केषुचित् पदार्थेषु क्षणिकत्वव्यपदेश कुर्वन्ति ते वस्तुतः पदार्थानामनित्यतामेव बोधयन्ति न क्षणिकताम् । वैभाषिकाः संस्कृतधर्माणा क्षणिकत्वं मन्यन्ते, किन्तु तेषा क्षणिकत्वे जाति-जरा-स्थित्यनित्यता चेति चत्वारि लक्षणानि समाविशन्ति । नैयायिका वैशेषिकाश्च केषाञ्चित् पदार्थाना क्षणिकत्वं स्वीकुर्वन्ति, किन्तु तेऽपि तेषा तेषा क्षणिकाना द्विक्षण-त्रिक्षण-चतुःक्षणावस्थायित्वमेव मन्यन्ते । अत्र हेतुरेतयोः कालत्रयस्वीकार एव, कालत्रयेऽपि पदार्थानामस्तित्वस्वीकारादेवैतौ न क्षणभङ्गवादिनौ ।

एवं च शारीरकसूत्रभाष्ये भगवता शङ्करेण सर्वास्तिवादखण्डनावसरे तेषु ( सर्वास्तिवादिषु ) क्षणिकत्वमारोप्य यत् खण्डनं कृतं तद् बौद्धानामवान्तरभेदमविविच्यैव कृतमिति प्रतिभाति । चतुर्विधाः सर्वास्तिवादिनः सन्ति । तत्र भदन्तधर्मत्रातो भावान्यथात्ववादी । स

हि भाववैसादृश्येनातीतानागतप्रत्युत्पन्नास्त्रयोऽध्वानः सन्तीति समाम्नाति। तस्य नये द्रव्ये नान्यथात्वमपि त्वतीतानागतप्रत्युत्पन्नानामेवान्यथाभावः। द्वितीयो भदन्तघोषको लक्षणान्यथात्वं मन्यते। अस्य मतेऽतीतपदार्थोऽतीतलक्षणो भवति, परं नासौ प्रत्युत्पन्नानागतलक्षणवियुक्तो भवति। अनागतोऽनागतलक्षणः, परं नासौ प्रत्युत्पन्नातीतलक्षणवियुक्तः। एवमेव प्रत्युत्पन्न-पदार्थः प्रत्युत्पन्नलक्षणः, परं नासावतीतानागतलक्षणवियुक्तः। तृतीयो भदन्तवसुमित्रः पदार्थाना-मवस्थान्यथात्वं स्वीकरोति। अस्य मते पदार्थेष्ववस्थात एव भेदो न द्रव्यतः। चतुर्थो भदन्त-बुद्धदेवः। अयं हि पदार्थानामन्यथात्वं मनुते। एतेषां चतुर्णां मते पदार्थाः कालमतिक्रामन्तस्तानि तानि नामानि गृह्णन्ति। एषु चतुर्ष्वपि वादेषु पदार्थानां क्षणभङ्गवादः कुत्रचिदपि नोपलभ्यते। अतो भगवता शङ्कराचार्येण सर्वास्तिवादिषु क्षणिकवादित्वमारोप्य तन्मतखण्डनं विचारणीयमेव।

## बौद्ध-बौद्धेतरयोः परमाणुस्वरूपम्

वैभाषिक-सौत्रान्तिक-कणाद-गौतमप्रभृतयः सर्वेऽप्येते परमाणुवादिनः सन्ति। तैः परमाणुभिरेव भूतभौतिकसृष्टिरिति स्वीक्रियते। एतेषां सर्वेषामेव मते परमाणूनामतीन्द्रियत्वे न विवादः। अतीन्द्रियैः परमाणुभिः सृष्टे पदार्थे स्थौल्यं कथमतिशेत इत्यत्रास्ति वैमत्यम्, अस्ति च परमाणुस्वरूपविषयेऽपि विवादः। वैभाषिकाणां सौत्रान्तिकानां च मते परमाणवो विनाशिनः, नैयायिकानां वैशेषिकाणां च नये परमाणवोऽविनाशिनः। तैः स्थौल्यप्रतीतिसिद्धये परमाणुसमष्टिस्वतन्त्रो भिन्न एकोऽवयवी स्वीक्रियते। बौद्धाः परमाणु-समष्टिभिन्नं कमप्यतिरिक्तपदार्थं न मन्वते। तेषां मत आकाशमेव केवलं स्पर्शरहितं द्रव्यम्, अन्ये च चत्वारः स्पर्शवन्तः। अतस्तेषां मते स्पर्शवद् द्रव्यमात्रमणुरिति सिद्धान्तः, स्पर्शवत्त्वमणुत्वव्याप्य-मिति च व्याप्तिः। अत एव बौद्धाः स्पर्शवत्त्वात् पदार्थानामणुत्वमामनन्ति। अवयविवादिनो नैयायिका वैशेषिकाश्चावयविष्वेव स्पर्शवत्त्वं स्वीकृत्य तदर्थमणुत्वं न स्वीकुर्वन्ति। अत एवै-तेषां मते स्पर्शवत्त्वमणुत्वव्याप्यमपि न भवति। सर्वास्तिवादिनो बौद्धाः परमाणुरित्यनेन संघातपरमाणुरित्येव मन्वते न द्रव्यपरमाणुः। संघाते स्पर्शवत्त्वं सुतरामायाति। वसुबन्धुप्रभृतयो द्रव्यपरमाणुं स्वीकुर्वन्ति। एतेषां मत एकैका रूपपरमाणवः पृथग्भूता न सन्ति, अपि त्वेते संहत्य तिष्ठन्ति। एतेषां नयेऽष्टनवदशैकादशद्रव्यपरमाणूनां सहोत्पादो भवति। एकस्मिंश्च संघाते तेषामेव द्रव्याणामुपलब्धिर्भवति येषां कार्यतः स्वरूपतो वा तत्र सत्ता स्यात्, न तु शक्तितः साम-र्थ्यतश्च। सौत्रान्तिकनये स्कन्धानामायतनानां च प्रज्ञप्तिसत्त्वम्, धातूनामेव केवलं द्रव्यसत्त्वं

स्वीक्रियते। प्रज्ञप्तिसत्त्वेन वस्तूनामपारमार्थ्यमुच्यते बौद्धैः। वैशेषिकनये त्रसरेणूनां षष्ठांश एव परमाणुः। अणुद्वयसंयोगात् सर्वथा पूर्वतो भिन्नो द्व्यणुक उत्पद्यते। एवमेव सर्वत्र स्वावयवेभ्यः सर्वथातिरिक्तः स्वतन्त्रोऽवयव्युत्पद्यते, यस्मिन् स्थौल्यादेः प्रतीतिः। अत्रायमपि विशेषो यन्नैयायिकाना वैशेषिकाणा च परमाणुर्नित्योऽपि सन् दिक्कालातीतो न भवति, बौद्धाना परमाणुः क्षणिकोऽपि दिक्कालातीतो भवति। नैयायिकाना परमाणुष्वनेके गुणा जातयो विशेषाश्च सन्ति, बौद्धपरमाणुस्तु द्रव्यमात्रम्। इदं च द्रव्यं नैयायिकानामिव गुणाश्रयः कर्माश्रयो वा न भवति, बौद्धाना नयेऽधिष्ठानरूपद्रव्यस्यैवाभावात्। सौत्रान्तिकाना च परमाणुर्देशतः कालतः स्वरूपतो वाऽन्यैः सदा विच्छिन्नः स्वतन्त्रोऽसंबद्धश्च तिष्ठति।

## क्षणस्य परमाणुरूपता

अयमेव पूर्वोक्तः परमाणुर्बौद्धाना नये क्षणः। नैयायिकाना क्षणस्तु परमाण्वतिरिक्तः परमाणुक्रियावच्छिन्नः सूक्ष्मतमः कालः। परमाणुर्ह्यनौपाधिकत्वान्नित्यो भवति। अत एव क्षणाना क्षणिकत्वं तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपं स्वीक्रियते, तदुपाधिक्रियाणां क्षणिकत्वात्। अत एव नैयायिका वैभाषिकाश्चाकृतकत्वाभ्युपगमेनाकाशादीना नित्यत्वं मन्यन्ते, क्षणभङ्गवादिना मते तु व्योमादीनामपि कृतकानामिव क्षणभङ्गित्वमेव। क्षणिकवादिना क्षणपदार्थश्चोत्पादानन्तरं विनाशी भवति। उक्त च शान्तरक्षितेन तत्त्वसंग्रहे स्थिरवादपरीक्षाप्रकरणे—

> उत्पादानन्तरास्थायिस्वरूपं यच्च वस्तुनः।
>
> तदुच्यते क्षणः सोऽस्ति यस्य तत् क्षणिकं मतम्॥ [पृ० १४२, श्लो० ३८८]

यथा स्वस्य भावः स्वभावः, शिलापुत्रकस्य शरीरमित्यादावसत्यपि वस्तुतो भेदे बुद्धिपरिकल्पितं भेदमाश्रित्य षष्ठीविभक्तिर्भवति, तथेहाप्यात्मलाभानन्तरं विनाशी क्षणः स यस्यास्ति स क्षणिक इति मत्वर्थीयः प्रत्ययो भवति। बौद्धाना नये वाचा वस्तुस्वभावानुविधायित्वाभावेन वक्तुरिच्छानुविधायित्वेन च मत्वर्थीयो विग्रहो न दोषावहः।

## वस्तूनां क्षणिकत्वे प्रमाणव्यवस्था

अत्र संक्षेपेण परमाणुस्वरूपविचार उपस्थापितः। एतदनुरोधिना प्रमाणेनापि भवितव्यम्। अतोऽत्र क्षणिकवादसंमतानि प्रमाणानि विचार्यन्ते।

सौत्रान्तिकाः सत्त्वेन हेतुना क्षणिकत्वं साधयन्ति। सत्त्वं चार्थक्रियाकारित्वम्। अर्थक्रिया हि प्रयोजनस्य निष्पत्तिः। सामर्थ्यमेव चापेक्ष्यतेऽर्थक्रियाकारित्वाय। अर्थक्रियाकारित्वं च स्वलक्षणसामान्यलक्षणयोरेव। तथा हि—वस्तुनो ह्येकमसाधारणं तत्त्वमस्ति,

अन्यच्चास्ति सामान्यं तत्त्वम्। यदसाधारणं तदेव परमार्थसत्, तदेव च स्वलक्षणम्। तदेव सौत्रान्तिकानां परमाणुः। विकल्पविज्ञानेनावसीयमानोऽर्थः सामान्यं तत्त्वम्। सामान्यलक्षणं हि वस्तूना साधारणं रूपम्। वस्तूना यत् साधारणं रूपं भवति, तत् समारोप्यमाणं भवति; यथा सकलबाह्यघटपटादिगतमनुगतरूपम्। यत् स्वलक्षणं तत् प्रत्यक्षस्यैव विषयः, सामान्यलक्षणं चानुमानस्यैव विषयः। स्वलक्षणसामान्यलक्षणव्यतिरिक्तो विषयो नास्ति। अथ च नैयायिकानामिव सामान्यविशेषात्मक एको विषयो नास्ति, परस्परविरुद्धयोरैकात्म्यायोगात्। अत एव बौद्धानां मते विषयद्वैविध्येन प्रमाणद्वैविध्यव्यवस्था। नैयायिकानां मते तु सामान्यविशेषात्मक एको विषयः, अतस्तेषु प्रमाणसंप्लवो विद्यते।

एतदालोचनेनेदं पर्यवस्यति—स्वलक्षणमेव परमार्थसत्, तदेव च कल्पनापोढम्। अतस्तदेव प्रत्यक्षस्य विषयः; आनुमानिकं च सामान्यलक्षणमपरमार्थसदिति। अत्र भवेत् केषाञ्चिदाशङ्का—बौद्धेष्वपरमार्थविषयत्वेनानुमानस्य कथं प्रामाण्यम्? अथ च विषयद्वैविध्यस्यासत्त्वात् कथं प्रमाणद्वैविध्यमिति? तत्रोच्यते—

यद्यपि यदर्थक्रियासमर्थं तदेव सिद्धान्ते परमार्थसत्, अर्थक्रियासामर्थ्येनैव चाविसंवादित्वं ज्ञानानाम्। अर्थक्रियासामर्थ्यं च वस्तुतः स्वलक्षणस्यैव। अतः प्रत्यक्षस्यैवाविसंवादित्वात् प्रमात्वमित्यपि सिद्धान्तः, तथाप्यपरमार्थसतः सामान्यस्य तद्गोचरस्यानुमानस्यापि च प्रामाण्यं निराबाधं तिष्ठति। तथा हि—द्विविधो हि प्रमाणस्य विषयः। एको ग्राह्यः, अन्यश्चाध्यवसेयः। प्रत्यक्षप्रमाणस्य ग्राह्य एकः क्षणः, यः स्वलक्षणं परमाणुरिति वा शब्द्यते। ग्राह्येणैव केवलं ज्ञान आकारमाधीयते। एतस्यैव परमार्थसतोऽर्थस्य सन्निधानासन्निधानाभ्यां ज्ञानस्य प्रतिभासभेदो भवति।

प्रमाणस्यान्यो विषयोऽध्यवसेयो भवति। अध्यवसेयो हि सन्तान एव न परमार्थसन् क्षणः। यो ह्यध्यवसेय स प्रापणीयो भवति, क्षणस्य प्रापयितुमशक्यत्वात्। अतः सन्तान एव प्रापणीयोऽध्यवसेयो वा सिद्ध्यति। क्षणभङ्गवादिनये यो हि ग्राह्यः स एवाध्यवसेयो ज्ञानस्येति न वक्तुं शक्यते। ग्राह्यो विकल्पातीतः स्वलक्षणम्। अध्यवसेयश्चापरमार्थसत् सामान्यलक्षणमिति। यद्यपि विकल्पविषयः सामान्यलक्षणं दृश्य इवावसीयते, तथाप्यसौ न दृश्य एव; तत्रार्थक्रियाया अभावात्। बौद्धाना मतेऽन्यो हि दर्शनकालः, अन्यश्च प्राप्तिकालः। सन्तानगतमेकत्वमादायैवाभेदाध्यवसायो भवति, न तु वस्तुतोऽभेदः। वस्तुतस्तु यद्धि दृश्यते तदेव न प्राप्यते। इदं सामान्यलक्षणं बौद्धैः संवृतिसदिति गीयते। प्रमाणवार्त्तिकव्याख्यायां

परमार्थसत् संवृतिसदिति सत्यद्वययोर्व्याख्यानं कुर्वता मनोरथनन्दिना उक्तम्—"यदसदृशं शब्दाविषयोऽन्यनिमित्तभावे ज्ञानाभावश्च तत्परमार्थसत्। ततोऽन्यदशक्तं सदृशं शब्दविषयोऽन्यनिमित्तभावे बुद्धेर्विषयश्च तत् संवृतिसत्" [ २ । ३, पृ० ११२ ] इति।

एतेषा मते संवृतिसत्यमपि सामान्यलक्षणमर्थाध्यवसायित्वादर्थाविनाभूतत्वाच्च प्रमाणम्। यतो हि शशश्रृङ्गस्य न सामान्यलक्षणत्वमपि, तत्रार्थबुद्धेरेवाभावात्। एवमर्थाविनाभावित्वात् संवृतिसत्यगोचरस्यापि ज्ञानस्य प्रामाण्यं सिद्धयति।

बौद्धमते प्रत्यक्षे योऽर्थो दृष्टत्वेन ज्ञातो भवति स एव प्रवृत्तिविषयीकृतो दृश्यते। तथा हि—यद्यपि प्रत्यक्षस्य ग्राह्यत्वेन विषयः स्वलक्षणमेव, तथापि तत्र विजातीयव्यावृत्त्युपकल्पितं सामान्यमप्यस्ति। एतच्च सामान्यलक्षणं विकल्पमात्रम्। अयं हि विकल्पः 'प्रत्यक्षपृष्ठभाविविकल्पः' इति शब्देनोच्यते। अनेनैव प्रत्यक्षपृष्ठभाविविकल्पेनार्थस्याध्यवसायात्मकं ज्ञानं भवति, सजातीयव्यावृत्तत्वेनाप्यर्थस्य निश्चयात्। प्रत्यक्षगोचरं सामान्यं तु परमाणूना समुदायः। सौत्रान्तिकमते नहि प्रत्येकमणवो दृश्याः, किन्तु संचिता एव। संचयश्च परमाण्वन्तराणां विज्ञानजननसमर्थस्वभावोत्पादनप्रत्ययसन्निधानाद् भवति। अतः सौत्रान्तिकमते सामान्यगोचरं प्रत्यक्षज्ञानं संचितपरमाणुसंघातविषयमेव भवति, न तु परमाण्वतिरिक्तसामान्यविषयम्। अध्यवसायानुरोधेनैव हि यतोऽर्थप्रत्ययव्यवस्था, अतोऽर्थाविनाभावित्वादर्थं प्रापयद् यथा सामान्यविषयमपि प्रत्यक्षं प्रमाणं तद्वदर्थाविनाभावित्वेनानुमानमपि परिच्छिन्नमर्थं प्रापयत् प्रमाणमेव। यद्यपि बौद्धाना नयेऽयथाभिनिवेशेनानुमानं भ्रान्तिरेव, तथापि तैरभिप्रायाविसंवादाद् भ्रान्तस्यापि सांवृतस्य प्रामाण्यं स्वीक्रियते। अर्थक्रियार्थिनो हि तत्साधनसमर्थमर्थप्रापकं प्रमाणमिच्छन्ति, अतः सांवृतेनापि प्रमाणेनार्थप्राप्तिर्यदा भवत्येव तदा कथमनुमानस्य न प्रामाण्यम्। उक्तं च धर्मकीर्त्तिना—

"अभिप्रायाविसंवादादपि भ्रान्तेः प्रमाणता"। [प्र०वा०२।५६]

अन्यत्र चोक्तम्—"प्रामाण्यं व्यवहारेण" [प्र०वा० १।७] इति।

एवं स्थितौ सांवृतमपि कार्यकारणभावमाश्रित्य साध्यसाधनादिव्यवहारसंवादात् संपन्नो लोकव्यवहारः। तेन चानुमानस्य सांव्यवहारिकं प्रामाण्यं सुस्थमेव भवति।

## क्षणसन्ततिवादः

एतेन प्रमाणप्रमेयविचारेण पदार्थाना वास्तवं रूपं क्षणः, अवास्तवं च सामान्यं सिद्धयति। एतद्धि सामान्यलक्षणं क्षणसन्ततिवादे पर्यवस्यति। एतेन सौत्रान्तिकाना नये न

केवलं क्षणभङ्गवादोऽभिप्रेतः, अपि तु क्षणसन्ततिवादोऽपि। प्रायशः क्षणसन्ततिवादमनधिगम्यैव क्षणिकवादेऽनेक आक्षेपा वादिभिः क्रियन्ते। तद्यथा—

१. कर्मफलपरिग्राहकस्यैकस्य कर्तुरभावेन कृतनाशाकृताभ्युपगमदोषप्रसङ्गः।

२. क्षणिकत्वाभ्युपगमे यदि सर्वभावानां नैरात्म्यमेवाभ्युपगतं तर्हि मम विनाशादूर्ध्वं मम फलं न स्यात्, फलप्रसवकाले ममाभावात्, अतो न कुत्रापि जनानां प्रवृत्तिः; नापि च कर्मफलसंबन्धः।

३. कार्यकारणभावानुपपत्तिरपि क्षणभङ्गवादे। यतो हि कश्चिद् यावता कालेन कार्यं निर्वर्तयति तावन्तं कालं नावतिष्ठते, सर्वेषां भावानां क्षणिकत्वात्। अपि च न सर्वथा विनष्टस्य कारणक्षणस्य सर्वथा नवोत्पन्नेन कार्यक्षणेन सह कश्चित् संबन्धः, येन तयोः कार्यकारणभावः स्यात्। पूर्वापरक्षणयोः परस्परानपेक्षत्वात्, नाशस्य व्यापारेण कार्यस्याननुगृहीतत्वात्, कार्यसत्ताकाले च कारणस्यासन्निधानात् कथमपि न कारणव्यापारः कार्ये संभवति।

४. प्रतिसन्धातुरेकस्याभावान्न व्याप्तिसिद्धिः, न वाऽग्निधूमयोः कार्यकारणभावसिद्धिः।

५. प्रत्यभिज्ञानुपपत्तिः।

६. बन्धमोक्षावपि न प्राप्नुतः, क्षणिकवादे मोक्षाय प्रयत्नश्च व्यर्थः।

७. स्मृत्यनुपपत्तिः।

एतेषामाक्षेपाणां समाधानमस्मिल्लँघुनिबन्धे दुःशकम्, तथापि यतः क्षणसन्ततिवादमनाकलय्यैवैते आक्षेपाः सन्ति, क्षणानां सन्ततिश्च पूर्वापरक्षणयोः कार्यकारणसिद्ध्यधीना, अतः कार्यकारणसिद्धिरेव प्रथमं क्रियते। कार्यकारणसिद्ध्यैव चान्येषामप्याक्षेपाणां समाधानम्, अतोऽत्र कार्यकारणभाव एव केवलं साध्यते।

## क्षणसन्ततिवादे कार्यकारणव्यवस्था

बौद्धसिद्धान्ते बाह्याभ्यन्तरभावानां क्षणिकत्वे नैरात्म्ये च स्वीकृतेऽपि कर्मफलसंबन्धादिव्यवस्था सति कार्यकारणभावे सिद्ध्यति। अविनष्टादेव कारणात् कार्यं भवतीति क्षणवादिनां सिद्धान्तः। प्रतीत्यसमुत्पादो हि बौद्धानां कार्यकारणस्वरूपम्। अस्मिन् सतीदं भवति, अस्योत्पादादिदमुत्पद्यत इति धर्मसंकेतो भगवतो बुद्धस्य। 'अस्मिन् सतीदं भवति' इत्यनेन पूर्वकारणापेक्षः कार्यस्योत्पाद इत्यर्थः पर्यवस्यति। एतेन प्रतीत्यसमुत्पादे प्रतीत्यशब्दोऽपेक्षार्थको भवति। हेतुं प्रतीत्य = हेतुमपेक्ष्य, कार्यस्योत्पादः प्रतीत्य-

समुत्पादः। अस्मिन् सिद्धान्ते कारणं कार्यसत्ताकालं नानुवर्तते, कारणस्य क्षणिकतया तदानीमनवस्थानात्। अत एव कार्यकारणयोर्न यौगपद्यम्। उक्तं च कमलशीलेन तत्त्वसंग्रहपञ्जिकायाम्—"प्रथमक्षणभाविकारणतासादितात्मलाभमविनष्टमेव प्रतीत्य द्वितीयक्षणे कार्यं प्रजायते। तच्च तथा जायमानं (कार्यम्) अविनष्टादेव (कारणात्) जायते, प्रथमे क्षणे तस्याविनष्टत्वात्। सत्यामपि···चानुवृत्तौ न तदानीं तस्य (न कार्यकाले कारणस्य) कारणत्वम्, निष्पन्ने कार्ये तस्याकिञ्चित्करत्वात्" [पृ० १७५] इति। उक्तं च शान्तरक्षितेन—

न च जातं पुनस्तेन शक्यं जनयितुं पुनः।
अभूतभावरूपत्वाज्जन्मतो नान्यथा स्थितिः॥ ५११॥

यदि हि जातमपि जन्येत तदाऽनवस्था स्यात्। कारणानां व्यापारस्याप्युपरतिर्न स्यात्। यद्युच्येत कार्यकारणभावो हि कर्मकर्तृभावः। स भिन्नकालश्चेद् विरुध्येत। न हि घटकुलालयोर्यौगपद्ये कर्मकर्तृभावो दृष्ट इति। तन्न; इयं सहभाविता तदा युक्ता स्याद् यदि कारणं कार्योत्पत्तौ सन्दंशग्रहणन्यायेन व्याप्रियेत, अथवा कार्यमेव स्वजन्मनि वनितोपगूहनवत् स्वकारणाश्लेषरूपं व्यापारं कुर्यात्, किन्तु सिद्धान्ते निर्व्यापारमेवेदं विश्वम्। नहि परमार्थतः कश्चित् कर्ता कर्म वास्ति। अस्ति तु केवलं धर्मसंकेतः—अस्मिन् सतीदमुत्पद्यत इति। यतः कारणसत्तासमनन्तरमेव कार्यस्य निष्पत्तिः, अतोऽकिञ्चित्कर एव कार्ये व्यापारः। कारणस्य को नाम व्यापारः, यदनन्तरमेव कार्यमुत्पद्यते? यदि कारणसत्तासमनन्तरमेव कार्यमुद्भवति तदा सत्तैव व्यापारशब्दवाच्या भवतु, किं जन्मातिरिक्तव्यापारकल्पनया प्रयोजनम्।

सिद्धान्ते त्वियमेव हि कार्यस्य कारणेऽपेक्षा यत् तदनन्तरभावित्वमिति। कारणस्यापि कार्येऽयमेव व्यापारो यत् कार्योदयकाले तस्य सदा सन्निहितत्वमित्यभिप्रेत्यैवोक्तं शान्तरक्षितेन—

य आनन्तर्यनियमः सैवापेक्षाभिधीयते।
कार्योदये सदाभावो व्यापारः कारणस्य च॥ ५२१॥

कमलशीलः पञ्जिकायां तमिमं विषयं प्रपञ्चयति— व्यापारान्तरसमावेशरहिताद् बीजादेव केवलादङ्कुरादयो दृश्यन्ते, अतः कार्याणां भावमात्रगतान्वयव्यतिरेकानुविधायित्वं सिद्ध्यति, न तु व्यापारगतान्वयाद्यनुविधायित्वम्। नहि पदार्थस्य सत्ताव्यतिरेकेण कश्चिद् व्यापारः, सत्ताव्यतिरेकेण तस्यानुपलब्धेः। अपि च व्यापारवादी पृच्छ्यते—व्यापारात्मा पदार्थो व्यापारवतः पदार्थादर्थान्तरभूतः, अनर्थान्तरभूतो वा? यद्यर्थान्तरभूतस्तदा पदार्थस्य कारणत्वमेवास्तं गच्छेत्, तद्व्यतिरेकिणो व्यापारस्यैव कारणत्वात्। व्यापारेण संबन्धादतिरिक्तस्य व्यापारिणोऽपि

पदार्थस्य कारणत्वमिति चेन्न, परस्परानुपकारिणोः संबन्धासिद्धेः। यद्यनर्थान्तरभूतो व्यापारस्तदा सिद्धा पदार्थसत्तैव व्यापृतिरिति।

अपि च यथा व्यापाररहिताऽपि बुद्धिरर्थपरिच्छित्तौ जायमानैव सती स्वसत्तामात्रेणैव व्याप्रियते, तथा सर्वेषामपि पदार्थानामुत्तरकालभाविपदार्थव्यापारमन्तरेणैव कथं न हेतुत्वं संभविष्यति। तस्मादानन्तर्यमात्रमेव कार्यकारणभावव्यवस्थानिबन्धनं न व्यापारः। अत एव नैरात्म्यवादे स्वीकृतेऽपि कार्यकारणभावनियम उत्पद्यते। अधिष्ठातारमात्मानं विनाऽपि यथा बीजादिष्वङ्कुरादिजनने शक्तिरस्ति तथाऽऽध्यात्मिकेऽपि वस्तुनि भविष्यति। यथा कारणनिष्ठ-शक्तिनियमाद् बाह्ये पदार्थे हेतुफलव्यवस्था नियता, तथाऽऽध्यात्मिकेऽपि संस्कारराशौ पुद्गले स्यात्। कारणशक्तिनियमस्वीकारात् कुतश्चिदेव शुभाशुभकर्मणः क्षणपरम्परया नियतमिष्ट-मनिष्टं वा फलमाविर्भवति, कुतश्चिदेव हि रूपाद्यनुभवात् स्मरणं भवति, कुतश्चिदेव च विमर्शान्निर्णयो भवतीत्येवमादि सर्वमविरुद्धम्।

क्षणिकविज्ञानवादिमते कार्यकारणभावविचारः

बाह्यार्थसत्त्ववादिसौत्रान्तिकदार्शनिकानां प्रभावेण पश्चात्कालीना बाह्यार्थासत्त्ववादिनो विज्ञानवादिनोऽपि क्षणभङ्गवादिनः क्षणसन्ततिवादिनश्च संजाताः। तेषां मते पूर्वापरक्षणयो-र्वास्यवासकरूपः कार्यकारणभावसंबन्धः कथं भवतीति प्रसङ्गतो विचार्यते प्रमाणवार्त्तिका-लङ्कारमाधृत्य।

ननु क्षणिकविज्ञानपक्षे कथं वास्यवासकभाव इति, "अनुत्पन्नं न वास्येत, अतीतोऽपि न वासकः" इति वचनात्। सहितयोरपि परस्परमसंबन्धान्न वास्यवासकभाव इति चेदसत्; कार्यकारणभावविशेष एव वास्यवासकभाव इति सिद्धान्ते प्रतिपादनात्। कार्यकारणभावश्च क्षणि-कानामेव न तु नित्यानाम्। तथा हि—अवस्थितैर्भावैरवस्थिता भावा न वास्यन्ते, अपि तु विनश्यता पूर्वक्षणेनोद्भवदुत्तरक्षणं वास्यते। अविकार्ये हि नित्ये कार्यकारणता नैव युक्ता, यतः पूर्वस्माद-वस्थितो नित्यो वासनाऽऽसङ्गमपि नाचिनोति, पूर्वतोऽविशेषात्। भङ्गुरे तु पूर्वतो भिन्नत्वात् पूर्व-सादृश्यादस्ति वासना। एवं चेतसः क्षणिकत्वपक्ष उत्पन्नात् पूर्वज्ञानादुत्तरस्य ज्ञानस्योदयो भवति।

यद्युच्येत—असौ क्षण एव नास्ति तव यः परं कार्यमुत्पादयेदिति। तन्न, उत्पद्य विनष्टत्वेऽ-प्यारम्भोऽस्त्येव, क्षणं स्थितेः। ननु समानपरामर्शप्रत्ययादेकरूपतैवास्तु विज्ञानानाम्, तेन सदा एकविधमेव ज्ञानं स्यादिति चेन्न, पूर्वदार्ढ्यतो व्यवधानेऽपि वासनानां वैलक्षण्यस्वीकारात्। न चाप्येकविज्ञाननाशेन सर्वा वासना विनष्टाः स्युः।

उक्तं च—

कुसुमस्य विनाशे हि राग उत्पद्यता कुतः ।
बीजाङ्कुरादिनालादेस्तद्विलक्षणतः कथम् ॥

[ प्रमाणवार्त्तिकालङ्कारे, पृ० ३५८ ]

यथैते पूर्वपूर्वकारणजनिता विलक्षणा जायन्ते, तथा महिष्यादिधियामपि समानम् । एवं पूर्वपूर्वाश्रयविनाशेऽप्यपरापराश्रयोत्पादः सुसंगत.। न कदाचिदपि क्षणिकताहानिर्भावानाम् ।

इदं तु तत्त्वम् —विज्ञप्तिमात्रताविद्भिर्दर्शनप्रवाहवन्नैव वासनाप्रवाहः स्वीक्रियते, अपि तु शक्तिरूपा विज्ञप्तिः । अनया च भवेज्ज्ञानम्, ज्ञानेभ्यश्चेयमित्यन्योन्यगतिः । शक्त्यन्तरात्मकाद् विलक्षणाद्धेतोर्विलक्षणमन्यत् फलमुत्पद्यते ।

## क्षणवादे कर्तृत्वादिव्यवस्था

कर्तृत्वादिव्यवस्था तु सन्तानैक्यविवक्षया भवति । सन्तानैक्यविवक्षा कल्पनारोपितैव । विशिष्टहेतुफलभावनियतरूपाणां संस्काराणां प्रबन्धमेकत्वेनाऽध्यवस्य स एवाहं करोमीति व्यवहरति मुक्तये च प्रवर्तते । बौद्धमते परमार्थतो नहि कश्चित् संसार्यस्ति, किन्तु दुःखमेव केवलं हेतुबलात् प्रवर्तते । उक्तं च धर्मकीर्त्तिना प्रमाणवार्त्तिके—

स्थिरं सुखं ममाहं चेत्यादि सत्यचतुष्टये ।
अभूतान् षोडशाकारानारोप्य परितृष्यति ॥ [ १।२७२ ]

आत्मदर्शनमेव वस्तुतो बन्धकारणम् । अत आत्मदर्शनबीजस्य सत्त्वदर्शनस्य हानादेव मुक्तिः, "यावच्चात्मनि न प्रेम्णो हानिः स परितस्यति । तावद् दुःखितमारोप्य न च स्वस्थोऽवतिष्ठते ॥" [ १।१९३ ] इति वचनात् ।

नैरात्म्यभाव एव च बन्धनिवृत्तिकारणम् । उक्तं च प्रमाणवार्त्तिके—

यः पश्यत्यात्मानं तत्रास्याहमिति शाश्वतः स्नेहः ।
स्नेहात् सुखेषु तृष्यति तृष्णा दोषास्तिरस्कुरुते ॥ [ १।२१९ ]

तिरस्कुरुते = प्रच्छादयतीत्यर्थः ।

आत्मनि सति परसंज्ञा स्वपरविभागात् परिग्रहद्वेषौ ।
अनयोः संप्रतिबद्धाः सर्वे दोषाः प्रजायन्ते ॥ [ १।२२१ ]

आत्मनो नित्यत्ववादे तु बन्धमोक्षव्यवस्थैव न भविष्यति। उक्तं च धर्मकीर्त्तिना—

दुःखस्योत्पादहेतुत्वं बन्धो नित्यस्य तत्कुतः।
अदुःखोत्पादहेतुत्वं मोक्षो नित्यस्य तत्कुतः॥ [१।२०४]

अपि चात्मनो नित्यत्वस्वीकारे पुनर्जन्मापि न भविष्यति—

नित्यस्य निरपेक्षत्वात् क्रमोत्पत्तिर्विरुद्ध्यते।
क्रियायामक्रियाया च क्रिययोः सदृशात्मनः॥ [१।२६६]

अपि चासावात्मा कार्यकारणस्वभावः स्यात् क्रियाविरामोऽस्य न स्यात्। किञ्चात्मन एकरूपस्य कर्मकर्तृत्वे हेतुफलयोरप्यभेदः स्यात्। अतो मुक्तये सुभाविता सम्यग् दृष्टिः कर्तव्या, या सादरनिरन्तरदीर्घकालाभ्यासप्राप्तवैशारद्या सानुचरा मात्सर्यादिपरिवारसहितां तृष्णा हन्तीति।

क्षणभङ्गवादस्यानेनालोचनेन प्रमाणप्रमेययोर्यथा व्यवस्था भवति तथा निर्वाणस्यापि स्वरूपं निर्विकल्पमापद्यते। निर्विकल्पं च तत्त्वं विकल्पकल्पनानाजालं जगद् विधुनोति, निर्वाणस्य च लोकोत्तरत्वमद्वयत्वमनास्रवत्वमचिन्त्यत्वं सुखरूपत्वं प्रत्यात्मवेद्यत्वं च ख्यापयति।

एवमनेन क्षणभङ्गवादेन बौद्धदार्शनिकैस्तस्यैवोपव्याख्यानं क्रियते, यस्य भगवता—

सब्बे संखारा अनिच्चाति यदा पञ्ञाय पस्सति।
अथ निब्बिन्दति दुःखे एस मग्गो विसुद्धिया॥
[ धम्मपदे, मग्गवग्गे ]

इत्यादिना 'उदानम्' अकारि॥

# पाणिनीयनिपातनसूत्रालोचनम्

श्रीरामशङ्करभट्टाचार्यः हिन्दूविश्वविद्यालयः, वाराणसी।

भगवत्पाणिनिप्रणीतायामष्टाध्याय्यामन्तराऽन्तरा निपातनसूत्राणि संदृश्यन्ते। निपातनसूत्रविषये शङ्केयमध्येतॄणां मनसि जागर्ति किमर्थं प्रकृतिप्रत्ययनिर्देशं परित्यज्य पाणिनिना शब्दा एव निपातिताः, कथं नान्येष्वपि सूत्रेषु निपातनपद्धतिरेव समाश्रिता, कीदृग् लाघवादिकं वा निपातनरीत्याऽऽचार्येण विहितम्, अर्थनिर्देशविषये किं वा वैशद्यं निपातनबलेन प्रकटीकृतमिति। निबन्धेऽस्मिन् प्रश्नानिमानधिकृत्य सप्रमाणं किमपि समासत आलोच्यते।

निपातनशब्दः पाणिनीये संप्रदाये बहुष्वर्थेषु कृतव्यवहारो दृश्यते। तथा हि—सूत्रवाचित्वेन शब्दोऽयं भाष्यकृता प्रयुक्तः। यथोक्तम्—'किं निपातनम्? द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्" [६।४।२] इति। तदिदं निपातनं २।२।३ संख्यक पाणिनिसूत्रमेव। तथैव सूत्रस्थशब्दवाचित्वेनापि शब्दोऽयं पतञ्जलिनैव व्यवहृतः। यथोक्तम्—"तद् वै अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम्" [३।३।८३] इति। अत्र नागेशेन निपातनशब्दार्थो दर्शितः—"घनान्तर्घनप्रघणप्रघाणोद्घनापघनरूपेणेत्यर्थः" [उद्द्योते]। एतेनास्य सूत्रीयशब्दवाचित्वं सिद्धम्। कदाचिच्च शब्दोऽयं वार्त्तिकवाची दृश्यते। यथाह भाष्यकारः—"निपातनादेतत् सिद्धम्, किं निपातनम्? क्त्वाया वा प्रतिषेधः" [६।४।१४०] इति। अत्र 'क्त्वाया वा प्रतिषेधः' इति वचनं खलु वार्त्तिकमेव (६।२।२ भाष्यं दृश्यताम्)। न केवलं सौत्रशब्दा निपातनपदवाच्याः, अपि तु गणपाठीयशब्दा अपि निपातनपदभाज इति भाष्यतोऽवगम्यते। यथोक्तं गविष्ठिरशब्दमधिकृत्य पतञ्जलिना—"निपातनात् सिद्धम्, किं निपातनम्? गविष्ठिरशब्दो विदादिषु पठ्यते" [६।३।६][1] इति।

एतेन सामान्यत इदं सिद्ध्यति यदाचार्यकृतविशिष्टशब्दप्रयोगो[2] निपातनपदवाच्यः। पाणिनिसूत्रे यानि पदानि व्यवहृतानि, तानि यदि पाणिनिलक्षणेनैव साधूनि न स्युस्तर्हि

---

१. तथैव धात्वर्थनिर्देशकशब्दोऽपि निपातनपदवाच्यो दृश्यते। यथोक्तं काशिकायाम्—"कथमुद्यमोपरमौ? अड उद्यमे, यम उपरमे इति निपातनादनुगन्तव्यौ" [७।३।३४] इति।

२. मतमिदं नागेशेन स्पष्टं कथितम्। यथा—"एवं च 'निपातनात्' इत्यस्य सौत्रत्वादित्यर्थ इति भावः" [उद्द्योते, ६।३।३४] इति।

तान्यपि निपातनानीत्यभिधीयन्ते। यथा ५।३।५५ सूत्रे पाणिनिना 'अतिशायन'-पदं प्रयुक्तम्, तच्च नाचार्यलक्षणसिद्धमिति कृत्वा पतञ्जलिराह—"देश्याः सूत्रनिबन्धाः क्रियन्ते" इति। एतद्व्याख्याया कैयट आह—"निपातनाद् दीर्घत्वम्" [ प्रदीपे ] इति। एतेन प्रागुक्तोऽर्थः सिद्धो भवति।

यतो ह्याचार्यव्यवहारसिद्धमेव निपातनं भवति, अतस्तन्निपातनमित्युच्यते। आचार्येण नितरां पात्यते, आचार्यः स्वेच्छया पातयतीत्येवास्य निर्वचनम्। अत एव निपातनसिद्धशब्दविषये 'इदं निपात्यते' ( बहुषु स्थलेषु ), 'अहं निपातयामि' [ ३।१।१२२ श्लो०वा० ] इत्येतादृशानि वचांस्युपलभ्यन्ते भाष्यादिषु।

अथात्र वयं निपातनलक्षणं व्याख्यास्यामः। अत्रादाविदं विज्ञेयं यन्निपातितशब्दो न खलु प्रकृतिः, न वा प्रत्ययः। यथोक्तं कैयटेन—"अथ प्रकृतित्वमेषां कस्मान्न विज्ञायते ? पञ्चम्याः प्रत्ययस्य चानुपादानात्, अनिष्पन्नस्य च प्रकृतित्वाभावात्। प्रत्ययत्वं तर्हि कस्मादेषां न भवति ? लोके केवलानां प्रयोगदर्शनात्" [ प्रदीपे, ५।१।५६ ] इति। एतेन स्पष्टं भवति यन्निपातितशब्दाः खलु प्रकृतिप्रत्ययात्मकाः। एतादृशेषु शब्देषु प्रकृत्यादयोऽविस्पष्टरूपेण विद्यन्त एव। अत एवैतादृशशब्देषु कियान् प्रकृत्यंशः, कियान् वा प्रत्ययांश इत्यत्र संशयो जागर्त्येव। अत एव निपातितविंशत्यादिशब्दमधिकृत्य भाष्यकारो बभाषे—"इमे विंशत्यादयः सप्रकृतिकाः सप्रत्ययकाश्च निपात्यन्ते, तत्र न ज्ञायते का प्रकृतिः, कः प्रत्ययः, कः प्रत्ययार्थ इति" [ ५।१।५९ ]। एतेनेदं ज्ञाप्यते यद् विधिसूत्रेण सह निपातनसूत्राणामयमेव भेदो यद् विधिसूत्रे प्रकृत्यादीनां पृथगुल्लेखः क्रियते, निपातनसूत्रे पुनः समुदाय एवोच्चार्यते। तदिदं कैयटेन स्पष्टमभ्यधायि—"विधिनिपातनयोश्चायं भेदः—यत्रावयवा निर्दिश्यन्ते समुदायोऽनुमीयते स विधिः, यत्र तु समुदायः श्रूयतेऽवयवाश्चानुमीयन्ते तन्निपातनम्" [ प्रदीपे, तत्रैव ] इति।

एवं स्थिते प्रश्ना इमे प्रादुर्भवन्ति—किमर्थं प्रकृत्यादीनामुल्लेखमकृत्वा शब्दसमुदायो व्यवह्रियते पाणिनिना ? कथं न सर्वेषु स्थलेषु निपातनरीतिविधिरीतिर्वाऽऽद्रित आचार्येण ? शब्दनिष्पत्तिप्रक्रियायामर्थादेशने च किं किमपि लाघवं वैशिष्ट्यं वा जायते निपातनरीतिस्वीकारेण ?

आधुनिका गवेषका निपातनरीतिमसंगतां निष्फलां च मन्यन्ते ( दृश्यतां पवतेमहोदयकृतः "दी स्ट्रक्चर ऑफ दी अष्टाध्यायी" नामको ग्रन्थः )[१]। तन्मतनिराकरणार्थं चायमारम्भः।

१. "८।३।९० इत्यारभ्य ८।३।९५ पर्यन्तानि सूत्राणि निपातनसूत्राणीत्युच्यन्ते। किमर्थमेतानि सूत्राणि निपातनानीति ? किं पाणिनिना 'सूत्रं प्रतिष्णातम्' [८।३।९०] इत्येतत्

अस्माभिः प्राक् कथितं यन्निपातनं नामाऽऽचार्यव्यवहारः। परन्तु कदा निपातनं तन्त्रं भवति, कदा च नेति व्याख्यानतोऽवगन्तव्यम्। तदेतत् ६।४।२४ सूत्रभाष्यसन्दर्भे स्पष्टम्। यथा—"घिनुणि चोपसंख्यानं कर्तव्यम्, किं निपातनम्? त्यजरजेति (अर्थात् ३।२।१४६ सूत्रे त्यज-रज-धातू विद्येते)। अशक्यं धातुनिर्देशे निपातनं तन्त्रमाश्रयितुम्। इह हि दोषः स्यात्—दशनहः करणे—दंष्ट्रा। (अर्थाद् धातुनिर्देशे निपातनं तन्त्रं यदि स्वीक्रियेत तर्हि दंष्ट्रेत्यादौ निपातनान्नलोपापत्तिः स्यात्)। नैतद् धातुनिपातनम्, किं तर्हि? प्रत्ययान्तस्यैतद्रूपम्" इति। अनेन निपातनस्य तन्त्रत्वविचारोऽपि करणीय इति प्रतिभाति।[१]

निपातनस्वरूपं काशिकाया स्पष्टं लक्षितम्। यथा—"यदिह लक्षणेनोपपन्नं तत् सर्वं निपातनात् सिद्धम्" [५।१।५६, ७।४।६५] इति। एतेनेदं प्रतीयते यत् सूत्रीयकार्येण यन्न सिध्यति, तद् यद्याचार्यव्यवहारबलेन सिध्यति, तर्हि निपातनपदभाग् भवति। तथा चोक्तम्—"अन्यथा प्राप्तस्यान्यथोच्चारणं निपातनम्" इति। तदिदं शब्दनिष्पत्तिप्रक्रियादृष्ट्या द्विविधम्—अप्राप्तिप्रापणम्, प्राप्तिवारणं च। क्वचिच्च निपातनेनार्थनियमनमपि भवति। अतस्त्रिविधं निपातनकार्यं भवति। उक्तं च—

अप्राप्तेः प्रापणं चापि प्राप्तेर्वारणमेव वा।
अधिकार्थविवक्षा च त्रयमेतन्निपातनात्॥ इति।

कदाचिच्च विकल्पार्थमपि निपातनं दृश्यते। यथोक्तं काशिकायाम्—"विकल्पार्थं निपातनम्" [७।२।२७] इति।

---

'प्रतेः स्नातस्य सूत्रे' इत्येवंरूपेण न कथयितुं शक्यते, येन खलु कण्ठतः 'निनदीभ्यां स्नातेः कौशले' [८।३।८६] इति प्रकृतिप्रत्ययप्रदर्शनपरमेव सूत्रं व्यरचि? किञ्च, निपातन-सूत्रेष्वैकरूप्यं नावलोक्यते। ८।३।९० सूत्रे प्रतिष्णातशब्दवाच्यं सूत्रं प्रथमानिर्दिष्टम्, ८।३।९३ सूत्रे पुनर्वृक्षासने विष्टरवाच्ये सप्तमीनिर्दिष्टे। एतेषामसमानरूपाणां व्यवहाराणां संगतिः कथं स्यात्?" [ दी स्ट्रक्चर ऑफ दी अष्टाध्यायी, पृ० ६३ ]।

१. निपातनसिद्धं पदं लौकिकं वैदिक वेत्यत्र कदाचिज्जायते सन्देहः। यथा सनिंससनि-वांसमिति पदं लौकिकं वैदिकं वेति संशये काशिकाकारो निर्दिशति—"छन्दसीदं निपातनं विज्ञायते" [ ७।२।६९ ] इति।

अथात्र वयं निपातनसूत्रभेदान्[१] प्रदर्शयाम: । बहुप्रकाराणि खलु निपातनसूत्राणि—

( क ) केषुचित् सूत्रेषु निपातितशब्दैः सह तदर्था अप्युच्यन्ते । यथा—"क्षुब्धस्वान्तध्वान्त···" [७।२।१८] इति सूत्रे । यथा सूत्रान्तरेष्वर्थमनुक्त्वाऽपि निपातनप्रकारो दर्शित:, तद्वदत्रापि कथं नेति प्रश्नस्योत्तरे कैयटेनाभ्यधायि—"यदि धात्वर्थोपाधित्वेन मन्थादय आश्रीयेरन्—मन्थादिसाधने धात्वर्थे क्षुब्धादयो निपात्यन्त इति—तदा क्षुभितं मन्थेनेत्यत्रापि भावे क्तस्येट्प्रतिषेध: स्यादिति समुदायानामभिधेयभावेन मन्थादय इहोपात्ता इति प्रदर्श्यते" [प्रदीपे, ७।२।१८] । अर्थनिर्देश: खलु निपातनविषयप्रदर्शनार्थं इति काशिकाकार आह (पाकग्रहणं निपातनविषयप्रदर्शनार्थम्—६।१।२७) ।

( ख ) क्वचिच्च केवलानि पदान्येव सूत्रेषु निपात्यन्ते । यथा—"दाधर्तिदर्धर्ति···" [७।४।६५] इति सूत्रे । यतो ह्यत्र पूर्वोक्तप्रयोजनवत् किमपि प्रयोजनं नास्ति, अत: केवलानि पदान्येवोपदर्शितानि ।

( ग ) कदाचिच्च सानुबन्धकं निपातनं दृश्यते । "ऐकागारिकट् चौरे" [५।१।११३] इत्यस्योदाहरणम् ।

( घ ) धात्वर्थमूलकं निपातनसूत्रमप्यस्ति । यथा—"क्रय्यस्तदर्थे" [६।२।६२] इति सूत्रम् । अत्र तदर्थं इत्यनेन क्रीणात्यर्थं एवाभिप्रेत इति भाष्यतोऽवगम्यते ।

( ङ ) कदाचिच्च सूत्रस्थमेकमेव निपातितं पदं भिन्नस्वरकं पठितमिति दृश्यते । अयं खलु महत्त्वपूर्णो विषयो विशिष्टमालोचनमर्हति । तच्च लेखान्तरे प्रतिपादयिष्यते । अस्यैकमुदाहरणं "दाण्डिनायन···" [ ६।४।१७४ ] इति सूत्रीये ऐक्ष्वाकपदे दर्शनीयम् । अत्र यद्यप्येकमेवैक्ष्वाकपदं श्रूयते, तथापि स्वरभेदेन द्वे पदे स्वीकरणीये । यथोक्तं वार्त्तिककृता—"ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन" इति । व्याख्यातं च कैयटेन—"तत्र भिन्नस्वरयोरेकस्मिन् निपात्यमानेऽपरस्यासंग्रहादुभयमपि निपात्यम्" [ प्रदीपे ] इति । अत एव स्वरभेदमाश्रित्य द्वे उदाहरणे भाष्यकृता प्रदत्ते—ऐक्ष्वाक ऐक्ष्वाक इति । ननु तर्हि किमर्थं सकृदेव पदं पठितमिति ? कैयटेनास्योत्तरं दत्तम् । यथा—"स्वरभेदप्रत्यस्तमयेन निपातनं सर्वस्वरलौकिकप्रयोगसंग्रहार्थमिति" [ प्रदीपे ] ।

---

१. सन्ति केचिन्निपातिताः शब्दा ये वेद एव प्रयुज्यन्ते । "बहुप्रजाश्छन्दसि" [५।४।१२३] इत्यस्यैकमुदाहरणम् ।

अस्य नियमस्य द्वितीयमुदाहरणं तु "अपस्पृधेथाम्···" [ ६।१।३६ ] इति सूत्रे दृश्यते। अत्रापस्पृधेथामित्येकमेव पदं भिन्नस्वरकं पठ्यते, तच्च निपातनबलेन सिध्यतीति व्याख्यातार आहुः।

"कपिष्ठलो गोत्रे" [ ८।३।९१ ] इति सूत्रेऽपि कश्चिदन्यो निपातनप्रकारोऽवलोक्यते। आपातदृष्ट्येदमेव प्रतीयते यदस्य "कपिष्ठल इति गोत्रे निपात्यते" इत्येवार्थः। परन्त्व-विचारितरमणीयमिदम्। यथोक्तं भाष्ये—"गोत्रे यः कपिष्ठलशब्दस्तस्य षत्वं निपात्यते यत्र वा तत्र वेति" इति। अत एव षत्वस्य विषयत्वेन न गोत्रमत्र निर्दिष्टम्, प्रत्युत दर्शनस्य विषयत्वेन, अर्थाद् गोत्रे यो दृष्टः कपिष्ठलशब्दः स साधुरित्यर्थः। इदमपि विज्ञेयं यन्निपातनसूत्रे यद्वचनं वर्तते, तत् कदाचिदविवक्षितमपि भवति। ६।१।१२ सूत्रे दाश्वानि-त्यादयः शब्दा एकवचनान्ता निपातिताः, परन्त्वत्रैकवचनमतन्त्रमिति ज्ञानेन्द्रो विज्ञापितवान् ( तत्त्वबोधिनी )।

कदाचिच्च निपातनं सामान्यापेक्षं भवति न विभक्त्यादिविशेषापेक्षम्, अतो निपातन-बाधितपदमपि प्रयुज्यते। अत एव "क्त्वाया वा प्रतिषेधः" इति भाष्यव्याख्याया कैयट आह—"सामान्यापेक्षं च निपातनं न सप्तम्यपेक्षमिति कृत्वा क्त्वाया इत्यपि भवति" [ प्रदीपे, ६।४।१४० ]।

अथाधुना यत्र निपातनं भवति, तत्र किं निपात्यत इत्यादौ तावद् विचार्यते, येन निपातनबलरहस्यं सुविज्ञातं स्यात्। अत्रेदं विज्ञेयं यत् तत्रैव निपातनमाश्रीयते[1] यत्र प्रत्यया-गमाद्याश्रितं कार्यं साक्षात् सूत्रेण न सिद्धं भवति। अत एव 'विशेषाधिकार'-रूपनिपातनबलेन सूत्राप्राप्तं कार्यं निपातनबलेन साध्यते। यथोक्तम्—"प्रकृतकार्यात् कार्यान्तरसिद्ध्यर्थं हि निपात-नम्" [ प्रदीपे, ७।२।२० ]।

प्रत्ययनिपातनम्—"मस्करमस्करिणौ वेणुपरिव्राजकयोः" [ ६।१।१५४ ] इति सूत्र-मस्योदाहरणम्। अत्र मस्करिशब्दविषये कैयट आह—"माङ्पूर्वात् करोतेरिनिरिति"। अत्र निपातनबलेन ताच्छील्ये णिनौ प्राप्त इनिर्निपात्यत इत्येवास्य तात्पर्यम्। अत्रेदमपि

१. यत् पदं निपातनसिद्धं भवति, तस्य वचनादीनि कदाचित् तन्त्राणि कदाचिच्चातन्त्राणि भवन्ति। अत एव "षष्टिकाः षष्टिरात्रेण पच्यन्ते" [५।१।९०] इत्यत्र कैयट आह—"बहुवचनमतन्त्रम्, एकवचनान्तस्यापि षष्टिशब्दस्य लोके प्रयोगदर्शनात्" [ प्रदीपे ]। तदपरे न क्षमन्ते [ उद्द्योते ]।

विज्ञेयं यत् कदा प्रत्ययनिपातनं भवति, कदा वाऽऽदेशनिपातनमित्यत्र संशयोऽपि जायते। संशयोऽयमर्थविचारेणापाकरणीयः ( दृश्यता तत्त्वबोधिनी, ६।३।६६ )।

आदेशनिपातनम्—"पाय्यसानाय्य···" [३।१।१२६] इति सूत्रेऽस्योदाहरणं दृश्यते। अत्र निपातनबलेनैनायादेश इति स्पष्टं प्रतीयते, केनापि सूत्रेण तत्प्राप्त्यदर्शनात्।

आगमनिपातनम्—"फलेग्रहिरात्मम्भरिश्च" [३।२।२६] इति सूत्रेऽस्योदाहरणमस्ति। अत्र यो मुमागमः स निपातनेनैव भवितुमर्हति।

द्विर्वचननिपातनम्—"ऋत्विग्दधृक्···" [३।२।५६] इति सूत्रे दधृक्शब्दोऽस्योदाहरणम्। निपातनमन्तरेण द्विर्वचनमत्र न स्यात्।

प्रकृतिविपरिणामनिपातनम्—"अपचितश्च" [ ७।२।३० ] इत्यस्योदाहरणम्। उक्तं च भाष्ये—"किं निपात्यते? चायेश्चिभावश्च" इति।

एवं क्वचिद् ह्रस्वत्वदीर्घत्वयोः [ ७।२ २७ ], क्वचिच्च कस्यचिल्लोपोऽपि [७।२।२०] निपात्यते। कदाचिच्च प्रसक्तकार्याभावरूपमपि कार्यं निपातनेनैव भवति। यथा ३।२।५६ सूत्रे यत् क्रुञ्चामिति पदं प्रयुक्तम्, तद्विषये नागेश आह—"क्रुञ्चामिति निपातनान्नलोपाभावः" [ उद्द्योते ] इति। अन्यत्र भाष्येऽप्येतादृशं वचो दृश्यते। यथा "इच्छा" [ ३।३।१०१ ] इति सूत्रभाष्ये पठ्यते—"किं निपात्यते? इषेः शे यगभावः" इति। तथैव प्रतिषेधार्थोऽपि निपातनव्यवहारो दृश्यते। उक्तं च "णेरध्ययने वृत्तम्" [ ७।१।२६ ] इत्यत्र वार्त्तिककृता—"निपातनं णिलोपेड्गुणप्रतिषेधार्थम्" इति।

प्रागुक्तैरुदाहरणैरिदं प्रमाणितं यन्नानाविधं कार्यं निपातनेन क्रियते। न चेदं मन्तव्यं यदेकस्मै कार्याय निपातनमाश्रीयते, प्रत्युत नैककार्यसिद्ध्यर्थमपि। यथोक्तम्—"अनेकप्रयोजनसंपत्तिर्निपातनाद् भवति" [ प्रदीपे, ६।२।२ ]। अत्रैव स्नात्वाकालक इत्युदाहरणं दत्त्वा भाष्यकृता स्वयमेवोक्तम्—"अवश्यमत्र समासार्थं ल्यबभावार्थं च निपातनं कर्तव्यम्, तेनैव यत्नेन स्वरो न भविष्यति" इति। अत्र त्रीणि कार्याण्येकेन निपातनेन कृतानीति दृश्यते।

कदाचिच्च शब्दनियमनेन सहार्थनियमनमपि युगपदेकेनैव निपातनेन क्रियते। ३।१।१०१ सूत्रीयमवद्यपदमस्य प्रसिद्धमुदाहरणम्। यथाह दीक्षितः—"वदेर्नञ्युपपदे वदः सुपीति यत्क्यपोः प्राप्तयोर्यदेव, सोऽपि गर्ह्यायामेवेत्युभयार्थं निपातनम्" [ सि० कौ० ]। क्वचिच्च निपातितशब्दस्यैकाधिकं निर्वचनं भवति। यथा ३।१।११४ सूत्रनिपातितस्य राजसूयशब्दस्य। तथापि निपातितत्वादर्थसंशयो न भवति। यथाहात्रैव ज्ञानेन्द्रः—"निपातनं च रूढ्यर्थ-

मिति। तेनाद्यपक्षेऽश्वमेधादौ, द्वितीयपक्षे ज्योतिष्टोमादौ च नातिप्रसङ्गः" [ तत्त्वबोधिनी ]। निपातनरीतिस्वीकारेण शब्दनिष्पत्तिप्रक्रियाया कीदृशं लाघवं भवतीत्यधुना प्रदर्शयामः। यत्र निपातनेन शब्दो दर्शितस्तत्र यदि प्रकृतिप्रत्ययादिनिर्देशात्मकविधिसूत्रं कृतं स्यात्, तर्हि सूत्रीयशब्दे गौरवाधिक्यं स्यादिति मत्त्वैव पाणिनिना निपातनसूत्राणि व्यरचिषत। वस्तुतो निपातनस्थले प्रकृत्यादयो न सन्तीति न, अत एव निपातनस्थले प्रायेण 'किं निपात्यते' इत्येवं पृच्छ्यते भाष्यकृता [ ५।२।७३ ]। अन्यत्र पुनर्व्यक्तमेव—"का प्रकृतिः, कः प्रत्ययः, कः प्रत्ययार्थः" [ ५।१।५६ ] इत्यपि पृच्छ्यते। प्रत्ययार्थानुसारेण निपातितशब्दस्यार्थो यदि न घटते, तर्हि निपातनबलेन तदर्थस्य युक्तताप्यभ्युपगम्यते। यथोक्तं निपातितमधिकपदमधिकृत्य कैयटेन—"लौकिके प्रयोगेऽधिकशब्देन विषयभेदेन कर्तृकर्मणोरनभिधानदर्शनादनङ्गीकृत-साधनभेदमध्यारूढस्येदं निपातनम्, स चोभयार्थं इति न कश्चिद् दोषावसरः" [ प्रदीपे, ५।२।२३ ] इति।

यदि निपातनमकृत्वा प्रकृत्याद्युल्लेखने शब्दनिष्पत्तिः स्यात्, तर्हि सद्यःपरुत्परार्यादि-शब्दसिद्धये [ ५।३।२२ ], 'दाधर्ति' [ ७।४।६५ ] इत्यादिशब्दसिद्धये च सूत्रप्रणयने कीदृशं गौरवं स्यादिति साक्षादेव दृश्यताम्। एतादृशेषु स्थलेषु केवलं शब्दव्यवहारलाघवार्थमेव निपातनरीतिराश्रिता, न पुनरर्थवैशिष्ट्यख्यापनायेति मन्तव्यम्। केषुचिन्निपातनसूत्रेष्वित्थं प्रतीयते यन्निपातनमकृत्वाऽपि शब्दनिष्पत्तिः सुसाधा स्यात्, परन्तु सूक्ष्मविचारे कृते निपातनरीतिरेवानन्यशरणा भवति। यथोक्तं काशिकायाम्—"किमर्थं तर्हि निपातनम्, यावता पूर्वेणैव स सिद्धः···संबुद्धौ दीर्घार्थमेते निपात्यन्ते" [८।२।६७] इति। ( शब्दनिष्पत्तिलाघव-विषये ८।२।१२ सूत्रीया काशिकाऽपि द्रष्टव्या )।

न केवलं निपातनेन शब्दनिष्पत्तिप्रक्रियाया लाघवं भवति, प्रत्युत शास्त्रीयकार्यप्रवृत्ति-रपि निपातनसामर्थ्याद् भवति। यद्येतादृशेषु स्थलेषु निपातनं न कृतं स्यात्, तर्हि शास्त्रीय-कार्यप्रवृत्त्यर्थमपि वचनान्तरस्यावश्यकता स्यादिति निपातनस्य प्रयोजनं सिद्धमेव[1]। अत्र

---

१. केषुचिन्निपातनसूत्रेषु पदान्युपलक्षणरूपेण स्थापितानीति मन्यन्ते व्याख्यातारः। अत एव "प्रयाजानुयाजौ यज्ञाङ्गे" [ ७।३।६२ ] इति सूत्रव्याख्याने काशिकायां दृश्यते—"प्रयाजानुयाजग्रहणं प्रदर्शनार्थम्—अन्यत्राप्येवं प्रकारे कुत्वं न भवति" इति।

स्नात्वाकालक इत्युदाहरणमाश्रित्य कैयटेन यदुक्तं तदुद्ध्रियते—"येषु चात्र स्नात्वाकालकादिपूत्तर पदानुपात्तक्रियापेक्षः क्त्वाप्रत्ययः, तेषा सापेक्षत्वेऽपि निपातनात् समासः" [ प्रदीपे, ७।१।३७ इति । विशदीकृतं चैतन्नागेशेन—"समुदायनिपातनसामर्थ्यादप्राकरणिकमपि किञ्चिन्निपातना न्निषिच्यते" [ उद्द्योते, तत्रैव ] इति ।[१]

दृश्यते च वाक्यार्थेऽपि निपातनम् । यथा—"छन्दोऽधीते" इत्यस्य वाक्यस्यार्थे 'श्रोत्रियन इत्येतत् पदं निपात्यते" [भाष्ये, ५।२।८४] । किमर्थमत्र वाक्यार्थे पदरचनमिति ? तत् तु कैयटे नात्र स्पष्टमुपवर्णितम् ।

अथात्र वयं निपातनबलेनाचार्येण यदर्थवैशिष्ट्यं प्रदर्शितं तद् दर्शयामः—

यद्यपि निपातनसूत्रेष्वपि विधिसूत्रकरणे शब्दनिष्पत्तिप्रक्रिया सिध्यति, तथाप्यर्थादेशने लाघवार्थं निपातनरीतिरेव पाणिनिनाऽवलम्बिता । अत्र "आकालिकडाद्यन्तवचने" [५।१।११४] इति सूत्रीयं निपातनमुदाहरणम् । अत्र शब्दनिष्पत्तिप्रक्रियाया 'विधिसूत्रे कृतेऽपि न दोषे भवति । यथोक्तं वार्त्तिककृता—"आकालान्निपातनानर्थक्यं ठञ्प्रकरणात्" इति । तथापि विधिसूत्रे कृतेऽर्थवैशिष्ट्यं नोदेष्यति । तदेतत् कैयटेन स्पष्टं प्रत्यपादि । यथा—"जन्मविनाशयो श्चाव्यवहितकालत्वादेककालत्वम् । विधौ त्वयमर्थः क्लेशेन प्रतीयत इति निपातनाश्रयणम्" [ प्रदीपे, ५।१।११४] ।

निपातनबलेन निपातितशब्दस्यार्थविषये कीदृश नियमनं भवतीत्यस्मिन् विषये "श्रृतं पाके" [ ६।१।२७] इति सूत्रं प्रकृष्टमुदाहरणं विद्यते । अत्र पाके वाच्ये श्रृतमिति निपात्यत इति सूत्रार्थः । परन्तु यतो ह्यत्र शब्दो निपातितः, अतः विक्लृत्तिलक्षणे पाक एव निपातनं भवति, नान्यत्रेति सूचितम् । यथाह कैयटः—"द्विविधो हि पाकः—विक्लृत्तिलक्षणः, विक्लेदनालक्षणश्च । पाचयितृव्यापारे तु णिचि कृते पाचनालक्षणोऽर्थः प्राधान्येनाभिधीयते, न तु पाकलक्षण इति निपातनाभावः" [ प्रदीपे ] इति ।

अत्र "भित्तं शकलम्" [ ८।२।५९ ] इति सूत्रमप्यालोचनीयम् । अत्र निपातनबलेन रूढोऽयं शब्द इति ज्ञापयति पाणिनिः । उक्तं च वासुदेवदीक्षितेन—"शकलत्वजातिविशिष्टेऽवयवार्थमनपेक्ष्य रूढोऽयम्, ततश्च भित्तशकलयोः पर्यायत्वान्न सहप्रयोगः" [ बालमनोरमा ] । किमयमर्थो निपातनरीतिमन्तरेण वैशद्येन ज्ञापितो भवितुमर्हति ?

---

१. तथैव काशिकायामपि पठ्यते—"समुदायनिपातनाच्चार्थविशेषेऽवरुध्यन्ते" [५ ४।१२९] इति ।

यथा निपातनसिद्धाः शब्दा रूढा भवन्ति,[१] तथैते संज्ञावाचिनोऽपि भवन्ति। यथोक्तं कैयटेन—"निपातनादेव संज्ञालाभात्" [प्रदीपे, ८।२।१२] इति। विधिसूत्रेण न संज्ञारूपोऽर्थः प्रकटीक्रियते, अतः सार्थकानि निपातनसूत्राणीति।

अर्थसामान्येऽर्थविशेषप्रतिपत्तिरपि निपातनेन भवति कदाचित्। अस्य नियमस्य बहून्युदाहरणानि सन्ति। दिङ्मात्रमुदाह्रियते। "आश्चर्यमनित्ये" [६।१।१४७] इति सूत्रेणाश्चर्यपदं निपातितम्। किमत्रानित्य इत्युच्यमाने घटादावप्याश्चर्यशब्दस्य प्रयोगः स्यात्? नेति व्याख्यातारः। ते कथयन्ति—"निपातनाच्चानित्यविशेषो विस्मयहेतुर्गृह्यते" [प्रदीपे] इति। अत एव नानित्यसामान्येऽस्य प्रयोगो युक्तः[२]। एतेनोदाहरणेनापि निपातनमहिमा स्पष्टमवगम्यते।

निपातनस्य विशिष्टार्थज्ञापकत्वविषयेऽन्यदुदाहरणं यथा—"चरणे ब्रह्मचारिणि" [६।३।८६] इत्यत्र कैयट आह—"अवयवनिपातनद्वारेण विशिष्टेऽर्थे समुदायस्यैव साधुत्वमन्वाख्येयमिति मत्वा समुदायमेव निपात्यत्वेनोपन्यस्यति" इति। मतमिदं नागेशेनापि स्वीकृतम्। यथोक्तं तेन—"चरणे समानत्वेन गम्य इत्यर्थ इति भावः। अयमेव चार्थो निपातनोक्तिद्वारा भगवतोक्त इति" [उद्द्योते]।

अथात्र निपातनबलेन ज्ञाप्यमानानर्थानधिकृत्य किमप्युच्यते—

विषयेऽस्मिन् "कार्मस्ताच्छील्ये" [६।४।१७२] इति सूत्रं प्रसिद्धमुदाहरणम्। अत्र भाष्यकृता व्यक्तमेव निपातनज्ञाप्यमानोऽर्थः प्रकटीकृतः। यथा—"एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यस्ताच्छीलिके णेऽणकृतानि भवन्तीति" [६।४।१७२] इति।

प्राक् प्रतिपादितं यन्निपातनेन शब्दनिष्पत्तिविषये लाघवम्, विशिष्टार्थज्ञापनं च सुकरं भवति। अत्रेदमपि विज्ञेयं यत् क्वचिदनिष्टरूपनिवृत्तयेऽपि निपातनरीतिराश्रीयते। यथोक्तं

---

१. मतमिदं भर्तृहरिरप्यनुगृह्णाति। यथोक्तम्—"धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च। अनुबन्धविकाराणां रूढ्यर्थं च निपातनम्" [वाक्यपदीये]। अत एव—"निपातनाद् रूढिराश्रीयते" [प्रदीपे, ३।१।१२७] इति कैयटोऽप्यभाषिष्ट।

२. अन्यदुदाहरणम्—"निपातनसामर्थ्याद् विशिष्टे दाशते संघे वर्तमाना भाववचना भवन्ति" [प्रदीपे, ५।१।५९] इति। ज्ञानेन्द्रोऽप्याह—"यद्यपि पणितव्योऽर्थद्वयसाधारणस्तथापि निपातनस्येह रूढ्यर्थत्वाद् व्यवहर्तव्य एवायं निपात्यते" [तत्त्वबोधिन्याम्, ३।१।१०१]

"अनुपसर्गात् फुल्ल···" [८।२।५५] इत्यत्र कैयटेन—"यद्यपि फुल्लादयः पचाद्यचीगुपधलक्षणे के च सिध्यन्ति, तथापि "निष्ठा च द्व्यजनात्" [६।४।५२] इत्यादिकार्यसिद्धये क्षीबिताद्यनिष्टरूपनिवृत्तये च निपातनम्"[प्रदीपे]। एतादृशस्य नियमस्यान्यदप्युदाहरणमस्ति। पाणिनिना ६।१।१२ सूत्रे साह्वानिति पदं निपातितम्। परन्त्वत्र णिच्पक्षे वृद्धया सिद्धे दीर्घत्वनिपातनं व्यर्थमिति नाशङ्कनीयम्। यतो हि निपातनमिदं 'सह्वान्' इत्यस्यासाधुत्वज्ञापनायेति व्याख्यातार आहुः।

केषुचिन्निपातनसूत्रेषु शब्दप्रयोगे गौरवं प्रतिभाति। परन्त्वेतादृशं शब्दगौरवमपि कस्यचित् सूक्ष्मार्थस्य ज्ञापनायेति व्याख्यातार आहुः। "प्रतिष्कशश्च कशेः" [६।१।१५२] इति सूत्रमस्योदाहरणरूपेण गणयितुं शक्यते। यद्यत्र 'प्रतिष्कशः' इत्येव सूत्रं स्यात्, न शब्दनिष्पत्तिप्रक्रियाया कश्चिदपि दोषः स्यात्। अत्राह सायणः—"प्रतिष्कशः' इत्येतावत्येव सूत्रयितव्ये कशेरिति वचनं प्रतेः कशिसंबन्धित्वे निपातनं यथा स्यादिति। तेन कशा प्रति गतः प्रतिकशोऽश्व इत्यत्र न भवति" [ माधवीयधातुवृत्तौ, पृ० २३४ ]।

निपातनबलविषये प्रवर्तत एका परिभाषा—"अबाधकान्यपि निपातनानि" [ सीरदेवीयपरिभाषावृत्तौ, परि० ७६ ] इति। यद्यपि पाणिनिना ४।३।१०५ सूत्रे पुराणशब्दः प्रयुक्तः, तथाप्यस्य निपातनस्याबाधकत्वात् "सायं चिरम्···" [ ४।३।२३ ] इति सूत्रेण पुरातनशब्दोऽपि प्रयोक्तुमर्हः। अपरे पुनर्वचनस्यास्य परिभाषात्वं नोररीकुर्वन्ति। भाष्यकृताऽपि क्वचिदपि वचनमिदं न पठितम्। एते १।१।२७ सूत्रभाष्यतः "बाधकान्येव निपातनानि" इत्येवाभ्युपगच्छन्ति। मतमिदं भागवृत्तिरप्यनुगृह्णाति [ द्रष्टव्या परिभाषावृत्तिः ]। निपातितशब्देन यस्य शब्दस्य बाधः प्राप्तः, यदि तस्य साधुत्वं प्रमाणान्तरतः सिध्यति, तर्हि तस्य पृषोदरादित्वमभ्युपेयमित्येतेषां हृदयम् ( परिभाषेन्दुशेखरे, ११६ परिभाषा द्र० )।[१]

निपातनबलेन कियत् सूक्ष्मं वस्तु ज्ञाप्यत इत्यत्र "कौमारापूर्ववचने" [ ४।२।१३ ] इति सूत्रमप्यवलोकनीयम्। अत्रोक्तं वार्त्तिककृता—"कौमारापूर्ववचन इत्युभयतः स्त्रिया

---

१. कदाचिच्च निपातनबलात् कस्याश्चिदपि परिभाषायाः प्रवृत्तिरप्रवृत्तिर्वा निश्चीयते। यथोक्तं तत्त्वबोधिन्याम्—"निपातनसामर्थ्याल्लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इत्याहुः" [ ६।१।२६ ]। कदाचिच्च निपातनबलं सामान्येनेच्छन्ति व्याख्यातारः। यथोक्तम्—"केचित् सामान्येन निपातनमिच्छन्ति, तेन खप्रत्ययाभावेऽपि प्रयोग उपपन्नो भवति पारोवर्यविदिति" [प्रदीपे, ५।२।१०]।

अपूर्वत्वे" इति। अर्थात् कौमारीशब्दे कौमारशब्दे च स्त्रिया अपूर्वत्वे तयोः प्रयोग इति। तदिदं वार्त्तिकोक्तं वस्तु निपातनेनैव लभ्यत इति व्याख्याकारा आहुः।

अथात्र निपातनस्वरसंबन्धो विचार्यते। यथा निपातनेनान्यानि शास्त्रीयाणि कार्याणि वार्यन्ते, तथा निपातनस्वरोऽन्येषां स्वराणां बाधको भवतीति सर्वेषां व्याख्यातॄणां मतम्। विषयेऽस्मिन् भाष्यकारस्य मतमादौ प्रदर्श्यते। तेन स्पष्टमुक्तम्—"यथैव निपातनस्वरः प्रकृतिस्वरस्य बाधक एवं समासस्वरस्यापि" [ ६।१।१२३ ]। सर्वैर्व्याख्यातृभिः—"निपातनस्य सर्वापवादत्वम्" इति वारं वारमुदघोषि। अत एव सर्वत्र निपातनस्थले निपातनबलेनैव स्वर-व्यवस्था क्रियते, अर्थान्निपातनेन स्वरनिर्देशोऽपि सुकरश्च दृढश्च भवति। अत एव "ओरावश्यके" [ ३।१।१२५ ] इत्यत्र वार्त्तिककृता य आक्षेपो दत्तः ( द्योत्य इति चेत्, स्वर-समासानुपपत्तिः ), तस्य समाधानार्थं भाष्यकार आह—"नैष दोषः, मयूरव्यंसकादित्वात् समासः, विस्पष्टादिवत् स्वरश्च" इति। एतद्व्याख्याने कैयटेनोक्तम् "···एवमवश्यलाव्यमित्यादावपि मयूरव्यंसकादिषु निपातनादुत्तरपदप्रकृतिस्वरो भविष्यतीत्यर्थः" इति। एतद्व्याख्याने नागेशो निपातनस्य सर्वाधिकबलवत्त्वमित्थं दर्शितवान्—"एवं च मयूरव्यंसकादिषु निपातनादेव सिद्धे विस्पष्टादीनीति सूत्रमपि न कार्यमिति भावः" [ उद्द्योते ]। निपातितशब्दस्य स्वरसिद्धिर्नित्यं निपातनबलेनैव क्रियत इति सर्वेषां व्याख्यातॄणां मतम्।

यत्र निपातनं कृतम्, तत्र यदि निपातनमकृत्वा प्रकृतिप्रत्ययनिर्देशो विहितो भवेत् पाणिनिना, तर्हि कियत्यसमञ्जसता स्यादित्यत्र प्रदर्श्यते।

अस्ति सूत्रम्—"प्रमदसंमदौ हर्षे" [ ३।३।६८ ] इति। यद्यत्र "प्रसमोर्मदो हर्षे" इत्येव सूत्रं स्यात् तर्हि प्रमदशब्दो यौगिकार्थकः स्यात्, परन्तु शब्दोऽयं रूढ इति रूढिपरि-ग्रहार्थं निपातनमिति वासुदेवोऽभाषिष्ट [ बालमनोरमा ]।

प्रागुक्तैरुदाहरणैरिदं सिद्धं भवति यद् यत्र यत्र निपातनं कृतम्, तत्र तत्र किमपि कारणमस्त्येव। क्वचित् प्रक्रियालाघवाय, क्वचिच्चार्थवैशिष्ट्यस्फोरणाय, क्वचिच्चानुक्तार्थ-ज्ञापनाय, क्वचिच्च स्वरादिसिद्धये पाणिनिना प्रकृतिप्रत्ययनिर्देशं परित्यज्य पदानि निपातितानि। यद्यपि वयमद्य सर्वेषु निपातनसूत्रेषु निपातनसार्थक्यं दर्शयितुमसमर्थाः, तथापि प्रदत्तैरुदाहरणै-रिदं सिद्धं यत् कस्मैचिदिष्टाय कार्यायैव पाणिनिर्निपातनसूत्राणि रचयामास, न त्वेषु सूत्रेषु काचिदप्यसंगतिरनवश्यकता चैषामस्तीति॥

---

# छायाघटीयन्त्रनिर्माणयुक्तिः

श्रीअवधबिहारी त्रिपाठी, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी।

अत्रादौ होरामापककोणावगमार्थं विपुलं गोलयन्त्रं कार्यम्। तत्र नाडीवृत्तं क्षितिजवलयं च भगणाङ्कितं तथान्यच्च कालबोधवलयं चलं विधेयम्। ततश्च जलसमं क्षितिजवलयं च यथा भवति तथा ध्रुवाभिमुखं यष्टिकं कृत्वा तत्कालबोधवलयं सूर्योपरि निवेश्यम्। तच्च नाडीवृत्ते याम्योत्तरवृत्तेन यावन्तं प्रदेशमाक्रामति मध्याह्नात्तावदेव नतकालो नाडीवृत्तीयः। तथा तदेव क्षितिजवृत्तेन यत्र सगच्छते ततः समस्थानावधि क्षितिजवृत्तीयनतकालकोणमानं स्फुटम्। तच्च समसूत्र-कालबोधक्षितिजवलययोगसूत्राभ्यां क्षितिजवृत्तीयमुपपद्यते। तत्र च कल्पितसमसूत्रं किमिति कालबोधक्षितिजवलययोगरेखारूपमिति ध्रुवसूत्रस्य या छायाऽनन्त-दूरगा यस्मिन् धरातले वर्तते तस्मिन्नेव भूतले भविष्यति कल्पितसमसूत्रम्, छायायाः षड्भान्तरे स्थितत्वात्तत्पातस्य च कालबोधधरातले स्थितत्वात्। ततः क्षितिजवृत्तीयचापज्ञानार्थ-मग्रतो द्रष्टव्यम्।

अक्षांशक्षितिजवृत्तीयनतकालांशकालबोधवलयांशैरुत्पद्यमाने चापजात्येऽक्षांशध्रुवसंलग्न-कोणयोर्ज्ञानात्—

चापजात्ये कोणलग्नभुजज्याकोणभाहतिः।
त्रिज्याभक्ता फलं छाया कोणसंमुखबाहुजा॥

इत्यनेन चापजात्यसिद्धान्तेन नतकालस्पर्शरेखा, अक्षांशज्यया गुणिता त्रिज्यया भक्ता क्षितिजवृत्तीयनतकालस्पर्शरेखामानरूपेण परिणमति। यथा—

$$\frac{\text{नतकालस्पर्शरेखा} \times \text{अक्षांशज्या}}{\text{त्रि}} = \text{क्षि॰ वृ॰ न॰ कालस्पर्शरेखा।}$$

ततो नतकालज्ञानं परिस्फुटम्। अत्रैव यदि—

अक्षांशाः = ९० तदाऽक्षांशवृत्तीयनतकालस्पर्शरेखा क्षितिजवृत्तीयनतकालस्पर्शरेखासमा भविष्यति। स्फुटतार्थं क्षेत्रम्—




अकचापम् = ६ होरा। अत्र सूत्राणां निर्गमनं ३० मिनटपरिमिते काले बोध्यम्। ध्रु = ध्रुवस्थानम्। ट अ क = अक्षांशवृत्तम्। क, चं, छं, खं, यं, उं = क्षितिजवृत्तम्। क = समस्थानम्। क उ = उभयवृत्तस्पर्शरेखा। अंफ = अक्षांशज्या = ध्रुक = ध्रुअ। भू = भूकेन्द्रम्। अत्र होरार्धमिते नतकाले कोणानां संख्या २५$\frac{1}{2}$″ अक्षांशदेशे साधिताः क्षितिजवृत्तीयाः। यथा—

## छायाघटीयन्त्रनिर्माणयुक्तिः

| होराः | अंशाः |
|---|---|
| १२—१/२ | ३° । १५′ |
| १२१/२—१ | ६° । ३५′ |
| १—१/२ | १०° । ७′ |
| ११/२—२ | १३° । ५८′ |
| २—१/२ | १८° । १६′ |
| २१/२—३ | २३° । १८′ |
| ३—१/२ | २९° । १८′ |
| ३१/२—४ | ३६° । ४३′ |
| ४—१/२ | ४६° । ७′ |
| ४१/२—५ | ५८° । ७′ |
| ५—१/२ | ७३ । ० |
| ५१/२—६ | ९०° । ० |

# ग्रहणकारणविचारः

श्रीगिरिजाप्रकाशो ब्रह्मचारी, भारतधर्ममहामण्डलम्, वाराणसी।

ग्रहणं विषयीकृत्यास्माभिः प्रागेव समालोचना कृता राहुग्रासशीर्षकनिबन्धे, यो निबन्धः खलु २०१० विक्रमाब्दस्य भाद्रमार्गशीर्षमासयोः सयुक्तसंख्यायामस्याः सुप्रतिष्ठितविद्वज्जनसमादृतायाः "सारस्वती सुषमा"-इत्यभिधायाः काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिकायाः प्रकाशित आसीत्। तत्र राहुरेव ग्रहणकारणमित्येतस्मिन् श्रुतिस्मृतिपुराणोदितसत्ये नास्ति कश्चिद् विरोधावकाश इति प्रतिपादयितुं प्रयासो विहितः। किन्तु यतो बहूना ज्योतिर्विदा ग्रहणसंबन्धीनि वेदबाह्यमतानि प्रत्यत्यादर एव दृश्यते, अतस्तेषा वेदविरुद्धजल्पितानामसारता दर्शयितुं ग्रहणमधिकृत्य चर्चेयं पुनरेव विदुषा पुरतः समुपस्थाप्यते।

ग्रहणमाश्रित्य त्रीणि मतानि समुत्थितानि दृश्यन्ते। यथा—पार्थिवच्छाया हि चन्द्रग्रहणकारणमिति, चन्द्रमैव सूर्यग्रहणकारणमिति, चन्द्रच्छायैव सूर्यग्रहणकारणमिति च। परन्तु सूर्यचन्द्रपृथिवीनामाकाशेऽवस्थानादिकं मानसपटेऽङ्कयित्वैव ग्रहणकारणनिरूपणार्था गवेषणा कर्तव्येत्यत्र न किञ्चिन्मतद्वैधमाशङ्क्यतेऽस्माभिः। अत आदौ तदवस्थानादिकं किञ्चिदुपवर्ण्यते। तत् सर्व तु ज्योतिर्विदस्तदितरे च नू समानदृष्ट्या पश्यन्ति।

साधारणदृष्ट्या किमुपलभ्यते? सूर्यः प्रत्यहं प्राच्या दिश्युदेति प्रतीच्या त्वस्तं याति। एवं स हि दिनरात्रिकारणं भवति। तथा पक्षान्ते पूर्णचन्द्रस्याप्युदयास्तगमने दृष्टिपथमागच्छतो रजन्याम्। चैत्रे मास्याश्विने वा यदा दिनरात्रिमाने समाने भवतस्तदा पूर्णिमाप्राप्तिर्भवेच्चेद्दिवाभागे सूर्यस्य रात्रौ चन्द्रस्य चाकाशे भ्रमणकालः समानो हि भवति। पौर्णमासी विहायान्यासु रात्रिषु कलाह्रासवृद्धियुक्तश्चन्द्रो दृष्टिपथमायाति। अमावस्यायां तु तस्य पूर्णक्षयो जायते। संपूर्णग्रहणकाले यदा धरणी तमसावृता भवति तदा ग्रहनक्षत्रादीन्याकाश उद्यन्ति पशुपक्षिणश्च स्वस्वनिवासस्थानं प्रति धावमाना भवन्ति, रात्र्यागमं मत्वा दिवसमध्यभागेऽपि। एवं प्रकारेण हि सूर्यादीनामाकाशेऽवस्थानं तेषा गत्यादिजनितनानाविधव्यापाराश्च पश्यन्त्याकाशे प्राकृतजनाः।

ज्योतिर्विदस्तु मन्यन्ते—पृथिवी स्वकक्षावृत्ते भास्करं परितो भ्रमन्ती लब्ध्वा हित्वा च सूर्याभिमुख्यं दिनरात्रिकारणं भवति। चन्द्रमा भूपग्रहरूपेण प्रत्यहं भूप्रदक्षिणं करोति।

पृथिव्या निजकक्षाया वारैकं पूर्णमावर्तनं पष्टिदण्डव्यापि। सूर्यचन्द्रपृथिवीषु सूर्यो बृहत्तम एव। चन्द्रः स्वतेजसा न दीप्यत आकाशे। सूर्यतेजसा हि स तेजोमयो भवति। परन्तु चन्द्रः पर्वतोपत्यकादिसमाकीर्णोऽसमतलः सूर्यादिकिरणैर्भेत्तुं प्रवेष्टुं वा न शक्यश्च। सूर्यग्रहणकाले चन्द्रः कृष्णवर्णो भूत्वा हि सूर्यमाच्छादयति, तस्य च्छाया वा सूर्याच्छादिका। पार्थिवच्छाया तु छादयति चन्द्रं चन्द्रग्रहणे। सूर्यग्रहणे पश्चिमाया दिशि स्पर्शो भवति, चन्द्रग्रहणे तु पूर्वस्याम्। सर्वग्रहणसमये पृथिव्यन्धकाराच्छन्ना भवति, विहङ्गमादयः स्वस्वाश्रयस्थानं प्रति धावन्ति, ग्रहनक्षत्रादीनामुदयश्च जायत आकाश इति।

ग्रहणं तु चतुर्विधम्। यथा—सर्वग्रहणं खण्डग्रहणं ग्रस्तोदयग्रहणं ग्रस्तास्तग्रहणं चेति। अत एवैतच्चतुर्विधग्रहणं हि विचारविषय इति बोद्धव्यम्।

प्रथमतः पार्थिवच्छाया चन्द्रग्रहणकारणं न वेति परीक्ष्यते। चन्द्रस्तेजोमय एवेति पृथिव्याश्छायोत्पद्यत इति तच्छाया तेजोमये चन्द्रमसि निपततीति च स्वीकृत्यैव पार्थिवच्छाया हि चन्द्रग्रहणकारणमिति मन्यमानाः स्वसिद्धान्त उपनीता इत्यत्र कः सन्देहः। चन्द्रग्रहणकाले तु पूर्वस्या दिशि स्पर्शो जायते, ततः प्रचलत्याच्छादनव्यापारः क्रमशः पश्चिमदिशि यावन्न पूर्णाच्छादनं समाप्तिं गच्छति। एतत्कतिपयनिमेषव्याप्याच्छादनानन्तरं मोक्षारम्भो भवति। ततः स्वल्पसमयानन्तरं चन्द्रमा ग्रासमुक्तो भूत्वा पुनरेव स्वरूपेण प्रकाशत आकाशे। शीतलशुभ्रकिरणमयत्वं हि चन्द्रस्य स्वरूपमिति को न जानाति। तर्हि चन्द्रस्याच्छादनकृच्चन्द्राच्छादनाय पूर्वदिशः पश्चिमाया गच्छतीति सत्यं चेन्मोक्षसमयेऽपि किं तद्गतिस्तादृश्येव भवति, कि वा तदा पश्चिमदिशः पूर्वस्या विपरीतगत्याश्रयः स्याद् यदि मोक्षोऽपि पूर्वस्या दिशि नारभते। पार्थिवच्छाया ग्रहणसिद्धये विपरीतगतिमाश्रयिष्यतीति कदापि न संभवति, यतः पृथिव्या सहैव तच्छाया भ्रमत्याकाशे स्वकक्षावृत्ते, भ्रमणकाले क्षणमपि पृथिव्या विपरीतगत्यवलम्बनमसंभवमेव च। पृथिव्या एकस्या दिशि गतिस्तच्छायायाः पुनर्गतिस्तद्विपरीतदिशीत्येतदुन्मत्तं विना कोऽन्यः कल्पयितुमेषिष्यति। अपि च चन्द्रग्रहणकाले पार्थिवच्छायाकर्तृकश्चन्द्रस्पर्शो यदि कल्प्येत तर्हि शशधरो यदि तत्काले क्षणं सुस्थिरो न तिष्ठत्याकाशे तत् कथं सा छाया क्रमेण चन्द्रमसमाच्छादयितुं समर्था भविष्यति। यदि भूप्रदक्षिणार्थं चन्द्रस्य स्वाभाविकी गतिः स्वल्पकालं न निरुद्धा भवेदथवा यदि पार्थिवच्छाया तत्समये द्रुततरा गतिं नाश्रयेत्, यदि च्छाया चन्द्रमा च समानगत्या चलत एकस्या दिश्याकाशे, तर्हि सा पार्थिवच्छाया कथं शशाङ्कमतिक्रमितुं शक्ष्यति कथं वा चन्द्र आच्छादितो भविष्यति। ग्रहणं तु तर्हि केवलस्पर्शमात्रे तच्चेष्टाया वा पर्यवस्थास्यति। कुत्र वाऽऽच्छादनं

कुत्र वा मोक्षः। यदि पार्थिवच्छायाया गतिर्द्रुततरा स्याचन्द्रमसस्तर्हि कि तद्ग्रहणारम्भवसाने सूर्योदयश्चन्द्रस्यास्तगमनाद् बहु पूर्वं भविष्यति, पृथिवीतच्छाययोर्गतिवैषम्यकल्पनायोगात्। नैतत् संभवति। अतः पार्थिवच्छाया चन्द्रग्रहणकारणं भवितुं नार्हति।

पुनश्च पार्थिवच्छायया चन्द्रस्पर्शोऽपि न कल्पनीयः। श्वेतशीतलांशुपूर्णशशधरस्य हि ग्रहणं जायते। अतो यदि पार्थिवच्छायोत्पत्तिस्तच्छायया चन्द्रस्पर्शश्चेष्येते, तत्कथं तच्छाया चन्द्रकिरणेषूत्पत्स्यते पूर्णचन्द्रे निपतिष्यति च चन्द्रस्पर्शनाय। उत्पत्तावपि शशाङ्कांशुषु तस्या अदृश्यत्वं वारयितुं कः समर्थः। अतो ग्रहणसंपर्किताः स्पर्शग्रासमोक्षा असिद्धा एव भवन्ति, छायालोकयोः परस्परविरुद्धत्वात्।

अपि च ग्रहणकाले श्वेतशीतलांशुपूर्णश्चन्द्रो हि पार्थिवच्छाययाऽऽच्छादितो भविष्यति, यदि तादृशाच्छादनं कल्प्येत। तादृशचन्द्रे छायापातो भवेच्चेत् सा छाया विलीना भविष्यति, न वा चन्द्रकिरणेषु छायोत्पत्ति लब्धुं समर्थेति प्रागेवोक्तम्। परन्तु यदि चन्द्रस्तेजोहीनो वर्तते, तर्हि तत्र तम एवागमिष्यति। तत्तमसि तादृशदूरस्थितनिशानाथस्तु न नेत्रगोचरतामेष्यति। न वा तदन्धकारे छायापातसंभावनास्ति। यथा तेजसि तथा तमस्यपि छायोत्पत्तिश्छायापातो वा न संभवति।

यच्चैतदुक्तं स्यात् पृथिवीचन्द्रसूर्याणामाकाशे तत्काले विशिष्टावस्थाप्राप्तिवशाच्चन्द्रमसि न सूर्यकिरणपातो भवत्यतस्तस्य शुभ्रकिरणमयत्वहानिर्जायते, तत्रत्यपर्वतादयश्चापि दृष्टिगोचरा भवन्तीति। वयं तु पृच्छामो यदि तत्र स्वल्पालोकोऽपि न विद्यते तत्कथं पर्वतादयो दृष्टिपथमागमिष्यन्तीति। परन्तु यदि तदा चन्द्रपृष्ठे सूर्यकिरणपातो न भवेत् तर्हि किं ग्रहनक्षत्रादीना क्षीणालोके पर्वतादयो दृष्टिगोचरा भविष्यन्ति। तदपि न संभवति, ग्रहनक्षत्रादीनामालोकप्रवेशायोग्यत्वादभूतलाभिमुखचन्द्रपृष्ठस्य। अतस्तद्विशेषावस्थायामपि स चन्द्रोऽन्धकारावृतो हि भविष्यति। तत् कथं पर्वतादयश्चक्षुरिन्द्रियविषया भविष्यन्ति ? तमसाच्छन्नः सुदूरस्थितः शशधरोऽन्धकारावृतधरणीतलाद् वैज्ञानिकयन्त्रादिसाहाय्येनापि द्रष्टुं शक्य इति वा कथं सत्यं भवेत्। यन्त्रादिस्थालोको दूरस्थचन्द्रपृष्ठे निपतिष्यति, तदालोके चन्द्रपृष्ठस्थपर्वतादयो दृष्टिमार्गमायास्यन्ति चेत्यपि न संभवमिति मन्यामहे वयम्। कुत्र तर्हि छायोत्पत्तिसंभावना तदन्धकारे। तथापि छायोत्पत्तिः कल्प्येत चेच्छाया तत्क्षणादेव न क्रममाश्रित्योत्पत्स्यते। तच्छायया चन्द्रमा तत्क्षणादेवाच्छादितो भविष्यति। प्रथमं स्पर्शस्तदनन्तरमाच्छादनं तदनन्तरं मोक्ष इति क्रमनिष्पत्तिर्न स्यात्। गतिशीलचन्द्रादीनां तद्विशेषावस्थाभङ्गमात्रेणैव हि चन्द्रः,

पृथिवी, तयोरन्तरालवर्त्याकाशश्च तेजोयुक्ता भविष्यन्ति, यथा तादृशावस्थानात् पूर्वम्। तदालोके छाया तु तदा स्थातुं न शक्यति।

खण्डग्रहणे तु पृथिवी चन्द्रकिरणोद्भासिता वर्तते। तर्हि तदा कथं पार्थिवच्छाया चन्द्रकिरणेषूत्पत्स्यते किरणमये चन्द्रे निपतिष्यति च। ग्रस्तोदये ग्रस्तास्ते चाप्यस्त्यत्रोक्तदूषणाना पूर्णावकाशः। अतः पार्थिवच्छाया कथं चन्द्रग्रहणकारणं भवितुमर्हति?

छायालोकयोः परस्परविरुद्धत्वमत्र दृष्टान्तेन स्पष्टीक्रियते। यथा सूर्यकिरणेषु दण्डायमानपुरुषच्छाया तस्य संमुखभागे प्रसृता भवति तथा रात्रौ पृथिव्या अपरभागाभिमुखस्थितसूर्यकिरणाः पृथिव्या उपरि पतन्ति; पार्थिवच्छाया चैवंप्रकारेणोत्पत्ति लभत इति कल्प्येत चेत् सा कल्पना कथं युक्ता स्यात्। सूर्यकरोद्भासितस्थाने प्रज्वालिताग्निसंनिधौ यदि स पुरुषः स्वच्छायया सह गच्छति तर्हि तच्छाया विलीनत्वं हि गमिष्यति तदग्नितेजसि। न हि तच्छायापातेन तदग्नेः किञ्चिद्धीनतेजस्त्व भविष्यति। अतस्तदग्निसन्निकर्षप्राप्तवस्तुव्यक्तीना सूर्यकरेषु छायोत्पत्तिर्न संभवति। इत्थमनभिभवप्राप्तचन्द्रकिरणेषु न पार्थिवच्छायोत्पत्तिसंभावनास्ति। अतो ग्रहणरात्रौ चन्द्रमसि पार्थिवच्छायापातस्तच्छायया चन्द्राच्छादनं चासिद्धे एव। अत एव चन्द्रग्रहणसंबन्धी पार्थिवच्छायाकारणवादो निरस्तः।

तर्हि कः खलु ग्रहणकाले चन्द्रमाच्छादयति। तमोग्रहो राहुरेव ग्रसते चन्द्रमिति हि स्वीकार्यम्। श्रुतिस्मृतिपुराणान्यप्येतन्मतं हि घोषयन्तीति।

द्वितीयतश्चन्द्रः सूर्यग्रहणकारणं न वेति विचार्यते। ग्रहणकाले चन्द्रमैव सूर्यमाच्छादयतीति खलु ये वदन्ति तेषा मतानुसारेण तत्काले चन्द्रः पृथिवीसूर्ययोर्मध्येऽवतिष्ठत इत्यत्र न किञ्चित् संशयकारणमस्ति। केषाञ्चिन्मते तु चन्द्रमा पर्वतोपत्यकादिसङ्कुलोऽसमतलः स्वात्मनि सूर्यादिकिरणप्रवेशरोधकश्च। ग्रहणसमये चन्द्रमा ते पर्वतादयश्च कृष्णाभा भवन्तीत्यपि तेषा मतं प्रतीयते। भवतु तावत्तेषामीदृशं मतम्। किन्तु वस्तुतः कि चन्द्रः सूर्यमाच्छादयति भूसूर्ययोरन्तराल आगत्य कृष्णवर्णत्वमासाद्य च? नैतत् संभवतीति वयं वदामः। कथम्? श्रूयतां तावत्। नहि चन्द्रोऽमावास्याया भूवासिना दृष्टिगोचरतायां वर्तते गगनमण्डले। परन्तु दर्शदिवाभागो हि सूर्यग्रहणकालः। तत् कथं ग्रहणसमये भूसूर्ययोरन्तराले चन्द्राविर्भावो भविष्यति, कथं वा भूवासिनस्तच्चन्द्रं सूर्यं ग्रसमानं द्रक्ष्यन्ति च। यदि तत् संभवं मन्येत तर्हि ग्रहणान्ते पश्चिमदिश्याकाशे परिभ्रमणं कृत्वा रात्रिभागे कथं भूप्रदक्षिणकारी स चन्द्रो भूवासिनां न दृष्टि-

गोचरो भविष्यति। ग्रहणावसाने सत्येव हि स दूरे कस्मिंश्चिदज्ञातदेशे पलायिष्यत इति कथं युक्तं स्यात्। अतो ग्रहणकाले चन्द्रमा भूदिवाकरयोर्मध्य आगच्छतीति कल्पनाऽसङ्गतैव।

सूर्यग्रहणसमये रविभुवोरन्तरे शशधराविर्भावः कल्प्येत चन्द्रग्रहणदिवसे, किं सूर्योदयकाले हि चन्द्रो भूभास्करयोर्मध्ये प्रविशति, अथवा किं केवलग्रहणक्षणे स तत्राविर्भवति। द्वितीकल्पनायां तु चन्द्रस्य सूर्याच्छादनाय कस्माच्चिदज्ञातदेशात् सहसा लम्फप्रदानेन भूदिनकरयोरन्तराल आगमनं प्रसज्येत। नैतत् कदापि संभवति। अतः प्रातरेव हि तद्दिवसे चन्द्रस्य भूदिवाकरयोर्मध्ये प्रवेशः कल्पनीयः, विशेषतो ग्रस्तोदये तु ग्रहणसिद्धये चन्द्रस्य तादृशाविर्भाव आवश्यक एव। तर्हि चन्द्रमा सूर्याच्छादनाय प्राच्यदिशः पश्चिमाया गमिष्यति। किन्तु सूर्यग्रहणे स्पर्शः पश्चिमदिशि जायते। तत् कथं चन्द्रः सूर्यमाच्छादयिष्यति। कथं स ग्रहणकाले विपरीतगतिमवलम्बिष्यते, प्रथमं स्वाभाविकगत्या सूर्यमतिक्रम्य यदि स स्पृशति सूर्यमिति कल्प्येत। अतो ग्रहणकाले पृथिवीसूर्ययोर्मध्ये चन्द्राविर्भावो न सिध्यति।

ग्रहणसमये यदि चन्द्रः पश्चिमदिश आगत्य सूर्यमाच्छादयतीति कल्प्येत, तर्हि भूप्रदक्षिणार्थं तस्य या स्वाभाविकी गतिर्दृश्यते तस्याः परित्यागो विपरीतगतिग्रहणं च प्रसज्येयाताम्। तर्हि सूर्यग्रहणदिवसे किं चन्द्रो विपरीगत्या पृथिवीप्रदक्षिणं करिष्यति ? तत् कथं संभवेत्। यद्येतदुक्तं स्याद् यच्चन्द्रमा ग्रहणान्ते पुनः स्वाभाविकीं गतिमवलम्ब्य पृथिवीप्रदक्षिणकार्यमारप्स्यत इति, तर्हि ग्रहणकाले किं तस्य पृथिवीप्रदक्षिणकार्यं निरुद्धं भविष्यति। तदेव न संभवति। अतः सूर्याच्छादनाय ग्रहणकाले चन्द्रस्य भूभास्करयोर्मध्ये प्रवेशोऽसिद्ध एव।

यदि प्रत्यहं चन्द्रकर्तृकपृथिवीप्रदक्षिणकालः क्षयवृद्धियुक्ततिथिमानसदृशो भवतीति मन्येत, यदि दर्शदिवसे प्रभाते पूर्वाह्णे मध्याह्ने वा चन्द्र आगच्छति भुवं भास्करं चान्तरा सूर्यमाच्छादयितुम्, तर्हि परदिवसे भूप्रदक्षिणानन्तरं स आकाशे तदाच्छादनस्थाने तन्निकटवर्तिस्थाने वाऽऽगमिष्यति, नहि तु सूर्यास्तगमनस्थाने न वा पश्चिमगगने यत्र चन्द्रकलोदयो जायते; सूर्यग्रहणावसरे चन्द्रस्याकस्मिकद्रुतगतित्वकल्पनाऽयोगात्। किं सूर्यग्रहणावसाने चन्द्रकर्तृकपृथिवीप्रदक्षिणं तिथिमानं क्षययुक्तं वृद्धियुक्तं वाऽधिकाधिकरूपेण निवर्तिष्यते। अथवा किं प्रतिपद्दिवसे सूर्यास्तगमनं सत्वरतामेष्यति। उभयकल्पने असङ्गते एव। अतः कथं सूर्यग्रहणकाले चन्द्रमसः सूर्यस्याधः पृथिव्या ऊर्ध्वं च स्थितिः संभवेत्।

संपूर्णसूर्यग्रहणदिवसे चन्द्रमा किमायतनो भवितुमर्हति सूर्याच्छादनसिद्धये। परवर्तिप्रतिपदि दृष्टक्षुद्रचन्द्रैककलासदृशी कलैका तादृशकलाद्वयं वा सर्वग्रहणकाले बृहत्सूर्यमाच्छा-

दयितुं क्षमते, भूपृष्ठ आकाशे चान्धकारं जनयित्वेति कथं संभवेत्। यदि चन्द्रः पृथिव्या उपग्रहः स्यात्, तर्हि सूर्यः पृथिव्या लक्षलक्षगुणबृहत्तर इति मन्यमानाः किं भूपग्रहक्षुद्रचन्द्रकला-ग्रहणकाले पश्चिमदिश आगत्येदृशबृहत्सूर्यमाच्छादयतीति स्वीकुर्वन्ति। ग्रहणकाले तमस आविर्भावात् सूर्याच्छादकस्य बृहत्त्वकल्पना न्याय्यैव। अत एवैतदङ्गीकर्तव्यं यद् यदायतन-श्चन्द्रः सूर्यमाच्छादयिष्यति ग्रहणसमये, तदायतनो हि स व्योममार्गे भ्रमित्वा प्रतिपदि सायं-काले पश्चिमाकाश आविर्भविष्यति। यत एकतिथ्यभ्यन्तरे चन्द्रस्यायतनपरिवर्तनं न जायते, द्वितीयाचन्द्रोऽपि कलाद्वयमात्रं हि भविष्यति चेति। तर्हि सूर्यग्रहणावसरेऽमावास्याया कल्प्य-मानदिनकराऽऽवरकबृहच्चन्द्रस्य परवर्तिन्या प्रतिपदीदृशी तनुताप्राप्तिः कथं भवेत्। एतदपि ग्रहणकाले भूभास्करयोर्मध्ये चन्द्रस्याविर्भावं तेन सूर्याच्छादनं चासंभवं साधयति।

यदि पृथिवीसदृशः पर्वतोपत्यकादिसमाकीर्णोऽसमतलोऽस्वच्छः स्वाभ्यन्तरे सूर्यादि-किरणप्रवेशमसहमानश्चन्द्रो भूदिवाकरयोर्मध्ये स्थित्वा पृथिवीप्रदक्षिणं करोति, तर्हि कथं स सूर्योदयात् परं सूर्यास्तगमनात् प्राग् वा मृदुसूर्यकिरणेषु श्वेताभो दृश्यते। सूर्यतेजसा हि चन्द्रस्तेजोमयो भवति। तर्हि तत्काले तस्य पृथिव्यभिमुखीनपृष्ठे कथं पश्चाद्देशस्थिताः सूर्यकिरणा निपतिष्यन्ति तस्य श्वेताभत्वं निष्पादयिष्यन्ति च। परन्तु पर्वतादिसङ्कुलपृथिव्यां सूर्यकिरणसंपातेऽपि तस्याः श्वेताभत्वं न ज्ञायते। दूरात् सास्मद्दृष्ट्या नीलाभा हि प्रतिभाति। किन्तु चन्द्रलोकवासिनस्तां पृथिवीं श्वेताभां हि पश्यन्ति यथा भूवासिना चक्षुषि चन्द्रमा चकास्तीति यदि कल्प्येत, तर्हि सूर्यकिरणपुञ्जसमावेशो हि तत्र कारणं भविष्यति। तत् कथं सूर्योदयानन्तरं सूर्यास्तगमनात् पूर्वमेव च चन्द्रपृष्ठे तादृशसूर्यकिरणप्रवेशो संभवति, सूर्यस्य चन्द्रपश्चाद्देशेऽवस्थानकल्पनात्। यदि तत्काले चन्द्रस्योपरि पतिता मृदुसूर्यकिरणास्तस्य पृथिव्यभिमुखीनपृष्ठदेशं प्रविश्य तस्य श्वेताभत्वं निष्पादयन्तीति मन्येत, तर्हि सर्वसूर्यग्रास-समयेऽपि भास्कराशवः कथं तादृशरूपेण भूतलाभिमुखचन्द्रपृष्ठं प्रविश्य तं शशधरं नाभिभवि-ष्यन्ति, अतो भूभास्करयोर्मध्ये चन्द्राधिष्ठानं ग्रहणकाले तेन सूर्याच्छादनं च न संभाव्ये।

यदि सूर्योऽस्तगमनान्तरं पृथिव्या अधो गच्छतीति मन्येत, तर्हि चन्द्रमा रात्रौ भूभास्कर-योरन्तराले नावतिष्ठते, तयोर्बहिर्दूरे विराजत इत्यवश्यं स्वीकार्यम्। दर्शरजन्या तु स चन्द्रः क्षणमपि न दृष्टिपथमायाति, यद्यप्यन्यासु रात्रिषु क्षयवृद्धियुक्तश्चन्द्रोदयो विभिन्नक्षणेषु गगने दृश्यते। तस्येदृशादृश्यत्वाद्धि भूवासिना दृष्टौ रात्रिस्तमसाच्छन्ना भवति। अतस्तस्य पृथिव्यन्तरितत्वं हि तस्याऽदृश्यत्वकारणं भवितुमर्हति, यतः सूर्यो ध्वान्तमाच्छादयेच्चेत् पृथिवी न तिमिरावृता भविष्यति,

नान्यः कश्चिदाच्छादकोऽपि कल्पयितुं शक्यश्च । तर्हि कुत्र चन्द्रो वर्तते । पूर्णिमारजन्यां तु चन्द्रो रात्र्यवसाने पश्चिमगगनेऽस्तं याति यदा पूर्वगगने सूर्योदयो जायते । पुनः प्रतिपदि स सूर्यस्तु दिवाभागे पृथिवीमालोकिता कृत्वा यदाऽस्तं गच्छति पश्चिमगगने तत्कालात् किञ्चित् परं हि चन्द्र उदेति पूर्वगगने । अतः कदा स चन्द्रो भूभास्करयोर्मध्ये प्रवेक्ष्यति कथं वा तदवस्थः स भूप्रदक्षिणं करिष्यति ? एवं सूर्यग्रहणकाले चन्द्रस्य पृथिवीसूर्ययोर्मध्य आविर्भावो नोपपद्यते, तेन सूर्याच्छादनं तु दूरोत्सारितमेव ।

सर्वसूर्यग्रहणकाले पृथिव्यन्धकाराच्छन्ना भवति । तदा गगनमण्डले ग्रहतारकोदयोऽपि जायते । तदा पक्षिणश्च कलरवं कृत्वा स्वस्वनीडाभिमुखं धावन्ति रात्र्यागमं मत्वा । चन्द्रस्तु भूदिवाकरयोर्मध्ये स्थित्वा सूर्यमाच्छादयतीति येषा मतं तान् प्रष्टुमिच्छामो ग्रहनक्षत्रादीनि किं पृथिव्या ऊर्ध्वं चन्द्रस्याधो वर्तन्ते, येन सूर्यालोकापगमे तानि दृष्टिपथमागच्छेयुरिति । तत् कथं संभवं स्यात् । पूर्णग्रहणसमये यदि कृष्णवर्णश्चन्द्रः सूर्याच्छादको भवेत् तर्हि तत्काले सूर्यचन्द्रयोर्मध्यभागो विकरोद्भासितो हि स्थास्यति । तद्भागे सूर्यस्योर्ध्वं वा सूर्यपार्श्वदेशयोर्वा नक्षत्रग्रहादयो भवन्ते चेत् ते सूर्यकिरणाभिभूताः सन्तो दृष्टिबहिर्भूता हि भविष्यन्ति । अपि च भूशशधरयोर्मध्ये ग्रहनक्षत्रादीनि वर्तन्त इति तु श्रीभास्कराचार्योऽपि न मन्यते । तेन स्पष्टमुक्तम्—"भूमेः पिण्डः शशाङ्को ज्ञकविरविकुजेज्यार्किनक्षत्रकक्षावृत्तैर्वृत्तो वृतः" इति । तत् कथं सूर्यग्रहणकाले चन्द्रमा भुवं रविं चान्तराऽवस्थाय सूर्यमाच्छादयिष्यत्यन्धकारं जनयित्वा पृथिव्युपरि । चन्द्रमा सूर्याच्छादको भवेच्चेत् कथं पूर्णग्रहणकाले ग्रहनक्षत्रोदयः संभवेत् । अतस्तमोग्रहो राहुरेव हि सूर्यमाच्छादयति ग्रहणसमय इत्यत्र संशयो न कर्तव्यः । अस्त्यस्मिन् विषयेऽनुकूलशास्त्रप्रमाणम् । तदेवोल्लिख्यते । यथा—

नवतीनां सहस्राणि योजनानि महीपते । भूमेरूर्ध्वं च लोकाना सिद्धचारणरक्षसाम् ॥
ये च विद्याधरा यक्षरक्षोगन्धर्वकिन्नराः । भूतप्रेतपिशाचाश्च तेषा तत्स्थानमीरितम् ॥
ततो राहोर्महाबाहो त्रयोदशसहस्रकम् । योजनाना प्रविस्तारं मण्डलं तस्य कथ्यते ॥
स्मरन् वैरं पुरा प्राप्तं यः पर्वणि महाग्रहः । ग्रासाय धावति क्रोधात् पुष्पवन्तौ महीपते ॥
लक्षयोजनतो भानोर्भूमेरेषा व्यवस्थितिः । भानोः सकाशादुपरि लक्षे लक्षयः क्षपाकरः ॥
नक्षत्रमण्डलं चन्द्राल्लक्षयोजनमुच्छ्रितम् । नक्षत्रमण्डलात् सौम्य उपरिष्टाद् द्विलक्षके ॥
बुधाच्छुक्रो द्विलक्षे तु शुक्राद् भौमो द्विलक्षके । मङ्गलादुपरिष्टाच्च गीष्पतिर्लक्षकद्वये ॥
द्विलक्षयोजनोत्सेधः सौरिर्देवपुरोहितात् । शतायुतसमुच्छ्रायं सौरेः सप्तर्षिमण्डलम् ॥

सप्तर्षिभ्यः सहस्राणि शतादूर्ध्वं ध्रुवस्थितिः ॥

इति हि पद्मपुराणम्।

पुनश्च, पृथिवी स्वकक्षावृत्त आवर्तमाना संवत्सरेण सूर्यप्रदक्षिणं करोति चेत्तस्या गतिमत्ताया न किञ्चित् संशयकारणमस्ति। तथा यदि शशाङ्कः प्रत्यहं भूपग्रहरूपेण भूप्रदक्षिणं करोति पृथिव्या अतिदूरे न गत्वेति कल्प्येत, तर्हि तस्यापि गतिमत्त्वमवश्यमेव स्वीकार्यम्। अत एतदङ्गीकर्तव्यं यत् सूर्यप्रदक्षिणकारिण्या पृथिव्या सह चन्द्रमापि सूर्यप्रदक्षिणं करोतीति। अन्यथ सर्वर्तुषु सर्वमासेषु कथं चन्द्रोदयो भवत्याकाशे। तर्हि किंविधं पृथिव्यास्तद्भ्रमणं स्यात् सूर्यस्य चतुर्दिक्षु। यदि सृष्ट्यनन्तरं चन्द्रमा भूभास्करयोर्मध्ये स्थापितोऽभविष्यत् पृथिवी पुनः पुनरावर्तमानैकस्या दिश्यचलिष्यच्च, तर्हि पृथिव्यद्य सूर्यादीदृशदूरवर्तित्वमप्राप्स्यद् येन भूवासिनोऽद्य सूर्यं द्रष्टुं नाशक्ष्यन्नेव। किन्तु सूर्यं चन्द्रं च ते पश्यन्ति। अतः सचन्द्रायाः पृथिव्यास्तादृग्गतिकल्पना निष्प्रयोजनैव। अतः पृथिवी चन्द्रेण सह सूर्यप्रदक्षिणं करोतीति हि युक्ता कल्पनेति मन्यामहे वयम्। किन्तु तादृशी कल्पनाऽपि दोषविमुक्तेति न केनापि वक्तुं शक्यते। यस्मात् सूर्यप्रदक्षिणकारिणी पृथिवी शृङ्खलादिभिर्बद्ध्वा तडित्साहाय्येन वा कोऽपि सूर्यचतुर्दिक्षु कर्षतीति न संभवम्, अतः सा सूर्येणाकृष्यमाणा सूर्यप्रदक्षिणं करोतीति हि साम्प्रतम्। किन्तु चन्द्रस्य का गतिर्भविष्यति। ईदृशभ्रमणकाले तु स्वकक्षावृत्त आवर्तमाना पृथिवी स्वीयदैर्घ्यें सूर्येण सह समान्तरालं कृत्वा तच्चतुर्दिक्षु भ्रमितुं न शक्यति, पुनः पुनरावर्तनेन क्रमशः सूर्याद् दूरतरदूरतमदेशप्राप्तिप्रसङ्गादेकस्या दिशि। अतस्तस्याः शिरोभागः सर्वदैव सूर्यसंमुखीनः स्थास्यति सूर्यप्रदक्षिणकाले। यदि चन्द्रस्य भूभास्करयोर्मध्येऽवस्थानमिष्यते तर्हि स भूशिरोभागं भास्करं चान्तरा हि वर्तिष्यते। एतदवस्थाया चन्द्रेण पृथिवीप्रदक्षिणं किं नासंभवं स्यात्। अपि च पृथिव्यपेक्षया सूर्यस्य लक्षलक्षगुणबृहत्त्वकल्पनान्निम्नतलं मुक्त्वा पृथिवी सर्वदैव सर्वांशेषु सूर्यकिरणावृता स्थास्यति, तदवस्थाया चन्द्रोऽपि सूर्यकिरणाभिभूतः सन् कथं दृष्टिपथमायास्यति। पृथिव्यामन्धकारयुक्तरात्र्यागमो वा कथं भविष्यति, निम्नतलवासिनः कथं वा सूर्यालोकं लप्स्यन्ते। यदि पृथिव्या मध्यभागः स्फीतः कल्प्यते, तथापि तस्या ऊर्ध्वभागः सदैवोज्ज्वलरविकरोद्भासितो वर्तिष्यते, निम्नभागोऽपि न सूर्यकिरणरहितो भविष्यति। अतश्चन्द्रस्य सूर्यकिरणाभिभवोऽनिवार्य एव। तर्हि कथं स सूर्यकिरणविहीनरजन्या भूवासिनां दृष्टिगोचरतामवाप्स्यति, यद्यपि रजन्या चन्द्र उदेत्याकाश इति हि सत्यम्। स्वकक्षावृत्त आवर्तमाना पृथिवी तु सूर्यप्रदक्षिणं करोति चेत् पृथिवीप्रदक्षिणकारी चन्द्रो भूभास्करयोर्मध्येऽवस्थातुं न शक्यतीत्यत्र न संशयलेशोऽस्ति।

पुनरपि पृथिवीचन्द्रयोर्गतिशीलत्वे किं सृष्ट्यनन्तरं पृथिव्या योंऽशश्चन्द्राभिमुखोऽभवत् ऽशोऽद्यापि प्रतिदिवसं चन्द्रसंमुखे वर्तते चन्द्रकर्तृकभूप्रदक्षिणकाले। नहि नहि, यद्युभयोः ानगतिरभविष्यत् तर्हि हीदृश्यवस्थाऽऽपतिष्यत्। अतः पृथिव्या सह समानगत्या चन्द्रेण थ्वीप्रदक्षिणमसंभवमेवेति ह्यनेनोपपन्नम्। उभयोरसमानगतिकल्पनाया तु चन्द्रेण सकृद् प्रदक्षिणसमाप्तेः पूर्वं परं वा पृथिवी स्वकक्षावृत्ते सकृदावर्तनं निष्पादयिष्यतीत्ययं दोषः प्रसज्येत। थं तर्हि यावता कालेन पृथिवी स्वकक्षावृत्ते वारैकमावर्तनं संपादयति, सूर्यो वोदयात् पुनरुदय- र्यन्तमाकाशे स्वपरिभ्रमणं समाप्तिं नयति, तावता कालेन चन्द्रमा भूप्रदक्षिणं निर्वर्तयिष्यतीत्थं ाथयो वा स्वस्वमानयुक्ता भविष्यन्ति। अतश्चन्द्रो भूप्रदक्षिणं करोतीत्यपि न सिध्यति।

अत एव चन्द्रमा भूभास्करयोर्मध्येऽवतिष्ठते, स भूप्रदक्षिणं करोति च, स सूर्यग्रहणकाले र्यमाच्छादयति चैतत् सर्वमसिद्धमेवेति।

यदि चन्द्रमा सूर्यग्रहणसमये नागच्छति भूभास्करयोर्मध्येऽतः स न सूर्यमाच्छादयति, र्हि तत्समये तस्य कृष्णवर्णत्वप्राप्तिकल्पना युक्ता न वेति परीक्षणं निष्प्रयोजनमेव। तथापि हूनामाधुनिकज्योतिःशास्त्रज्ञाना बुद्धिरत्यर्थं तद्भावितैव प्रतीयते। अतोऽत्र वयं किञ्चिद् क्तुमिच्छामस्तेषामवबोधनाय विचिन्तनाय वा। ते खलु मन्यन्ते चन्द्रमा पर्वतोपत्यकादिसङ्कुलः, र्शिमारजन्या तत्र पर्वतादिदर्शनाद् यन्त्रादिसाहाय्येन। तादृशपर्वतादयः कृष्णच्छायारूपेण ग्रहणकाले कृष्णवर्णे सूर्याच्छादके दृश्यन्ते वेधशालातः। अतश्चन्द्रमैव कृष्णवर्णो भूत्वा ूर्यमाच्छादयति ग्रहणकाल इति। अत्रोच्यते। सम्पूर्णसूर्यग्रहणसमये यदा पश्चिमदिशि सूर्यस्य ्रथमः स्पर्शो जायते तदा चन्द्रः किं कृष्णत्वमासाद्य सूर्यं स्पृशति। चन्द्रस्तु तत्काले सूर्यकिरणा- भिभूतो वर्तिष्यते, यदि तत्र तदा तस्यागमनं स्यात्, यतस्तदा सूर्यकिरणलोपो न जायते। तेष्वन्तु तावत् कृत्रिमोपायैः श्रवणदर्शनादिव्यसनिभिर्विज्ञानविद्भिः सहैव तेषां विश्वतत्त्वो- द्घाटनार्थं विज्ञानशालासु संगृहीतोपादाननिचयविनिर्मितयन्त्रादिव्यवहारकुशलताप्रदर्शनैकमतीना वस्तुसंबन्धीनि मिथ्याज्ञानानि विकृतज्ञानानि वा। भूवासिनस्तु सर्वसूर्यग्रहणात् पूर्वं परं वा खण्डग्रहणे वा सूर्यकिरणेषु चन्द्रं न पश्यन्तीत्यविसंवादितं सत्यम्। परन्तु ग्रहणकाले सूर्यः क्रमेणाच्छादितो भवतीत्यवश्यमेव स्वीकार्यम्। अतो यदि चन्द्रो हि तत्सूर्याच्छादकः कल्प्येत ग्रहणकाले तच्चन्द्रस्य कृष्णत्वप्राप्तिश्च, तर्हि तदा भूदिवाकरयोरन्तरस्थितदिवाकरकिरणा- भिभूतसुधांशोरकस्मात् कृष्णत्वलाभः कथं संभवति। पक्षान्तरे यदि केवलपूर्णाच्छादनकाले हि चन्द्रस्य कृष्णत्वप्राप्तिरिष्यते तर्हि तदा तमस आविर्भावात्तत्तमसि पृथिवीतः सुदूरवर्तिचन्द्र-

स्थितपर्वतादयः कथं दृष्टिपथमवतरिष्यन्ति। अपि च सूर्यग्रहणसमये चन्द्रस्य गतिः प्रतीच्या दिशः प्राच्यदिशि कदापि न संभवतीति प्रागेव दर्शितम्। अतः सूर्यग्रहणकाले चन्द्रस्य कृष्णत्वप्राप्तिकल्पनाऽसङ्गतैव। तत् कथं पर्वतादयः कृष्णाभाः प्रतिभास्यन्ति। पुनश्च यद्येतदुक्तं भवेत् पौर्णमास्या निर्मलाकाशे चन्द्रस्थपर्वतादयो दृष्टिगोचरा भवन्ति दूरवीक्षणादियन्त्रसाहाय्येन, सूर्यग्रहणकालेऽपीत्थं सूर्याच्छादके तादृशपर्वतादीना कृष्णरूपेण प्रतिभानं दृष्टिमार्गमायाति। कथमेतत् सर्वं भ्रान्तदर्शनं स्यात्। एनत् प्रत्युच्यते। चन्द्रमा न पर्वतादिसङ्कुलोऽस्वच्छः स्वात्मनि सूर्यादिकिरणप्रवेशममृष्यमाणश्च, परन्तु स सलिलमयः स्वच्छो न स्वाभ्यन्तरे सूर्यादिकिरणप्रवेशरोधकश्च। सूर्यकरप्रवेशेनैव तस्य श्वेतशीतांशुत्वं जायते। अस्माकं श्रुतिस्मृतिपुराणेष्वपि चन्द्रस्येदृशरूपवर्णनमुपलभ्यते। अतो यदि पूर्णिमारात्रौ चन्द्रमसि पर्वतादयो दृश्येरन् तर्हि तदा जलमये शशिनि पृथिव्याः पर्वतादयः प्रतिविम्बिता एव भवन्ति, तादृशप्रतिबिम्बानि हि पश्यन्ति ज्योतिर्विज्ञानवेत्तारः स्वस्ववेधशालातश्चेति हि वयं वदिष्यामः। कथं तर्हि सूर्यग्रहणकाले सूर्याच्छादके पर्वतादयश्छायासदृशकृष्णत्वमाप्नुवन्ति वेधशालास्थज्योतिर्विदा दृष्टौ यदि चन्द्रमा न सूर्यमाच्छादयति। अत्रोच्यते। पूर्णग्रहणक्षणे तमस आविर्भावात्तदा सूर्याच्छादकस्य दृष्टिगोचरताप्राप्तिसंभावना नास्तीति पूर्वमेवोक्तम्। प्राक् पूर्णाच्छादनात् ततः परं वा खण्डग्रहणे वा चन्द्रस्यादृश्यत्वात्तस्य कृष्णत्वप्राप्तेरसंभाव्यमानत्वात्तस्य पश्चिमदिशः पूर्वदिश्याकाशभ्रमणायोगाच्च, श्रुत्यादिसूक्तस्तमोग्रहो राहुरेव ग्रहणकाले सूर्याच्छादक इत्येव हि स्वीकार्यम्। चन्द्रसूर्यग्रहणसमययोर्दूरवर्तित्वान्निर्बाधं राहुः सूर्यग्रासाय प्रतीच्या दिशि चन्द्रग्रासाय पूर्वस्या दिशि च धावितु समर्थ इति मन्यामहे वयम्। अपि च तमोग्रहे राहौ पृथिवीस्थपर्वतादीना छायापातोऽपि नासंभवः, यतः केषुचित् कृष्णवर्णपदार्थेषु पदार्थान्तराणां प्रतिबिम्बसंपातो दृष्टिगोचरो भवति। अत एव चन्द्रस्य सूर्यग्रहणकारणत्वं सर्वथा निराकृतमेवेति।

तृतीयतश्चन्द्रच्छाया सूर्यग्रहणकारणं न वेति चिन्त्यते। यदि सूर्यग्रहणकाले चन्द्रः पृथिवीसूर्ययोर्मध्ये नागच्छति, यदि स सूर्यं नाच्छादयति, यथाऽस्माभिः पूर्वं प्रतिपादितम्, तर्हि कथं तस्य च्छाया छायाकारणवादिमतानुसारतो ग्रहणदिवसे पृथिव्यभिमुखं प्रसृता भविष्यति, पृथिवीं स्पर्क्ष्यति वा तम उत्पाद्य। अतः पक्षोऽयं विचारसरणिप्रवेशायोग्यत्वादुपेक्षणीय एवेति।

इदानी यद्यवान्तरविषयावतारणाया प्रबन्धोऽयं समाप्ति नेतुमिष्यते तर्हि बहुक्षणं शुष्कयुक्तितर्काद्यभ्यर्थितानां भारतीयज्योतिःशास्त्रानुरागवता विपश्चिता श्रान्तचित्ते स्वल्पसरसता-

संचारप्रयास एव तत्र हेतुरिति मत्वा न केनाप्यत्रासङ्गतिदोषोपक्षेप: करणीय इति वयमभिलषाम:। वर्तमानवैज्ञानिकयुगे नानाविधनवाविष्कृतयन्त्रादिसाहाय्येन ग्रहणसंबन्धिगणनादिकं क्रियते ज्योतिर्विद्भिस्तेषां स्वस्वविज्ञानमन्दिरेषु। किन्तु भारतेऽस्मिन्नतिप्राचीनकाले ज्योतिर्विद्यापारङ्गमा: कीदृशी सूक्ष्मगणना कर्तुं समर्था आसन् यन्त्रादिबाहुल्याभावसत्त्वेऽप्येतत् किं परिज्ञातमिदानीन्तनैर्ज्योतिर्विज्ञानविद्भि:। कीदृश: सूक्ष्मकालविभागस्तेषां बुद्धिगोचर आसीदित्यत्र किञ्चित्तद्दिग्दर्शनं प्रदर्श्यते। यथा—

"त्रुटे: सहस्रभागो य: स कालो रविसंक्रम:" इति।

केयं त्रुटिर्नामेति। उच्यते—

लघ्वक्षरचतुर्भागस्त्रुटिरित्यभिधीयते।
त्रुटिद्वयं लव: प्रोक्तो निमेषस्तु लवद्वयम्॥ इति।

पुनश्च—

अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ता: कला।
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम्।
ते तु त्रिंशदहोरात्र: पक्षस्ते दश पञ्च च॥ इति।

अनुपलविपलपलदण्डादिभिरपि कालविभाग: प्रचलितोऽस्ति। धर्मानुष्ठानाद्यर्थमेतत् सूक्ष्मकालविभागप्रयोजनमासीदित्यत्र क: सन्देह:। परन्त्वस्मद्देशीयवेदस्य कालनिर्णये प्रयतमाना आधुनिकप्रत्नतत्त्वज्ञा विगतचतु:सहस्राधिकवर्षेभ्योऽर्वाग् वेदा भारतवर्षे प्रचलिता इति वदन्ति। वस्तुतो वेदस्य कालनिर्णये ईदृशमनुमानं युक्तं न वेति ते बोद्धुं शक्नुवन्ति, यदि तद्विषये तेषामनुसन्धानं निरपेक्षं राजनीतिप्रभावरहितं स्वार्थगन्धविवर्जितं सदग्रे सरति। वेदेऽस्मिन् पुनर्नानाविधयज्ञकर्माद्यनुष्ठानपद्धतय उक्ता:। ग्रहणकालीनराहुग्रासोक्तिरपि वेद उपलभ्यते। अतो वैदिककालारम्भादपीदृशकालविभागो ज्योतिर्विज्ञानविषयकसूक्ष्मगणनादिकं च प्रवर्ततेऽस्मिन् भारते वैदिककर्मादिनिर्वर्तनाय दैनन्दिनजीवनयापनाय चेति॥

---

# रीतिविमर्शः

श्रीमुकुन्दशास्त्री खिस्ते, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

## प्राथमिकमितिवृत्तम्

यद्यपि रीतेः संप्रदाय आचार्यवामनेनैव संस्थापितो विशदीकृतश्च, तथापि तस्याः प्रागपि सत्ताऽऽसीत् । यतो नाट्यशास्त्रे भरतमुनिना यद्यपि रीतिशब्दः साक्षान्नैव निर्दिष्टस्तथापि भारतस्य चतुर्दिक्षु चतुर्विधा प्रवृत्तिः प्रदर्शिता—भारतस्य पश्चिमभागे या कवीना प्रवृत्तिः साऽऽवन्ती, दक्षिणभागे दाक्षिणात्या, पूर्वभागीयौण्ड्रमागधी, मध्यदेशीया पाञ्चालीति । तथा चोक्तं भरतमुनिना—

चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोगतः ।
आवन्ती दाक्षिणात्या च पाञ्चाली चौण्ड्रमागधी ॥ [नाट्य० १४।३६]

भरतमतानुसारेण तत्तद्देशीयवेषभाषाऽऽचारवार्तासु प्रवृत्तिशब्दः प्रवर्तते । तदुक्तं तेनैव—"पृथिव्यां नानादेशवेषभाषाऽऽचारवार्ताः ख्यापयतीति प्रवृत्तिः" [नाट्य० पृ० १६५] इति । ततश्च भरतमुनिना वेषाचारवार्तास्वपि प्रवृत्तिशब्दः प्रयुक्तः, वामनेन तु केवलं भाषास्वेव रीतिशब्दः प्रयुक्त इत्येव भेदः । अपि च वामनेन पाञ्चाली रीतिरपि तत एव गृहीता ।

भरतानन्तरं बाणभट्टेन निगदितं यदुत्तरभारतीयाः श्लेषेणैव वर्णयन्ति, प्रतीच्या अर्थगौरवमाश्रयन्ति, दाक्षिणात्या उत्प्रेक्षालङ्कारे स्निह्यन्ति, गौडा अर्थात् पूर्वभारतीया अक्षराडम्बरमेव समीचीनं मन्यन्ते । तदुक्तं तेनैव—

श्लेषप्रायमुदीच्येषु प्रतीच्येष्वर्थमात्रकम् ।
उत्प्रेक्षा दाक्षिणात्येषु गौडेष्वक्षरडम्बरः ॥ [हर्ष०, ७ श्लो०]

बाणभट्टेन रीतिशब्दस्य निर्देशः कुत्रापि न कृतः ।

ततश्च भामहेन काव्यभेदवर्णने वैदर्भगौडशब्दौ प्रयुक्तौ । तथा हि—

गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक् ।
गतानुगतिकन्यायान्नानाख्येयममेधसाम् ॥ [ काव्यालं० १।३२ ]

अत्रापि भामहेन रीतिशब्दः कुत्रापि न प्रयुक्तः ।

भामहानन्तरं रीतिविवेचनं दण्डिना कृतम् । अत एव तस्य रीतिवादीति नाम प्रथितम् ।

रीतिशब्दे मार्गशब्दं प्रयुञ्जानेन तेन—वाचामनेके मार्गाः, सन्ति तेषु परस्परमत्यन्तं सूक्ष्मतमा भेदाः, तेषु मिथो विभिन्नौ वैदर्भगौडीयौ, श्लेषः, प्रसादः, समता, माधुर्यम्, सुकुमारता, अर्थव्यक्तिः, उदारता, ओजः, कान्तिः, समाधिरिति दश गुणा वैदर्भस्य प्राणाः, एषां विपर्ययो गौडमार्गे दृश्यत इत्यादिकं सर्वं प्रतिपादितम्। तदुक्तं तेनैव—

अस्त्यनेको गिरा मार्गः सूक्ष्मभेदः परस्परम्।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ॥
श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः॥
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः।
एषां विपर्ययः प्रायो लक्ष्यते गौडवर्त्मनि॥ [काव्या० १।४०-४२]

अस्यायमभिप्रायो यद् दण्डिनः कालेऽपि द्वयोरेव वैदर्भीगौड्यो रीत्योः प्रसिद्धिरासीत्। तदनन्तरं वामनेनैव रीतिसम्प्रदायो विशदरूपेण संस्थापित इति।

## रीतेर्लक्षणम्

भोजेन रीङ् गताविति धातो रीतिशब्दं निष्पाद्य तस्यावयवार्थः—गतिः, मार्गः, प्रस्थानं च; रूढ्यर्थः पद्धतिरित्याख्यातम्। वामनात्पूर्वं दण्डिना, वामनानन्तरं कुन्तकेन (वक्रोक्तिजीवितकारेण) च रीतिशब्दस्य कृते मार्गशब्दः प्रयुक्तः। यद्यपि वामनात्पूर्वं भामहेन दण्डिना च वैदर्भीगौडीशब्दयोः प्रयोगः कृतस्तथापि तयोः स्वरूपं लक्षणं च न केनापि निर्दिष्टम्। तस्याः सम्प्रदायसंस्थापको वामन एवेति तस्यैव लक्षणानुसारेण स्वरूपं निर्दिश्यते—"विशिष्टपदरचना रीतिः" [१।२।७], "विशेषो गुणात्मा" [१।२।८] इति सूत्रानुसारात्। अत्र गुणपदेन काव्यशोभाकारकाः शब्दधर्मा अर्थधर्माश्च गृह्यन्ते। तथा च शब्दार्थयोश्चमत्कारैर्युक्ता पदरचना रीतिरिति वामनलक्षणम्।

तदनन्तरमानन्दवर्धनाचार्यैस्तस्याः सङ्घटनेति नामनिर्देशः कृतः। सं=सम्यक्=रसानुकूला या घटना=पदरचना सैव रीतिः, अर्थाद् ध्वनिमार्गप्रवर्तकेनानन्दवर्धनेन रसव्यञ्जिका पदरचनैव रीतिशब्देन निर्दिष्टा। वामनमते शब्दार्थयोर्ज्ञानस्यैव चरमसीम्नि विद्यमानत्वेन तत्सौन्दर्ययुक्तैव पदरचना रीतिः।

तदनन्तरं राजशेखरेण—"वचनविन्यासक्रमो रीतिः" [तृतीयाध्याये, पृ० ३८] इति

काव्यमीमासाया लक्षणं कृतम् । तत्तु वामनकृतलक्षणादविशिष्टम्, यतो वचनपदेन पदमेवोच्यते । तस्य विन्यासक्रमो नाम रचना ।

तदनन्तरं कुन्तकेन रीतेर्मार्गशब्देन व्यपदेशः कृतः । कविस्वभावं मुख्यं मन्वानेन तेन सुकुमार-विचित्र-मध्यमात्मकभेदेन मार्गस्य त्रिविधत्वं निरूपितम् । तत्र "कविप्रस्थानहेतवः" इति [वक्रोक्ति० १।२४] शब्देन रीतेर्निर्णायकः कविस्वभाव एव निर्णीतः ।

भोजराजेन सरस्वतीकण्ठाभरणे मार्गपथरीतिशब्दानामभिन्नार्थत्व प्रतिपादितम्, तदनुसारेण रीतिशब्दार्थः कविगमनमार्ग एवेति च; कुन्तकः यं कविप्रस्थानहेतुशब्देन जग्राह । तदुक्तं भोजेन—

वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः ।
रीङ् गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते ॥ [२।२७]

भोजानन्तरं मम्मटेन रीतेः स्वरूपं किञ्चित्परिष्कृत्य प्रकाशितम् । तेनोपनागरिका, परुषा, कोमलेति तिस्रो वृत्तयः प्रतिपादिताः, तासामेव वामनादिभिर्वैदर्भी, गौडी, पाञ्चालीति नामान्तराणि निर्दिष्टानीत्यभिहितं च । तदुक्तं काव्यप्रकाशे—"एतास्तिस्रो वृत्तयो वामनादीना मते वैदर्भीगौडीपाञ्चाल्याख्या रीतय उच्यन्ते" [९ उ०, ८१ का०] इति । मम्मटमते निश्चितवर्णगतो रसव्यञ्जको व्यापार एव वृत्तिपदेनोच्यते । तदुक्तं तेनैव—"वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः" [९ उ०, ७९ का०] इति । अत्र वृत्तिपदेन मधुरादिरसानुगुणनियतमसृणादिवर्णगतो रसविषयो व्यापारो व्यञ्जनाख्य इति प्रदीपकृतः । नियतरसविशेषव्यञ्जकत्वेन परिगणिता वर्णास्तन्निष्ठो व्यापारः सहकार्यानुपूर्वीविशेषः स एव वृत्तिरिति चक्रवर्तिश्रीवत्सलाञ्छनभट्टाचार्यादयः । वृत्तिश्च माधुर्यादि-व्यञ्जकसुकुमारादिवर्णगतत्वेन मधुरादिरसोपकारकः शब्दस्य सङ्घटनाख्यो व्यापारविशेष इत्यन्ये । तत्तद्गुणाभिव्यञ्जकवर्णसमूहमेव रीतिं ब्रुवता मम्मटेन परम्परया रीते रसाभिव्यञ्जकत्वं प्रदर्शितम् ।

विश्वनाथेन साहित्यदर्पणे रीतिलक्षण आनन्दवर्धनाचार्यमतमेवाश्रितम् । तथा हि—"पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत् । उपकर्त्री रसादीनाम्" [९।१] इति । 'आकारोऽस्य शूरः' इत्यत्र यथा बाह्य आकार आन्तरं शौर्यमभिव्यनक्ति तद्वद् बाह्या पदसङ्घटनाऽऽन्तरं रसं प्रकाशयतीति तस्य तात्पर्यम् ।

पूर्वोक्तानां मतानामयमेव निष्कर्षः प्रतिभाति यद् विशिष्टायाः पदरचनाया रीतित्वेनाङ्गीकारस्तस्या गुणेन संबन्धश्च सर्वैरङ्गीकृतः । परं वामनस्तु शब्दार्थयोः सौन्दर्यमेव गुणपदेन कथयति, तस्य संबन्धः शब्दार्थाभ्यामेव । वामनपरवर्तिन आचार्या गुणानां माधुर्यादीनां रसेन सह संबन्धं प्रतिपादयन्ति । रीतयो गुणद्वारा रसादीन् प्रकाशयन्त्येतावानेवात्र भेदः प्रतिभाति । अर्थाद्

रीतिरेवात्मेति सिद्धान्ताद् वामनो रीतीनामेवास्वाद्यत्वं मनुते। परवर्तिनो रसादीनामेवास्वाद्यत्वं रीतीना साधकत्वं च प्रतिपादयन्ति।

## रीतीनां विभाजनप्रकार:

वामनेन रीतीना देशपरत्वेन विभागोऽन्यथा वेत्याशङ्क्य समाहितं यद् दशगुणभूषिताया वैदर्भीरीतेः प्रयोगः प्रायो विदर्भदेशीयाना कवीना काव्येषूपलभ्यते, अतस्तस्या देशपरत्वेन वैदर्भीति निर्देशः कृतः। ओजसा कान्तिना च समन्विताया रीतेः प्रयोगः प्रायो गौडदेशीयकवीना कवितासु दृश्यते, अतस्तस्या गौडीयेति नाम निर्दिष्टम्। माधुर्यसौकुमार्योपपन्नाया रीतेः प्रयोगः प्रायः पाञ्चालदेशीयकविजनवाणीषु संभवतीति सा पाञ्चालीति नाम्ना निर्दिष्टा। अर्थाद् वामनमते देशसंबन्धो रीतेर्विभाजको नास्ति, किन्तु तत्तद्देशे तस्या रीतेराधिक्यादितरयोश्चाल्पीयस्त्वात्प्राधान्येन व्यवहारः। वामनानन्तरं रसध्वनिवादिभिर्वक्तृवाच्यरसादयो रीतिविभाजकाः प्रोक्ताः। तथा हि—गौडीया रीतिस्तत्रैव भवति यत्र रौद्रादिरसयोगो युद्धवर्णनं वा, न तु तस्या गौडदेशेन कोऽपि संबन्धः। तथैव पाञ्चाली रीतिस्तत्रैव भवति यत्र शृङ्गारकरुणादिरसाना संबन्धः, न तु तस्याः पाञ्चालदेशेन कोऽपि संबन्धः। कुन्तकेन (वक्रोक्तिजीवितकारेण) रीतौ देशनामापि परित्यक्तम्। स कविमार्गमर्थात् कविस्वभावमेव रीतेर्विभाजकमवोचत्। मातुलेयभगिनीविवाहप्रथावत् कोऽपि देशो रीतेर्विभाजको नास्ति, यद्येवं स्यात्तर्हि तत्रत्याः सर्वेऽपि निवासिनस्तस्यामेव रीतौ प्रयोक्तुं समर्था भवेयुः। तथा नास्ति। अतस्तत्तद्देशाना रीतिविभाजकत्वमसङ्गतमेव। तदुक्तं कुन्तकेन—"न च विशिष्टरीतियुक्तत्वेन काव्यकरणं मातुलेयभगिनीविवाहवद् देशधर्मतया व्यवस्थापयितुं शक्यम्" [ वक्रोक्ति० पृ० ४५ ] इति।

कुन्तकेन सुकुमारः, विचित्रः, मध्यमश्चेति त्रिविधः कविस्वभावो वर्णितः। स एव त्रिविधरीतिविभाजक इति तन्मतम्। इत्थमत्रालोच्यते—तत्तद्देशेषु भिन्ना भिन्ना एव वेषभाषाव्यवहाररीतयो दृश्यन्ते, तासु सर्वासु तत्तद्देशस्यैव प्रभाव इति वक्तुं शक्यते। यथा दाक्षिणात्याना योच्चारणशैली सेतरत्र न दृश्यते, तथा वङ्गीयाना योच्चारणशैली सा तत्रैवावलोक्यते। अनया रीत्या विविच्यमाने देशस्यापि भाषाव्यवहाररीत्यादिषु प्रभाव आपतति। इत्थं वामनेन तत्तद्देशस्य तत्तद्रीतिविभाजकत्वं यदुक्तं तदपि सम्यक् प्रतिभाति, तथापि कविस्वभावस्य रीतिविभाजकत्वं कुन्तकोक्तं समीचीनतरम्। यतो हि 'स्वभावो दुरतिक्रमः' इति न्यायेन स्वभावस्योपरि देशस्य प्रभावो नापतति, यथा कश्चिच्चौर्यकर्ता विश्वनाथमन्दिरं गत्वाऽपि चौर्यं करोत्येव, न च तत्र देशस्य कश्चन प्रभावोऽवलोक्यते। स्वतन्त्रपुरुषाणा स्वभावे त्वल्पीयानपि

देशप्रभावो नापतति, यथा मालवीयमहोदया विदेशं गत्वापि स्वीयमाचारं न तत्यजुः। कवयस्तु स्वतन्त्राः, तेषां वर्णनरीतौ देशप्रभावापेक्षया स्वभावप्रभाव एव समीचीनतरः प्रतिभातीति कुन्तकमतमेव युक्तियुक्तम्।

वामनानन्तरं ध्वनिवादिभ्यां मम्मटविश्वनाथाभ्यां रीतीनां गुणैः सह नियतः संबन्धोऽङ्गीकृतः। रीतिलक्षणं च विश्वनाथेनोक्तम्—

माधुर्यव्यञ्जकैर्वर्णैं रचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते॥
ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः।
समासबहुला गौडी………………॥
समस्तपञ्चषपदो बन्धः पाञ्चालिका मता। [९।३-५] इति।

## रीतेर्नियामकाः

वामनेन रीतेः स्वतन्त्रतया सत्ता स्वीकृता, अतस्तन्मते तन्नियामकहेतूनामावश्यकता नास्ति। परं यैर्ध्वनिवादिभी रसाधीनत्वं तस्या अङ्गीकृतं तन्मते मुख्यतया रस एव तस्या नियामकः, अन्यद् वक्तृवाच्ययोरौचित्यं च तस्या नियामकम्। तदुक्तं ध्वन्यालोके—'तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः" [२।६२] इति। एतदतिरिक्तमपि—

विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति।
काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा॥ [३।६३]

अस्याः कारिकाया व्याख्यानमपि तत्रैव कृतम्। तद्यथा—तत्र वक्ता कविः कविनिबद्धो वा कश्चित्। कविनिबद्धश्चापि रसभावरहितः, रसभावसमन्वितो वा। रसोऽपि कथानायकाश्रयः, तद्विपक्षाश्रयो वा। कथानायकश्च धीरोदात्तादिभेदभिन्नः पूर्वस्तदनन्तरो वेति विकल्पाः। वाच्यं च ध्वन्यात्मरसाङ्गं रसाभासाङ्गं वा, अभिनेयार्थमनभिनेयार्थं वा, उत्तमप्रकृत्याश्रयं तदितराश्रयं वेति बहुप्रकारम्। यदा कविरपगतरसभावस्तदा रचनायाः कामचारः। यदापि कविनिबद्धो वक्ता रसभावरहितस्तदा कामचार एव। यदा तु कविः कविनिबद्धो वा वक्ता रसभावसमन्वितः, रसश्च प्रधानभूतत्वाद् ध्वन्यात्मभूतः, तदा तु नियमेनैवासमासामध्यमसमासे एव सङ्घटने। 'विषयाश्रयमौचित्यम्' इत्यत्र विषयपदेन काव्यवस्तु न गृहीतम्, तस्य वाच्येनैव संग्रहात्; किन्तु काव्यस्वरूपं गृह्यते। तद्यथा—मुक्तकः, पर्यायबन्धः, परिकथा, खण्डकथा, सकलकथा, सर्गबन्ध

इत्यादि। नामाश्रयेणापि सङ्घटनारीत्योर्भेदो भवति। इत्थं वक्तृवाच्यविषयौचित्येन रीतेर्व्यवस्थाऽऽनन्दवर्धनेनोपपादिता।

इत्थं तिसृषु रीतिषु वैदर्भी रीतिरेव मुख्यतया सर्वैः कविभिराश्रीयते। यत इयमेव दशगुणैर्भूषिता। श्रीहर्षेण च नैषध उक्तम्—

धन्यासि वैदर्भि गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति॥ [३।११६]

इत्थं पण्डितराजो जगन्नाथोऽपि वैदर्भीमेव मुख्या मनुते स्म, यतो हि सः—"मया सर्वाण्यप्युदाहरणान्यस्यामेव रीतौ प्रदर्शितानि" इति कण्ठरवेणोद्घोषितवान्। अतो महनीयजनसंमता सहृदयहृदयहारिणी वैदर्भी वृत्तिरेव प्राधान्यमवलम्बत इति सिद्धान्तः॥

# संस्कृतकाव्येषु प्रगतिशीलित्वम्

श्रीबलदेव उपाध्याय., हिन्दूविश्वविद्यालयः, वाराणसी ।

केचन आधुनिका आलोचनाविदो वदन्ति यन्न विद्यते संस्कृतनिबद्धेषु काव्येषु प्रगतिशीलित्वं नाम । प्रगतिशीलित्वस्य स्वरूपनिर्णयावसरे ते इत्थं मीमांसन्ते यत् समाजस्थनिम्नश्रेणीगताना दारिद्र्यपङ्कमग्नाना जनाना यत्खलून्मीलयति सामाजिकदृष्ट्या सर्वतो गर्हणीयं जीवितं तस्य यथार्थतश्चित्रणं काव्येषु, संवादादितत्त्वयोजनया यन्निरूपणं नाटकेषु, तदेव काव्यस्यप्रगतिशीलित्वस्य जीवातुः । साम्प्रतं रूसदेशस्थसाहित्यस्य वैशिष्ट्यमिदमेव सर्वतो जागर्ति यन्निम्नतराणा परिश्रमोपजीविना जनाना यथार्थवादमनुसृत्य जीवनचित्रणं नाम । इमे आलोचकंमन्या अनभिज्ञाः संस्कृतकाव्यकलापाना केवलं दोषैकपक्षपातिनः परप्रत्ययनेयबुद्धयो हन्त यत्खलूद्गिरन्ति तत्तु नितान्तं भ्रान्तिपूर्णत्वात् सुतरा नास्त्यनवद्यमिति विद्वांसो विदांकुर्वन्तु विवेचनचणाः ।

प्राचीनभारतेऽस्मिन् धनाढ्याना मान्याना महीभुजामन्येषा वा लक्ष्मीपुत्राणा सदनं वैदुषीमण्डिताना पण्डिताना प्रतिभाजुषा कवीना वा कृते सत्यमेवावर्तताऽऽकर्षणकेन्द्रमिति के खलु न जानन्ति । राज्ञामाश्रयस्तेषा विधाय भोजनादिव्यवस्था चिन्ताया ह्रासकोऽभवदिति त्वकिञ्चित्करी धारणा साम्प्रतिकानामालोचकानाम् । कवीना प्रतिभाप्रसारणाय पण्डिताना पाण्डित्योद्बोधनाय च समृद्धानामाश्रयस्योपयोग आसीत् प्राचीने युगे । दैहिकचिन्तायाः शान्तुणी विद्यते मानसिकचिन्ताया निवृत्तिरिति हेतोर्विद्वांसो भूपालानामाश्रयकल्पतरूणामाश्रयणं सर्वथा चक्रुः । न तेन कापि हानिरभूत् । कवीना स्वाश्रयप्रदातॄणा नृपाणा कीर्तिकीर्तनं नाम न खलु तेषामावश्यकं कार्यमभवत् । अवान्तरकालीनाः केचन कवयः स्तुवन्तु कृपाप्रदर्शनकारिणः काश्चन महीपालान्, परन्तु प्राचीनाना कवीना नेयमासीत् पद्धतिरवद्या, नायमासीत् क्षुद्रजनक्षुण्णो मार्गः । स्वाच्छन्द्यप्रिया हि निरङ्कुशाः कवयः सकलजनहिताय कुर्वन्तः कविकर्म नो कदापि समाजस्थपुरुषान् हीनान् वाऽदीनान् वा, उच्चान् वा नीचान् वा विसस्मरुः । तेषा भारती सर्वेषां वर्गाणा कल्याणाय प्रवर्तमानैव स्वीया कृतार्थता भेजे । उदाहरणप्रदर्शनमुखेन प्रदर्श्यते देववाणीरचनाचणाना पण्डितानामेतद्विषयिका काचन काव्यचातुरी ।

श्रूयते हि राज्ञा भोजेनानर्घोपायनैः सादरं सत्कृतो माघकविः श्रीमालनगरे विक्रमस्याष्टम-शतके स्वाभिनवं 'लक्ष्मीपतेः कीर्तनमात्रचारु' रुचिरं महाकाव्यं शिशुपालवधाभिधानं प्रणि-निनाय। तत्काव्यविमर्शो हि ध्रुवमेव तस्य साधारणजनाना जीवनविषयेऽप्यवधीयमाना दृष्टि साक्षात् स्फुटीकरोति। एकादशसर्गस्थं प्रभातवर्णनमेवैतदुपोद्बलकं प्रमाणरूपेणोपस्थापयितुं शक्यते। प्रभातवर्णनेऽस्मिन् महीपालाना वर्णनपरोऽपि कविः प्रजावर्गं नैव विस्मरति। राजप्रासाददत्तदृष्टिरपि माघो दरिद्राणामुटजेषु स्वा दृष्टि निक्षिपत्येव। प्रभातकाले प्रहर-निदर्शनपराणा पुरुषाणा चित्रणमेतन्न खलु यथार्थतया समीचीनमपि तु नूतनवस्तुप्रदर्शनेन पाठकाना हृदयाऽऽवर्जकमपि भवति—

प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति।
मुहुरविशदवर्णां निद्रया शून्यशून्या
दददपि गिरमन्तर्बुध्यते नो मनुष्यः॥

[ शिशुपालवधे, ११।४ ]

कवेः सहानुभूतिर्न केवलं मानवेष्वेव सीमबद्धं वर्तते, प्रत्युत स खलु कविः तिरश्चा पशूनां च व्यवहारस्यावलोकने नितान्तं पटुर्दक्षश्च वर्तते। धान्यपालिकाना गोपीनां मृगजन्य-बाधयेतो धावन्तीना शुकादितः क्षेत्ररक्षायै ततो व्याकुलाना च निरीक्ष्य विषमा विस्मयनीया स्थिति के खलु पाठका आनन्दनिर्भरा न प्रशंसन्ति सूक्ष्मनिरीक्षणचातुरी महाकवेर्माघस्य। दृश्यता रुचिरं दृश्यमेतत्—

स व्रीहिणा यावदपासितु गताः
शुकान् मृगैस्तावदुपद्रुतश्रियाम्।
कैदारिकाणामभितः समाकुलाः
सहासमालोकयति स्म गोपिकाः॥

[ शिशु० १२।४२ ]

श्रीमान् माघकविः स्वमहाकाव्यस्य द्वादशे सर्गे जनपदनिवासिनामनेकान् ग्रामीणाचारान् सरलान् सरलया दृशा निरीक्ष्य कोमलया संस्कृतगिरा साधु वर्णितवान्। लज्जावनतमुख्यो नार्यो ग्रामीणाः श्रीकृष्णं वाटिकोपरोधसमर्थाना वृतीना विवरमध्येनैव साक्षात्कुर्वन्ति। गोणीभारा-वनतपृष्ठाः क्रमेलका इतस्ततो धावन्तो भारमसहमाना राजमार्गेषु विस्तृतेष्वपि जनसमूहं समर्द्य

भीषयन्ति बालान् तन्मातृश्च। ग्रामाणां सीमान्तरेषु पानगोष्ठीमध्यगता गायका मधुपानमास्वदन्तः कमप्यानन्दमावहन्तीति वर्णयन् कविरयं कथं सामान्यजनताया दुःखसुखयोर्निरपेक्षभावमाधत्ते। तस्मात्पूर्वोक्ता अभियुक्तानां गिरो नितान्तमुपेक्ष्या एव।

भारविकविः पल्लवनरेशानामाश्रयमावहन् तत्सम्योऽपि ग्रामाणां सुन्दराणि दृश्यानि वर्णयितुं तद्वासिनां च यथार्थतया जीवनं चित्रयितुं पारयतीति के खलु काव्यविदो न विदाङ्कुर्वन्ति। किरातार्जुनीयस्य चतुर्थसर्गस्थं वर्ण्यं वस्तुजातमस्मिन् स्थले दृष्टान्तरूपेणोपस्थापयितुं पार्यते। गोपानां वर्णनप्रवणमिदं पद्यं ध्रुवमनुसन्धेयं विद्वज्जनैः—

गतान् पशूनां सह जन्मबन्धुतां
गृहाश्रयं प्रेम वनेषु बिभ्रतः।
ददर्श गोपानुपधेनु पाण्डवः
कृतानुकारानिव गोभिरार्जवे॥

[ किरात० ४।१३ ]

महाकविः कालिदासो विक्रमादित्यसभारत्नमपि दरिद्राणां दयनीयां स्थितिं धनाढ्यानां चानन्दभरतुन्दिलां दशां स्वकाव्येषु यथार्थरूपेणानेकशो वर्णयति। एकलस्य मेघदूतकाव्यस्यानुशीलनमेव तद्वर्णनपद्धतिमाविष्कर्तुं ध्रुवं क्षमते। नहि मेघदूतं कस्यचिद् विशालवैभवोल्लसितहृदयस्य महीपालस्य विरहवर्णनानिपुणं काव्यम्, अपि तु विपुलविभवशालिनो राजराजस्य कुबेरस्य कोपभाजनभूतस्य कस्यचन दीनस्य तत्सेवकस्य यक्षस्यैव विषमवियोगविश्लेषणपरं कविकर्मेति ध्रुवं जागर्ति तस्य महनीयं किमपि वैशिष्ट्यम्। स्वस्वामिनः शापमनुभूय स्वगृहात् प्रेमभरालसायाः स्वपत्न्याश्च दूरीकृतोऽयं यक्षः करालकरालां वेदनातितिमनुभवन् स्वजीवनं यापयतीति तद्वर्णनपरोऽयं महाकविः कामपि दीनजनेषु स्वीयां सहानुभूतिमाविष्कुर्वन् कस्य दृष्टिपथं नावतरति—

सा संन्यस्ताभरणमबला पेशलं धारयन्ती
शय्योत्सङ्गे निहितमसकृद् दुःखदुःखेन गात्रम्।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा॥

[ उत्तरमेघे, ३० श्लो० ]

पद्येऽस्मिन् कविर्यक्षपत्न्या नितान्त क्लान्तमात्मानं वर्णयति। विरहजन्यदौर्बल्यात् तस्या अबलात्वं साध्वनुमातु शक्यते। दुर्बलतयाऽऽभरणाना भारमसहमानया तया भूषणाना संन्यास एव व्यधायि। शय्योत्सङ्गे निहितमित्यत्र किमपि मधुरं व्यनक्ति महाकविः। गात्रं केनापि निहितं स्थापितं वर्तते, न तु सा स्वयं स्थापयितु' पारयति। यदि शय्यायाः पार्श्वे निहितं गात्रं स्यात् तदा तस्य भूम्यामधः पातः संभाव्येत। एतदमङ्गलजननीं संभावना दूरीकर्तु'कामः कविर्गात्रस्य स्थिति शय्याया उत्सङ्गे मध्ये वर्णयति। शय्याया मध्ये स्थितं गात्रं भूमौ पतितु' कथमपि न क्षमते। एवंभूतमपि गात्रं यक्षपत्नी असकृदनेकशो दुःखदु.खेन दुःखप्रकारेण कथमपि धारयतीत्यहो दौर्बल्यस्य कार्श्यस्य च पराकाष्ठा। तस्या दशादर्शनेन तव हृदये कारुण्यस्योद्भेद एव न भविष्यति, प्रत्युत सा यक्षपत्नी स्वत एव कार्श्यस्य परा कोटिमावहन्ती त्वामश्रुमोचनाय च प्रेरयिष्यति। अत्र कविः शोभनयाऽभिव्यञ्जनया यक्षपत्न्याः कामपि नितान्तं दयनीया दशां सचेतसामग्रेऽभिव्यनक्ति। रसपेशलं भावुकतामण्डितमिदं चित्रं न कस्याश्चन महिष्या दशावर्णनपरतयोपन्यस्तं कविना, अपि त्वत्यन्तं सामान्यकोटिमनुभवन्त्या यक्षपत्न्याः। इत्थं राज्ञो विक्रमादित्यस्य सभाया समृद्धाया दिवसं यापयन्नपि कविर्नो पारयति दीनान् जनान् विस्मतु'म्। इत्थं विषयजातं विचार्यैवाऽऽचार्यैरुदघोषि—

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
जायते यन्न काव्याङ्गमहो भारो महान् कवेः॥

---

# रघुवंशे प्रकृतिवर्णनम्

श्रीजयगोपालशर्मा, उच्चमाध्यमिकविद्यालयः, रुड़की ।

( पूर्वतोऽनुवृत्तम् )

प्रयागे संगमस्यापि दृश्यमतीवाह्लादजनकम् । आकाशमार्गाद् दृश्यमानं संगमस्य रूपमतिमनोहरं विद्यते । गङ्गायमुनयोः शुभ्रनीलाना जलाना विविधाः शोभा आनन्दोल्लसितेन हृदयेन चित्रिता विद्यन्ते—

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव ॥
क्वचित्खगाना प्रियमानसाना कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥
क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥
क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥ [रघु० १३।५४-५७]

अस्मिन् वर्णनेऽलङ्काराणा योजना दृश्यस्य प्रकृतिरूपस्य बिम्बग्रहणे सहायतामेव ददाति, न तु बाधामुपस्थापयति । प्रस्तुतरूपस्य विषये या सुन्दरता कविरनुभावयितुमिच्छति सा न केवलं निर्बाधाऽनुभूयते, अपि तु तस्या रमणीयता हृदयमन्दिरे सुष्टुतरं चित्रिता भवति । प्रस्तुतस्य सौन्दर्यमधिकतरया रमणीयतयाऽनुभूयते । यान्यप्रस्तुतरूपाण्यत्रोपात्तानि तानि वर्ण्यविषयस्य सौन्दर्यं विशेषेण तीव्रतरमनुभावयन्ति । अप्रस्तुतयोजना न तादृशी या प्रस्तुताद् ध्यानमपकृष्याऽप्रस्तुतमेव भावयति । कथनस्यायमभिप्रायो यत् कालिदासेन प्रकृतिवर्णने याऽप्रस्तुतयोजना कृता सा प्रस्तुतस्य सौन्दर्यभावना नाभिभवति, अपि तु ता वर्धयत्येव । एतद्विपरीतं माघस्य निम्ने पद्येऽप्रस्तुतयोजनैव मुख्या, सा हि प्रस्तुतस्य सौन्दर्यभावना संबाधयति—

विततपृथुवरत्रातुल्यरूपैर्मयूखैः कलश इव गरीयान् दिग्भिराकृष्यमाणः ।
कृतचपलविहङ्गालापकोलाहलाभिर्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥
[ माघ० ११।४४ ]

प्रकृतेरुदासीनस्य रूपस्यापि वर्णनं कविना हृदयग्राहि कृतम्। षोडशे सर्गे वर्णित-मयोध्याया ध्वंसावशेषाणां रूपमतीतस्वरूपेण यदा तुलना प्राप्यते, तदा करुणायाः संचार आविर्भावो वा स्वाभाविकः। अयोध्याया अधिदेवता कुशमुपगम्यायोध्याया दीनदशा मर्मस्पर्शिन्या पद्धत्या वर्णयति—

> आस्फालितं यत्प्रमदाकराग्रैर्मृदङ्गधीरध्वनिमन्वगच्छत्।
> वन्यैरिदानीं महिषैस्तदम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम्॥ [रघु० १६।१३]
> कालान्तरश्यामसुधेषु नक्तमितस्ततो रूढतृणाङ्कुरेषु।
> त एव मुक्तागुणशुद्धयोऽपि हर्म्येषु मूर्च्छन्ति न चन्द्रपादाः॥ [रघु० १६।१८]
> रात्रावनाविष्कृतदीपभासः कान्तामुखश्रीवियुता दिवापि।
> तिरस्क्रियन्ते कृमितन्तुजालैर्विच्छिन्नधूमप्रसरा गवाक्षाः॥ [रघु० १६।२०]

अयं शुद्धो वस्तुविन्यासः। अत्रालङ्कारिकयोजनायाः प्रयत्नो न दृश्यते। अयं वस्तुविन्यास एवापेक्षितं करुणाभावं व्यञ्जयितुं संचारयितुं च पूर्णतया क्षमः।

२. इदं सर्वं प्रकृतिस्वरूपं वर्ण्यमानं पाठकस्य हृदये प्रकृत्युत्सवमिव चित्रयति। एकैकेन वर्ण्यमानेन रूपेण सह हृदयमुच्छलति, आमोदतरङ्गैराप्यायितं भवति। सर्वाण्यपि दृश्याणि (संश्लिष्टचित्राणि) हृदयानुरञ्जनमेव समर्पयन्ति, न कञ्चिद् विरागजनकं भयादिकं भावम्। प्रकृतिं प्रेमदृष्ट्या पश्यतो मनसः संबन्ध इदं स्वाभाविकमेव। प्रेम्णो दृष्टिः सौन्दर्यमेव विलोकयति। यदि सा दृष्टिः क्वचिद् सौन्दर्यहानिं पश्यति, तदा सा तत्क्षणमेव तत्र सौन्दर्योज्जीवनाय हृदयं प्रेरयति, यतो रागि मनः प्रियस्य हीनदशां विलोक्य करुणायते। प्रकृतिप्रेमी प्रियस्य मुखे स्मितरेखां प्रफुल्लतामेव च विलोकयितुं कामयते।

३. यं प्रत्यस्माकं मनसि प्रेमधारा स्रवति, अर्थाद् यं प्रति वयं स्वकीयमनुरागात्मकं भावं समर्पयामः, तस्यापि स्नेहानुवृत्तिं वयं प्रतिदाने कामयामहे। यावत् प्रियात् स्नेहानुवृत्तिर्नोद्गच्छति तावत् प्रेमिणः प्रेमसाफल्यं न सिध्यति। प्रियादपि स्नेहलाभः प्रेम-साफल्यस्य लक्षणम्। प्रकृते प्रकृतिः प्रिया, कविस्तन्निबद्धो जनो वा प्रकृतिप्रेमी विद्यते। प्रेम्णः पूर्णतामधिगन्तुं कविना व्यक्तिं (प्रेमिणं) प्रति प्रकृतिरप्यनुरागवती दर्शिता। प्रकृतेरनुरागवत्ताया अयमर्थो यत् प्रकृतेर्यान् रूपविशेषान् प्रति जनोऽनुरागं दधाति, ते रूपविशेषा अपि जनं प्रति स्वानुरागं प्रवहेयुः। यथा जनः प्रकृतिं प्रेमदृष्ट्या पश्यति, तथा प्रकृतिरपि तं जनं प्रति स्वानुरागं प्रकटयेत्, जनस्य दुःखान्यपहरेच्च।

## रघुवंशे प्रकृतिवर्णनम्

प्रकृतेर्मनुष्यस्य चैतादृशोऽन्योन्याश्रयोऽनुरागः कवेः कालिदासस्य कृतौ समुपलभ्यते। यो राजा दिलीपः प्रकृतेर्विविधानि रूपाणि निरीक्ष्य सातिशयं प्रमोदमनुभवति, तं प्रति तानि रूपाण्यपि स्वकीया स्नेहधारा सहर्षं वर्षन्ति। तस्य यशांसि पार्श्वस्था द्रुमा वयसा विरावैरुदीरयन्ति, बाललतास्तं प्रसूनैरवाकिरन्ति, हरिण्यस्तस्य वपुःशोभां विलोक्य प्रमोदन्ते, गिरिनिर्झराणां तुषारैः संपृक्तः शीतलो मन्दः सुगन्धश्च पवन आतपक्लान्तमाचारपूतं राजानं दिलीपं सेवते।

अभिज्ञानशाकुन्तले तु स्नेहविषयोऽयमन्योन्यसंबन्धः प्राचुर्येण समुपलभ्यते। तत्र प्रकृति-मनुष्ययोर्गम्भीरः स्नेहः सोदरस्नेह इव प्रतीयते।

४. हिन्दीकविताया प्रवर्तमानस्याधुनिक छायावादस्यापि पूर्वच्छाया कालिदासस्य प्रकृतिवर्णनेषु यत्र तत्र लक्ष्यते। छायावादस्यायं सर्वाधिको विशेषः—छायावादस्य कवितायां प्रकृतौ मानवीयानां भावानामारोपो विधीयते। तत्र जडचेतनयोरेकीकरणस्य प्रवृत्तिर्लक्ष्यते। प्रकृतौ येतिवृत्तात्मिका भौतिकता, साऽत्र नापेक्ष्यते। प्रत्युत प्रकृते रूपेषु व्यापारेषु वा भावुकताया दर्शनमत्र छायावादे क्रियते। छायावादी कविः प्रकृते रूपेषु व्यापारेषु वाऽऽत्मनश्छायां पश्यति। यान् भावान् स आत्मन्यनुभवति तान् स प्रकृतिरूपेष्वपि प्रतिबिम्बितान् पश्यति। छायावाद-स्योच्चतमां भूमिं प्राप्तः कविः स्वात्मनः प्रकृतेश्च तादात्म्यमनुभवति। यादृशानि सुखदुःखानि सुखदुःखात्मकान् भावान् वा मानवोऽनुभवति, तादृशानेव भावानभिव्यञ्जयन्ती प्रकृतिरपि दृश्यते।

प्रकृतेरपि मानवस्येव प्राणवत्ता, आत्मवत्ता, संवेदनशीलता च विद्यत इति छायावादस्य परमो निष्कर्षः। मानवीयभावानां प्रकृते रूपेष्वीदृश आरोपः कविना कालिदासेनापि कृतः, यद्यपि न तथा बाहुल्येन सर्वांशेन वा यथेदानीं छायावादिभिः कविभिः क्रियते। इदानीन्तनानां छायावादिनामिव कालिदासस्य मते छायावादस्याभिव्यक्तिरेव न सर्वं धनम्। वादस्य पङ्कात्तु स दूर एवाभिवर्तते।

प्रकृते रूपेषु केन प्रकारेण कविना मानवभावानां छाया दर्शितेति विज्ञातुं प्रथमं द्वितीयसर्गे वर्णितो लतापवनादिकर्तृको दिलीपस्य सेवोपचारोऽवलोकनीयः। त्रयोदशे सर्गेऽपि प्रकृतेः प्राणवत्ता, संवेदनशीलता च कविना दर्शिता। समुद्रस्य शरण्यत्वं दृश्यताम्—

पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः।
नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते॥ [रघु० १३।७]

न केवलं वर्तमानं सौन्दर्यं कविर्निरीक्षते, अपि त्वतीतमपि सौन्दर्यं स कल्पनया

प्रत्यक्षीकरोति। प्रलयकाले यदा भूमिः समुद्रजले निमग्ना, यदा च सा पुनरादिभवेन पुंसा उद्धृता, तदोद्वहनक्रियायां संपाद्यमानायामस्य निर्मलमम्भो मुहूर्तं यावद् धराया उपरि विराजमानं तथाऽशोभत यथा रमण्या मुखावगुण्ठनं लज्जारक्षार्थमाद्रियमाणं शोभा दधाति—

रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः।
अस्याच्छमम्भः प्रलयप्रवृद्धं मुहूर्तवक्त्राभरणं बभूव॥ [रघु० १३।८]

अत्र धराया मानवीकरणं स्पष्टमेव।

छायावादस्यापरो विशेषः शृङ्गाराभिव्यक्तिर्विद्यते। साऽपि कविना समुद्रशोभावर्णने रमणीयतया कृता। कालिदासः समुद्रस्यासाधारणां कलत्रवृत्तिं निरीक्षते। नद्यः प्रकृतिप्रगल्भाः, ताः स्वमुखानि स्वयं सागरायार्पयन्ति, सागरोऽपि तरङ्गरूपस्याधरस्य दाने दक्षः स्वयं सिन्धूः पिबति, आत्मानं च पाययति। एवं समुद्रः सिन्धवश्चान्योन्यमधरपानं कुर्वन्ति—

मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरङ्गाधरदानदक्षः।
अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः॥ [रघु० १३।९]

एवमेव नवमे सर्गे—

अभिनयान् परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा।
अमदयत् सहकारलता मनः सकलिका कलिकामजितामपि॥ [रघु० ९।३३]

सहकारलताया चेतनताया आरोपेण मानवसुलभेन तस्या अभिनयाभ्यासेन च तस्या मानवीकरणमवश्यमेव छायावादस्य सीमां स्पृशति।

५. यथा रसा भावा वाऽन्यस्य रसस्य भावस्य वाऽङ्गतां प्राप्नुवन्ति, तथा प्रकृतिविषयिणो रतिभावस्याप्यन्ये भावा अङ्गतां प्राप्ता दृश्यन्ते—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥

यथाऽस्मिन् पद्ये शृंगाररस उपयोगिनो व्यापाराः स्मृतिविषयतामापद्यमानाः करुणस्याभिव्यक्तिं पोषयन्ति, तथैवात्र यानि प्रकृतिरूपाण्यनुरागविषयतया वर्ण्यन्ते तानि दृष्ट्वा तत्संबन्धजाः पुरातना भावाः स्मृतिपथमायान्ति, अतश्च ते प्रकृतिविषयिण्या रतेरङ्गतां प्राप्नुवन्ति। यस्मिन् स्थाने मनुष्यः सुखं दुःखं वाऽनुभवति, तत्स्थानं चिरेण दृष्टं तदानीन्तनानि सर्वाणि वृत्तानि स्मृतिगोचरीकरोति। दर्शनेन य आह्लादः स तु तत्स्थानं प्रति रागं व्यञ्जयति, परं तेन स्थानेन संबद्धा ये स्मर्यमाणा भावाः, ते तत्स्थानं प्रत्यभिव्यक्तस्य रागस्याङ्गतां व्रजन्ति।

## रघुवंशे प्रकृतिवर्णनम्

यस्या स्थल्या रामेण सीताया नूपुरं दृष्टमासीत्, सैकतस्तु स्वकीयेन सौन्दर्येण तस्य प्रीतिपात्रमभवत्, द्वितीयतश्च प्रियवस्तुप्रदानेनापि प्रेमास्पदमासीत्। अतस्ता स्थलीं विलोक्य रामस्य हृदये सचारिरूपेण करुणा सचरति—

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्॥ [रघु० १३.२३]

इदं साहचर्याभिप्रसूतमेव प्रेम, येन प्रकृतिरपि शोकाभिभूताय रामाय पुरा मार्गमदर्शयत्। मार्गदर्शिनीना लताना रूपं विलोक्य रामस्तासा कृपा स्मरन् ताभ्यः स्वकीयं कृतज्ञताभावं समर्पयति। अतोऽयं कृतज्ञताभावो लताविषयकस्नेहस्याङ्गम्—

त्वं रक्षसा भीरु यतोऽपनीता तं मार्गमेताः कृपया लता मे।
अदर्शयन् वक्तुमशक्नुवन्त्यः शाखाभिरावर्जितपल्लवाभिः॥ [रघु० १३।२४]

अस्मिन् प्रसङ्गे स्मर्यमाण वियोगदुःख रामनिष्ठस्य प्रकृतिरागस्याङ्गता प्राप्य प्रवर्तमानं विद्यते। निम्नाङ्किताभ्या पद्याभ्यामपीदं स्पष्टं ज्ञायते—

एतद् गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेखि शृङ्गम्।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम्॥
गन्धश्च धाराहतपल्वलाना कादम्बमर्धोद्गतकेसरं च।
स्निग्धाश्च केकाः शिखिना बभूवुर्यस्मिन्नसह्यानि विना त्वया मे॥ [रघु०१३।२६-२७]

यस्मिन् यस्मिन् प्रकृतिक्षेत्रे रामेणार्पितं तदेव तस्य प्रीतिपात्रम्। अत एव विमानारुढो रामस्तस्य रमणीयं स्वरूपं दृष्ट्वा तं विहातुं नेच्छति विमानवेगात्तु विजहाति—

उपान्तवानीरवनोपगूढान्यालक्ष्यपारिप्लवसारसानि।
दूरावतीर्णा पिबतीव खेदादमूनि पम्पासलिलानि दृष्टिः॥ [रघु० १३।३०]

अत्र खेदः संचारीभावः पम्पासलिलविषयस्यरतिभावस्याङ्गम्।

अपरोऽप्येको विशेषोऽत्रास्माकं दृष्टिमाकर्षति। एकेनैव पद्येन प्रकृति प्रति, प्रबन्धधारया निबध्यमाना व्यक्ति प्रति चाश्रयस्य द्विविधोऽनुरागो व्यज्यते। रामस्य प्रीतिविषय एकतस्तु सीता, यया सभाषमाणः स विमाने उपविष्टो विद्यते; अपरतश्च प्रकृतेस्तत् स्वरूप यच्चिरमचिरं वा कल्पिताधिवासतया तस्य प्रियम्। पञ्चवटी विलोक्य रामस्य हृदयमानन्देन परिपूर्यते। तत्र पञ्चवट्याः सौन्दर्यमेव नानन्दकरम्, अपि तु सौन्दर्यवृद्धिसंपादकः सीतायाः परिश्रमोऽप्यानन्दप्रदः।

एषा त्वया पेशलमध्ययापि घटाम्बुसंवर्धितबालचूता ।
आनन्दयत्युन्मुखकृष्णसारा दृष्टा चिरात् पञ्चवटी मनो मे ॥ [रघु०१३।३४]

अत्र न केवलं पञ्चवट्या वर्तमानं सौन्दर्यं कविना वर्णितम्, अपि तु तस्याः सौन्दर्यस्यानन्दकरत्वे सीतायाः परिश्रमो बीजत्वेनोपन्यस्तः। साहचर्यं तु हेतुरस्त्येव। पेशलमध्यायाः सीताया विषये जलघटोत्थापननिर्मित्तिका या करुणा दुःखानुभूतिर्वा, सेदानीं पञ्चवटीदर्शनजस्यानन्दस्याङ्गम्।

निम्नाङ्कितेन श्लोकेनोपर्युक्त कथनमधिकतरा स्पष्टता प्राप्स्यति। सीतया पुरस्तादुपयाचितं वटमुद्दिश्य रामस्येदं वचनम्—

त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः।
राशिर्मणीनामिव गारुडाना सपद्मरागः फलितो विभाति ॥ [रघु० १३।५३]

वटविषयोऽयमनुरागोऽपि साहचर्यप्रसूतः। 'उपयाचितः' इति शब्देन श्रद्धापि व्यज्यते। अतः सा वटविषयिण्याः प्रीतेरङ्गम्। यस्मिन् प्रेम्णि साहचर्यं हेतुर्भवति, तत्र प्रेमविषयं विलोक्यानन्दोल्लासधारायाः प्रस्रवः स्वाभाविक एव।

६. प्रकृतेरुद्दीपनरूपेण वर्णनस्यायमभिप्रायो यत् प्रकृतेर्यानि रूपाणि व्यापारा वोपादीयन्ते, तान् प्रत्याश्रयस्य कोऽपि हर्षादिको भावो नाभिव्यज्यते। ते आश्रयस्य मनस्यालम्बनमुद्दिश्याभीष्टान् भावानुद्दीपयन्ति। नवमे सर्गे कृतं प्रकृतिवर्णनं प्रकृतिं प्रति कवेः कविनिबद्धस्य कस्यचित् पात्रस्य वा रागं न प्रकटयति, किन्तु प्रायः सर्वाण्यपि प्रकृतिस्वरूपाणि कमप्यन्यमेव भावमुद्दीपयन्ति। अत एवेदृशाना प्रकृतिस्वरूपाणां संश्लिष्टं चित्रणं प्रायो न सजातम्।

तत्र वसन्ते कुसुमसपत्तिः किसलयसंपत्तिर्वा स्मरं दीपयन्त्येव समागता—

कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम्।
किसलयप्रसवोऽपि विलासिना मदयिता दयिताश्रवणार्पितः॥ [रघु० ६।२८]

अत्र सर्वापि प्रकृतिः शृङ्गारे निमग्ना दृश्यते। कुरबका मधुना विरचिता उपवनश्रियः पत्रविशेषका इव भान्ति, भ्रमराश्च तेषा मधूनि लिहन्तः कलं गुञ्जन्ति। सहकारलतायाः नृत्यं च कीदृश मनोहारि। सा हि नवीनानभिनयानभ्यस्यन्तीव प्रतीयते—

अभिनयान् परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा।
अमदयत् सहकारलता मनः सकलिका कलिकामजितामपि॥ [रघु० ६।३३]

उद्दीपनरूपेणापि कृतमिदं वर्णनं प्रकृतौ चेतनताभारोपयति। कामपीडितो दर्शकः

प्रकृति स्वभावनाया रागेण रञ्जितामवलोकते। कुसुमिता वनराजयः सुरभिगन्धयः सन्ति, तासु परभृतः कूजन्ति। उपवनान्तलता नर्तकीवन्नृत्यन्ति। यदा नर्तक्यो नृत्यं कुर्वन्त्यो गायन्त्यपि, तदा तासां दन्ताः स्मितेन विभिन्नवर्णानामुच्चारणप्रसङ्गेन च द्योतन्ते, तासां पाणयोऽपि वाद्यानां लयमनुकुर्वतोऽभिनयतत्परा भवन्ति, एवमेवात्रोपवनान्तलता अपि पवनाहतैः किसलयैर्भान्ति, तासु भ्रमराणां गुञ्जितानि तासां गीतयः, कुसुमान्येव तासां दन्तरुचः। एवं च स्पष्टमेव नर्तकीसाम्यम्।

कोकिलानां कूजितेषु कामाभिलाषपूरणायैव सन्देशः श्रूयते—

त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः।
परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः॥ [रघु० ६।४७]

प्रकृतेरालम्बनतामविकृत्य निबध्यमानेऽस्मिन् निबन्धे यद्यप्युद्दीपनरूपतया प्रकृतिवर्णनस्य विशेषोऽभिधातुं न युज्यते, तथाप्यस्मिन्नेव प्रसङ्गे प्रकृतेरालम्बनतापि विद्यत एवेति हेतुना स्पष्टतो भेदं दर्शयितुं प्रकृतेरुद्दीपनतायामपि किञ्चिदुक्तम्।

**७. उभयरूपेण प्रकृतिवर्णनस्यायमाशयः**—प्रकृतेः रूपमालम्बनमुद्दिश्याश्रयस्य मनसि भावमुद्दीपयति। किञ्च, संश्लिष्टचित्रतया तद्रूपं कवेर्भावानामालम्बनतामप्यापद्यते। आलम्बनताया च संश्लिष्टचित्रमेव गमकम्। दृश्यतां नवमे सर्गे एव वनस्थल्याः प्रमदास्वरूपत्वं संश्लिष्टचित्रात्मकतया कीदृशं मनोहरं हृदयावर्जकं च—

अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव॥ [रघु० ६।४१]

तिलकपुष्पैर्भूषिता वनस्थली प्रमदेव शोभते। यं तिलकं प्रमदा दधाति सोऽञ्जनबिन्दुभिरङ्कितो भवति। अत्रापि तिलकस्य कुसुमपङ्क्तिषु निपतन्तोऽलयोऽञ्जनबिन्दुमनोहराः सन्ति। एवं वनस्थल्याः प्रमदास्वरूपत्वं स्पष्टमेव।

उद्दीपनान्तर्गतमपीदं वर्णनं संश्लिष्टमपि चित्रमुपस्थापयति। अत इदं वर्णनमालम्बनरूपेणापि कथयितुं शक्यते युज्यते च। प्रकृतेर्यद्रूपमत्र चित्रितम्, तदेकतः कामोद्दीपनतां रतेरुद्दीपनतां वा गृह्णाति, अपरतश्च प्रस्तुतरूपतया संश्लिष्टचित्रतया चालम्बनतामप्यादत्ते। अत्र वनस्थली प्रस्तुता, उपमानत्वेनोपन्यस्यमाना प्रमदा चाप्रस्तुता। उपमानस्याप्रस्तुतत्व उपमेयस्य प्रस्तुतत्वं स्वत एव सिध्यति। एवमेवाग्रिमे पद्ये नवमल्लिका प्रस्तुता, तस्या हि कामिनीत्वारोपः; कामिनी चाप्रस्तुता—

अमदयन्मधुगन्धसनाथया किसलयाधरसंगतया मनः ।
कुसुमसंभृतया नवमल्लिका स्मितरुचा तरुचारुविलासिनी ॥ [रघु० ६।४२]

एवमुद्दीपनरूपेणापि कृतमिदं वसन्तवर्णनमेकाशात आलम्बनरूपेणापि कथयितुं शक्यते। उद्दीपनत्वालम्बनत्वयोः संसृष्टिरिवात्र प्रतिभाति ।

न केवलं रतेरेवोद्दीपकत्वेन प्रकृतेर्वर्णनं कविना कालिदासेन कृतम्, किन्तु मृगयारतेरुद्दीपकत्वेनापि । अत्र तस्य पुनर्मौलिकता दृश्यते—

तस्य स्तनप्रणयिभिर्मुहुरेणशावैर्व्याहन्यमानहरिणीगमनं पुरस्तात् ।
आविर्बभूव कुशगर्भमुखं मृगाणां यूथं तदग्रसरगर्वितकृष्णसारम् ॥ [रघु० ६।५५]

इदं हि संश्लिष्टचित्रणमेकतः कवेः सूक्ष्मा निरीक्षणशक्तिमेतादृशमृगयूथदर्शनेन संजायमानमानन्दं च द्योतयति, अपरतश्च दशरथनिष्ठा मृगयारतिमुद्दीपयति । एवमेव—

उत्तस्थुषः सपदि पल्वलपङ्कमध्यान्मुस्ताप्ररोहकवलावयवानुकीर्णम् ।
जग्राह स द्रुतवराहकुलस्य मार्गं सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः ॥ [रघु० ६।५६]

अत्र धनुर्धरं दशरथं दृष्ट्वा प्रद्रवतो वराहकुलस्य तमनुधावतो राज्ञो दशरथस्य चेदं चित्रं संश्लिष्टमेव विद्यते । वराहाः पल्वलपङ्कमध्यात् सपद्युत्थाय पलायन्ते । पलायमानाना तेषा मुखेभ्यो मुस्ताङ्कुराणां कवलावयवा भ्रश्यन्ति निष्पतन्ति वा । एकतस्तैः कवलावयवैस्तेषा पदमार्गोऽनुकीर्णो भवति, अपरतश्च तेषामार्द्राभिः पदपङ्क्तिभिः सुव्यक्तोऽपि भवति ।

इदं पूर्णं चित्रं विद्यते, नात्र कापि न्यूनता । संश्लिष्टमिदं चित्रणं कथं न कवेः निरीक्षणशक्तिं चित्रं प्रति तस्य रागभावं च न प्रमाणयिष्यति । कविनिबद्धस्य पात्रस्य च कृत इदं चित्रं मृगयाभिरतेरुद्दीपनमप्यस्त्येव ।

८. अपरोऽप्यन्तिमो विशेषोऽत्र ज्ञापयितुं युज्यते । कदाचित् कविना प्रकृतेः प्रस्तुतव्यापारस्य रूपस्य वा गोचरप्रतिरूपप्रदर्शनायैवाऽप्रस्तुतं रूपं व्यापारो वा गृह्यते । कालिदासेन क्वचिदियमपि शैली गृहीता । यथा—

नयगुणोपचितामिव भूपतेः सदुपकारफला श्रियमर्थिनः ।
अभिययुः सरसो मधुसंभृता कमलिनीमलिनीरपतत्रिणः ॥ [रघु० ६।२७]

मधुसंभृतां नलिनीमलयो नीरपतत्रिणश्च कथमिवोपगच्छन्ति ? यथा नयगुणोपचिता सदुपकारफलां श्रियमर्थिन उपगच्छन्ति । अत्र श्रियः कमलिन्या उपमानत्वेन प्रस्तावनाप्युपकारिणो

नयगुणवतश्च श्रीमतो भूपतेः सौन्दर्यमभिव्यनक्ति। एतादृश्या योजनायामुपदेशदानं कवेरभीप्सितं भवति।

एवमुपर्युक्तेनाध्ययनेन विज्ञायते यत् कविकुलशिरोमणिना कालिदासेन प्रकृतेर्वर्णन-मधिकांशत आलम्बनरूपेणैव कृतम्। तत्रापि च तस्य प्रमुखा विशेषा उपरिष्टाद् दर्शिताः। प्रकृतेः साधारणमसाधारणं वा रूपं स्यात्, उभयं प्रत्यपि तस्यानुरागः समान एव। आलोचक-प्रवरेण श्रीरामचन्द्रशुक्लेन 'कविता और सृष्टिप्रसार' नाम्नि निबन्धे सुष्ठु साधित यत् सत्कविः प्रकृतेः सर्वाणि रूपाणि विलोक्य रमते। तस्य प्रकृतिविषये रागे स्वसुखोपभोगलालसा कारणं नास्ति, अपि तु साहचर्येण प्रतिष्ठिता तस्य वासनैव तस्यानुरागे प्रधानो हेतुः। ये जना विलासस्य शरीरसुखस्य वा सामग्रीमेव प्रकृतावन्विष्यन्ति, तेषु रागात्मकसत्त्वस्य न्यूनता विद्यते। यस्य रागात्मकं सत्त्वं यावद् व्यापकं विद्यते स तावदेव व्यक्तसत्तामात्र प्रत्येकताया अनुभूतिं भावयति। अयं तस्य हृदयप्रसारो भावप्रसारो वाऽभिधीयते। बुद्धेः क्रियाऽस्माकं ज्ञानं यामद्वैतबुद्धिं प्राप्नोति, तामेव भूमिमस्माकं हृदयमपि सत्त्वरसस्य प्रभावेण समधिगच्छति। अन्ते द्वयोरपि पक्षयोर्वृत्तीनां (बोधवृत्तीनां रागवृत्तीनां च) समन्वयः सम्पद्यते। एतादृशं समन्वयं विना मनुष्यत्वस्य साधना न पूर्णतां प्रतिपद्यते।

आदिकवि वाल्मीकिं विहाय कविकुलशिरोमणिः कालिदासः प्रकृतेः श्रेष्ठतमः कविः। तस्य प्रकृतिवर्णनानि न केवलं वस्तुविन्यासप्रधानानि, किन्त्वलङ्कृतान्यपि विद्यन्ते। तस्या आह्लादकस्वरूपदर्शने तस्य सूक्ष्मा दृष्टिर्नितरामभ्यस्ता। स सत्यमेव प्रकृतिदेव्याः प्रवीणः पुरोहितः, यो हि तस्या आत्मनि स्वात्मानं स्वात्मनि च तस्या रूपं निरीक्षते। कालिदासस्य कविता प्रकृतेः समग्ररूपस्याराधिनी। स हि विश्वप्रकृतेरुपासकः॥

———

# कालिदासस्य प्रकृतिनिरीक्षणपरिपाटी

श्रीशिवदत्तशास्त्री, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

अखिलविश्वकविमण्डलशिरोमणीयमानस्तत्रभवान् कालिदासः कस्य तावत् शेमुषीजुषोऽपरिचितः स्यात् । अयं महाकविरनेकानि महाकाव्यानि समद्भुतानि विरचय्य स्वगुणगणगौरववशात् "विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता" इत्युक्तिं चरितार्थयन् कविसमाजे कविकुलगुरुरिति पदं लेभे । अनेन यानि काव्यानि विरचितानि तत्र किं किं नोपलभ्यते ?

समस्तेऽपि ब्रह्माण्डेऽनन्तानन्तरूपेषु परिव्याप्ता प्रकृतिर्दृश्यते । अक्षुण्णं प्रकृतेः साम्राज्यम् । कवयोऽपि तस्या वर्णनेन स्वान्तःसुखमनुभवन्ति, अन्यानपि सहस्रशो मानवाननुरञ्जयन्ति च । इदमेव तावत्कवेः कवित्वम्, यद्धि प्राकृताना पदार्थाना सूक्ष्मतयाऽन्वेषणं विधाय तेषां सजीवतया वर्णनं कुर्यात्; मानवाना मानसे च तेषा कीदृक् प्रभावो जायत इत्यपि दर्शयेत् । एवंविधवर्णनेऽसंशयं कालिदासः सर्वानतिशेते । कविरयं सर्वत्र जडचेतनसंसारे सत्यं शिवं सुन्दरं प्रतिबिम्बितं पश्यति ।

नगाधिराजं हिमालयमयं कविस्तादृशं वर्णितवान् येन किमप्यभूतपूर्वं परमरमणीयं लोकोत्तराह्लादकरं तस्य चित्रं नृत्यतीवाग्रे नयनयोः । स हिमालय एतत्कविकल्पनासु गोरूपधारिण्याः पृथिव्या दोहनाय वत्सो जातः ।

पर्वते गैरिकादिधातवः सन्ति । तेभ्यो रक्ता कान्तिर्निःसरति । सा कान्तिः श्वेतमेघेभ्यः संसक्ता सती तानपि रक्ताभान् विदधाति । तेन च दिवसेऽपि सन्ध्यायाः प्रतीतिर्जायते । सन्ध्याया भ्रमेण चाप्सरसः सायंकालोचिते वेशविन्यासके शृङ्गारे दत्तचित्ता भवन्ति । उपर्युक्तदृश्यास्याप्सरसा चेतसि कीदृशः प्रभावः पतित इति विषयोऽयं कियता सौष्ठवेन प्रतिपादितः—

यश्चाप्सरोविभ्रममण्डनाना सम्पादयित्री शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥ [कुमार० १।४]

हिमालयस्य शिखराण्युत्तुङ्गानि सन्ति । तानि कथं तापसानामुपयोग आगच्छन्तीत्यत्र कविः प्रस्तौति—

आमेखलं संचरतां घनानां छायामधःसानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते श्रृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ [कुमार० १।५]

नगरेषु येषामनेकविमानकानि भवनानि सन्ति तेऽपि शिशिरसमये प्राभातिकं सूर्यस्यातपमासेवितुमूर्ध्वभागे गच्छन्ति । यतो ह्यधस्तात् प्रदेश आवरणवशादातपो नैवोपलभ्यते । अनुभूयते चान्वहं काश्यामेतत् । परन्तु हिमालये ये सिद्धाः सन्ति ते शिशिरपीडिताः किमिति शिखरानालम्बन्ते, तत्र तु न किमपि सूर्यातपावरोधकं दृश्यते ? इति प्रश्ने समुत्थिते कविः समादधाति यत्तत्र मेघा अवरोधकाः । ते च केवलं पर्वतस्य कटिप्रदेशपर्यन्तं गच्छन्ति । अत्यूर्ध्वगमने न तेषां शक्तिः । अत ऊर्ध्वश्रृङ्गेषु भूयानातपः प्रसरति । तमेव चासेवितुं सिद्धास्तत्र गच्छन्तीति । अहो कवेः सूक्ष्मा दृष्टिरस्मिन् वर्णने ।

पर्वतप्रदेशे सुगन्धिः पवनः प्रसरति । स सौरभः पवने कुतः समायातीति विषये कविर्नितान्तं स्वाभाविकं वर्णनं प्रस्तौति—

कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥ [कुमार० १।९]

मदोन्मत्तानां करिणां गण्डस्थलस्य सुप्रफुल्लैः सरलद्रुमैः संघर्षणे सजाते तेषां वृक्षाणां त्वचमुद्भिद्य रसः प्रच्यवते । स रसः परमसुगन्धयुक्तः । तत्संसर्गात् पवनः सुगन्धिः प्रवहतीति ।

प्राकृतः समीरणः केवलं स्पर्शवान्, परं वनेषु सचरणशीलः पवनः शीतलमन्दसुगन्धमयो भवति । स कथं शीतलः सुगन्धश्चेत्येव वर्णनान्तरं रघुवंशे—

पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥ [रघु०२।१३]

सम्राजं दिलीपं वने परिभ्रमन्तं शीतलः सुगन्धश्च पवनः सेवितवान् । स निर्झराणां बिन्दुकणैः संसक्तः, अत एव शीतलः । तेन मन्दमन्दं प्रवहता सुरभितपुष्पा वृक्षाः प्रकम्पिताः । तत एव च सौरभो गृहीतः, अतः स सुगन्धः । तत् पश्यतां सहृदयैः कियता कौशलेन शीतलसुगन्धिता वायावुत्पादिता प्रकृतिचित्राण्युपस्थापयता कविना । इदमेव च वर्णनमुक्तिवैचित्र्येणान्यत्राप्युपलभ्यते—

भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः । [कुमार० १।१५]

कुमारसंभवस्य तृतीये सर्गे वसन्तवर्णनेऽपि सुतरां मनोमोहकं प्राकृतिकं चित्रं प्रस्तुतं महाकविना—

मृगाः प्रियालद्रुममञ्जरीणा रजःकणैर्विघ्नितदृष्टिपाताः ।

मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ [कुमार० ३।३१]

एवमेव—

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रिया स्वामनुवर्तमानः ।

शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ [कुमार० ३।३६]

अथ च—

ददौ रसात्पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।

अर्धोपभुक्तेन बिसेन जाया संभावयामास रथाङ्गनामा ॥ [कुमार० ३।३७]

उपर्युक्तेषु पद्येषु कीदृशमद्भुतं प्राकृतिकं चित्रणं विद्यते । पञ्चमे सर्गे पार्वतीतपस्या-वर्णनप्रसङ्गेऽयं कविरद्भुतं चित्रं प्रस्तौति—

स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।

वलीषु तस्याः स्खलिताः प्रपदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥ [कुमार०५।२४]

वर्षाकाले जलबिन्दवः पूर्वं भगवत्याः पक्ष्मसु क्षणं स्थिताः, तदन्वधरप्रान्ते समायाताः, अनन्तरं पयोधरोत्सेधमवापुः, अग्रे निपतिताः सन्तश्चूर्णिताः । एतेन भगवत्या आसनबन्धस्यापि प्रक्रिया सूच्यते ।

रघुवंशस्य त्रयोदशे सर्गे समुद्रवर्णनप्रसङ्गे मनोहराणां प्राकृतिकदृश्यानां दर्शनं जायते—

तां तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना ।

विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा ॥ [रघु० १३।५]

यथा भगवतो विष्णोरीदृग् रूपमिति प्रत्यक्षीकर्तुं न शक्यते, तस्यानन्तरूपत्वात् । तथास्यापि समुद्रस्यानन्तत्वादीदृक्तया रूपं न निश्चेतुं पार्यते । एवं च विष्णो रूपमियत्परि-माणमित्यपि न शक्यतेऽनुमातुम्, तस्यापरिमेयत्वात् । एवमेवास्याप्यपरिमेयत्वादियत्तया रूपं न ग्रहीतुं शक्यते । एतेनानन्तोऽगाधश्चायमित्यर्थो लभ्यते ।

समुद्रजलाभ्यन्तरे स्थितो मत्स्यविशेषः 'तिमि' इत्याख्यः, आङ्गलभाषाया 'ह्वेल फिश' इति नाम्ना प्रसिद्धो जन्तुसहितं जलं मुखमुद्घाट्य आपिबति, अनन्तरं च मुखमुन्मील्य शिरस्स्थितेन छिद्रेण तं जलमूर्ध्वं प्रवाहयति । दृश्यतामस्य वर्णनम्—

ससत्त्वमादाय नदीमुखाम्भः संमीलयन्तो विवृताननत्वात् ।

अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान् ॥ [रघु० १३।१०]

अपरं च—एकत्र समुद्रजलोपरि पुञ्जीभूतः फेनो दृश्यते, तस्योपरि सहसा मातङ्गाकारा मकराः समुत्पतन्ति। तेन च फेनसमूहो द्विधा विभज्यते, क्षणाय च फेनो मकराणां कपोलप्रान्ते संलग्नो भवति। तेनैवं प्रतीयते यन्मकराणां कर्णेषु चामरा लम्बन्ते। सीतामुद्दिश्य वदति भगवान् रामचन्द्रः—

मातङ्गनक्रैः सहसोत्पतद्भिर्भिन्नान् द्विधा पश्य समुद्रफेनान्।
कपोलसंसर्पितया य एषा व्रजन्ति कर्णक्षणचामरत्वम्॥ [रघु० १३।११]

अस्मिन्नेव प्रसङ्गेऽपरमप्येकं प्राकृतिकं दृश्य प्रस्तुतं कविना समुद्रवर्णनावसरे—

कुरुष्व तावत्करभोरु पश्चान्मार्गे मृगप्रेक्षिणि दृष्टिपातम्।
एषा विदूरीभवतः समुद्रात् सकानना निष्पततीव भूमिः॥ [रघु० १३।१८]

रघुवंशस्य द्वितीये सर्गेऽपि प्राकृतिकवर्णनं तावदुपलभ्यते। राजा दिलीपो नन्दिनी-सुश्रूषानिरतः काननानि पश्यन् गच्छति। यथा—

सपल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि।
ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन्॥ [रघु० २।१७]

अत्र पद्ये वनस्य विशेषणानि चेतश्चमत्कारमातन्वन्ति सुधियाम्। प्रसिद्धे खण्डकाव्ये मेघदूतेऽपि प्राकृतवर्णनान्युपलभ्यन्ते। नर्मदावर्णनप्रसङ्गे यथा—

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः।
अन्तःसारं घन! तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय॥ [पूर्वमेघे, २०]

नाटकेष्वप्यनेन कविना प्राकृतिकचित्राणि समुपस्थापितानि सन्ति। यथाऽभिज्ञान-शाकुन्तलेऽग्रे धावन्तं मृगमवलोक्य दुष्यन्तः कथयति—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥ [अभि० १।७]

अतीव स्वाभाविकं वर्णनमेतत्।

कविरयमुपमाप्रदाने सर्वानतिशेते। अत एव "उपमा कालिदासस्य" इति प्रसृता लोकोक्तिः। उपमायामपि कमलकुमुदचन्द्रादीनामुपमां कवयो ददत्येव। परं तत्रापि प्रकृतेरन्वेषणे सूक्ष्मेक्षिका वर्ततेऽस्य महाकवेः। यथा—

त वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय पदमुद्धृतमुद्वहन्ती।

मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ॥ [कुमार० ५।८५]

पार्वती वेगेनान्यत्र गन्तुमुद्यताऽऽसीत्। ता बटुरूपधारी शङ्करोऽवारुरोध। तत्रोपमा दत्ता—यथा वेगवती कापि नदी मध्येमार्गं कस्यापि पर्वतस्यावरोधेन क्षणं नाग्रे गच्छति नाऽपि विनिवर्तते, तथैवात्रापि स्थितिर्जातेति।

रघुवंशे स वदति—

स पाटलाया गवि तस्थिवासं धनुर्धरः केसरिणं ददर्श।

अधित्यकायामिव धातुमय्या लोध्रद्रुमं सानुमतः प्रफुल्लम्॥ [रघु० २।२६]

रक्ताभाया गवि आक्रान्ता सिंहः स्थितः, स तादृशः प्रतीयते यथा रक्तधातुमय्यां कस्याश्चिदधित्यकाया लोध्रनामको वृक्षो भासते। षष्ठे सर्गे इन्दुमतीस्वयंवरवर्णनप्रसङ्गेऽपि स इन्दुमती दीपशिखाया उपमा ददाति। अतिमनोहरेयमुपमाऽतिशयेन हृदयहारिणी जाता सहृदयानाम्, येन कालिदासस्य नामैव दीपशिखाकालिदास इति जातम्। दृश्यता तावत्—

संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।

नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः॥ [रघु०६।६७]

अन्धकारे दीपशिखा भवनादेकादपरं भवनं यदा गच्छति तदा तया त्यक्तं भवनमन्धकाराऽऽवृतं जायते, सा यस्मिन् प्रविशति तच्च प्रकाशते; तथैव यं राजानं त्यक्त्वेन्दुमती अग्रे गच्छति स राजा मुखे मालिन्यं धारयति, यस्य संमुखे चेयं गच्छति स तु मामेवेयं वरिष्यतीति बुद्ध्या प्रफुल्लनेत्रो जायते।

एवं दिङ्मात्रमत्रोदाहृतम्। अयं कविः प्राकृतिकाना दृश्यानां सुसूक्ष्मान्वेषणे तेषां चाऽऽह्लादकतया सौन्दर्येण कल्याणसंपादकत्वेन च वर्णने नितरा सिद्धहस्त इत्यशेषैर्विद्वद्भिः सहृदयैः स्वीक्रियते॥

---

# कालिदासकाव्ये नारी

श्रीप्रभुदत्तशास्त्री, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

को हि सहृदयो न वेत्ति कविकुलमूर्द्धन्यं श्रीमन्तं कालिदासम् । यस्य विषये—"तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी" इति सूक्तिः सार्थिका जायते । कवयस्तु बहवोऽभूवन् परन्तु काव्यस्य महानुभावस्य विशिष्टा प्रतिभा, येन गतेष्वपि वत्सरसहस्रेषु स्मर्यतेऽयं सहृदयैः सततम् । मम्मटेन कथितम्—"कान्तासंमिततयोपदेशयुजे" [ काव्य० १।२ ] इति । काव्यं हि नाम नीतेरप्युपदेशं मधुरया वाण्या विदधाति । तत्रासौ कविः परं प्रावीण्यं वहति । इदमेव कवेः कविताया वा वैशिष्ट्यम् ।

का भारतीया संस्कृतिरिति यदि वयं जिज्ञासमानास्तर्हि पश्येम तस्य काव्यकदम्बकम् । तत्र हि वयं सर्वासां भारतीयानां संस्कृतीनां स्वरूपं विद्मः । कालिदासकाव्येषु 'रघुवंशम्' श्रेष्ठतमं नाम । लोकोपयोगिनीभिर्वार्ताभिर्महाकाव्यमिदं परिपूर्णं विद्यते । देवेषु ब्राह्मणेषु च भक्तिः, गुरुवाक्येषु परमा श्रद्धा, मातृरूपिण्याः पयस्विन्याः परिचर्येति च सर्वमेकपदे एकच्छत्रस्य दिलीपस्य जीवने पश्यन् कोऽसौ यो न प्रसीदति । प्राणानविगण्य्य रघोरतिथि-सत्क्रिया परिचर्या च कं न रञ्जयति । लोकप्रवादमनुसरतः प्रजा प्रजामिव रञ्जयतः श्रीराघवस्य स्वकीयप्राणेभ्योऽपि प्रेयस्या अग्निशिखाया इव संशुद्धायाः पत्न्याः सीतायाः कर्तव्यबुद्ध्या त्यागः कस्याऽक्षिभ्यो बलादश्रूणि न प्रवाहयति ।

कालिदासेन चित्रिता नारी कीदृशीति दर्शनेन भारतीयेषु काव्येषु नारी उपेक्षितेत्या-क्षेपवतां जनानामाक्षेपोऽपास्यते । रघुवंशमारभमाणः—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ [रघु० १।१]

इति श्लोकं ग्रथ्नाति महाकविः । नात्र केवलं शिवं प्रस्तौति, पार्वतीमपि प्रणमति । तत्रापि न केवलं प्रेयसीति रूपेण, किन्तु 'जगतः पितरौ' इति कथयन् जननीमिव स्मरन् वन्दते जगन्मातरमखिलनारीलोकललामभूताम् ।

दिलीपो वशिष्ठाश्रमं प्रपेदे। रथादवतरन् पूर्वमादरेण स्वकीयां पत्नीमवतारयति। नात्र कश्चिदुपेक्षालेशोऽपि। पश्यन्तु—

अथ यन्तारमादिश्य धुर्यान् विश्रामयेति सः।
तामवारोहयत् पत्नीं रथादवततार च॥ [रघु० १।५४]

"संतानं कामये देव, तद्रहितं सर्वमिदमेकच्छत्रं राज्यं न सुखाय संपद्यते। प्रोज्ज्वल-रत्नसमुदायोऽपि न मे मनसोऽन्धकारं क्षपयितुमीष्टे। भोगा रोगा इव कृन्तन्ति। निष्कण्टकेऽपि राज्ये हृदयं कण्टकितमिव प्रतिभाति" इति रुदन्तमिव दिलीपं पुत्रप्राप्त्यै नन्दिनी-सेवारूपमुपायमभिदधानो वशिष्ठः केवलम्—त्वमेव सेवस्व देवतामिवेमां नन्दिनीमिति कथयित्वैव न विरराम, किन्तु वधूरपि सेवतामित्यपि न्ययुङ्क्त। दिलीपं प्रति—

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः॥ [रघु० १।८९],

सुदक्षिणां प्रति च—

वधूर्भक्तिमती चैनामर्चितामा तपोवनात्।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि॥ [रघु० १।९०]

इति हि मुनिकथनम्।

नन्दिनीसेवायामपि न सुदक्षिणा दिलीपाद्दूना चित्रिता कविना, किन्तु समानरूपेण तयोः सेवोपगीता—

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच॥ [रघु० २।१]

अत्र जायाप्रतिग्राहितगन्धमाल्यामिति पदम्,

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत्॥ [रघु० २।२]

अयं श्लोकश्च सुदक्षिणा स्वपतिसदृशमेव तामसेवतेति प्रमाणयति, तस्मिन् समये नारी स्वपतिरिवाधिकारिण्यासीत् समेऽपि कार्ये जाते, न तूपेक्षितेति च संसूचयति।

दिलीपो नन्दिनीमरण्यचारणं विदधानः सेवते। इयं च राज्ञी सुदक्षिणा प्रातरारभ्य सायंकालपर्यन्तं चिन्तयन्ती तिष्ठतीति चित्रणं कवेः कौशलं कथयति। इमे पद्ये अत्र प्रमाणरूपे—

वशिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपद्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥ [रघु० २।१९]
प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता ।
प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥ [रघु० २।२१]

कुमारसंभवनामिकापि महनीया कृतिरस्य महाकवेः । तत्राप्यसौ पदे पदे नारीचित्रणे यथाविधमायाति जनतायाः संमुखं तत्सर्वं स्तुतियोग्यम् । भारतीयकाव्येषु नारी महद् गौरवमादधातीति वयं पार्वतीवर्णने प्राप्नुमः ।

सेयं बाल्ये वयसि स्थिता पार्वती, आसीन्महर्षीणां दर्शनविषया । तथा च ते तत्सकाशात् शिक्षामगृह्णन्निति सर्वमिदं वर्णनं भारतीयनार्या गौरवमाकलयति—

कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन् न धर्मवृद्धेषु वयः समीक्ष्यते ॥ [कुमार० ५।१६]

यदि कोऽपि शङ्केत, इमे ऋषयो नेयं मानुषी किन्तु देवीति मन्यमाना दर्शनशीला आसन्निति; नैतत्तावद् युक्तियुक्तम् । उक्ते श्लोके नैवंभूतं किञ्चिदपि विशेषणम्, येन तस्या देवत्वं सिद्ध्येत् । इदं सर्वं नार्या गौरवमेव ।

अपरिचितं पुरुषं कथं ब्रूयादिति कुमारसंभवे पार्वतीतपस्यावर्णने द्रष्टव्यं वर्तते । पार्वती तपस्यति । तां परीक्षितुं छद्मब्रह्मचारिवेषेण शिव आयाति, आगत्य च तपसः कारणं पृच्छति । तत्र हि पार्वती न किञ्चिद् ब्रवीति । किन्तु—

इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ॥ [कुमार० ५।५१]

इति श्लोकग्रथितेन कटाक्षेण तत्सर्वं कथयितुं स्वकीयां सखीं प्रेरयति । यदासौ ब्रह्मचारी शिवं बहु निन्दति, तपसश्च तां विरन्तुं ब्रवीति, अन्याश्च बहुश उद्वेजिका वार्ता विदधाति; तदा तत्सर्वं शृण्वन्त्यपि क्रोधाविष्टापि सा स्वकीयां भारतीयपरम्परां न जहाति । सर्वथा च तां रक्षति । सखीमुखेनैव तया ब्रह्मचारी उक्तः—

निवार्यतामालि किमप्ययं बटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥ [कुमार० ५।८३]

उभयोरपि स्थानयोः साऽपरिचितं न किञ्चिद् ब्रूते । इयमेव हि भारतीया परम्परा ।

नारीसमाजे कीदृशी शिक्षाऽऽसीत्तदेत्यपि कवेः काव्ये बहु प्राप्नुमः। मेघदूते यक्षः स्वकीया पत्नी वर्णयन् मेघं प्रति ब्रूते—

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती।
पृच्छन्ती वा मधुरवचना सारिका पञ्जरस्था
कच्चिद् भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति॥

[उत्तरमेघे, २२]

अस्मिन् श्लोके यक्षपत्नी स्वपतिचित्रं लिखन्ती वर्णिता। अन्यत्र च—

मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।
भूयो भूयः स्वयमपि कृता मूर्च्छना विस्मरन्ती॥

[उत्तरमेघे, २३]

अनेन पद्येन नारीसमाजे सङ्गीतविद्या त्वासीदेव, किन्तु काव्येष्वपि ता एवंभूता विदुष्य आसन् यत्ताः कविताऽऽकलनेऽपि कुशलतामाकलयन्निति सूचयति महाकविः।

यत्र स्वपत्नीमिन्दुमतीमुद्दिश्य विलपत्यजस्तत्र पश्यन्तु नारीरूपम्—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वा वद किं न मे हृतम्॥ [रघु० ८।६७]

अत्र नारी कियत्सु रूपेषु चित्रिता वर्तते[१] नारी केवलं स्वपत्युर्वराकी दासी एव न किन्तु गृहिणी, अर्थाद् गृहस्वामिन्यपि वर्तते। सा केवलमाज्ञापालिकैव न, किन्तु सचिवोऽप्यस्ति। विविधासु जटिलासु समस्यासु सा मन्त्रित्वेन न्याय्या वार्तामुपदेष्टुं प्रभवति। अशिक्षितेति न, किन्तु—"प्रियशिष्या ललिते कलाविधौ" इति विद्यानुरागिण्यपि वर्तते।

प्रजाहितव्यसनपरेण रामचन्द्रेण स्वकीया सगर्भा पत्नी परित्यक्ता। को न खलु निरपराधं दण्डयन्तं विगर्हति। रामचन्द्रेण यदकृत्यं कृतं तत्स्मरन्ती का वा नारी तस्मै न क्रुध्येत्, परन्तु सर्वं जानन्त्यपि सीता स्वपतिं प्रति न किञ्चिद् दुःशब्दं ब्रूते। सा परित्यक्ता यं सन्देशं रामचन्द्रं प्रेषितवती तत्सर्वं श्रुत्वा को न तया सह सहानुभूतिं प्रकटयेत्। अतीव दुःखिनी सीता ब्रवीति—

वाच्यस्त्वया मद्वचनात् स राजा वह्नौ विशुद्धामपि यत्समक्षम्।
मा लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य॥ [रघु० १४।६१]

अत्र स्वाभिमानशालिन्या सीतया कियद्भिरक्षरैर्गभीरतरोऽभिप्राय आविष्कृत:—सर्वेषां समक्षेऽपि वह्निनाऽहं निष्कलङ्किनी प्रतिपादिता। भवान् यादृशे कुले उत्पन्नस्तत्र किमेतद् गर्ह्यं कृत्यं विधीयते।

शीघ्रमेव साऽतोऽपि विरमति। अनन्तरं च ब्रवीति—

कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः॥ [रघु० १४।६२]

इद सर्व कष्ट मदीयपरजन्मपापसमुद्भूतम्। नात्र भवताऽपराद्धं किञ्चित्। कीदृशी पतिपरायणता वर्तते। पत्या परित्यागे कृतेऽपि स्वकीयमेव दूषणं मत्वा तयाऽऽदर्शमार्गो दर्शितो नारीसमाजं प्रति। अपि च—

साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः॥ [रघु• १४।६६]

जन्मान्तरेऽपि त्वमेव मे भर्ता भव, वियोगश्च मा भूदिति हेतोरहं कठिन सूर्यव्रतमाचरिष्ये इति सर्वा अपि सीतोक्तयः परमविस्मयकारिण्यः।

एवं शाकुन्तलमप्यस्य प्रसिद्धो नाटकग्रन्थः। यत्र कण्वाश्रमवर्णनं शकुन्तलायास्तस्याः शीलस्य च वर्णनं सपद्याकर्षति नश्चेतः।

संक्षेपेण वयमेतन्निश्चिनुमो यदस्य काव्ये नार्या रूपमतीवाऽऽदर्शयुक्त वर्तते। न केवलं कामिनीत्वेन नारी वर्णिता कविना, किन्त्वस्य कवेर्नारी सर्वा भारतीयसंस्कृतिमनुसरन्ती वर्तते॥

---

# श्रुतिप्रभभाष्यविमर्शः

श्रीसभापतिशर्मोपाध्यायः, एम एल.सी., बिरलासं०म०वि०प्रधानाचार्य., वाराणसी ।

उत्तरप्रदेशमुख्यमन्त्रिविद्वद्वरश्रीसम्पूर्णानन्दमहोदयकृताथर्ववेदान्तर्गतव्रात्यकाण्डीयश्रुतिप्रभ-भाष्यमुपजीव्य किञ्चिद्विमर्शपथोऽनुस्त्रियते ।

सायणोव्वटादिकतिचित्संख्यावतोऽपहाय वैदिकग्रन्थाना व्याचक्षाया प्रायो गीर्वाणवाणी-विदामौदासीन्यमेव दृग्विषयीक्रियते । यद्यपि प्रतिवेदमार्षप्रातिशाख्यं महर्षिप्रणीतमुपलभ्यते, तथापि कैश्चिदृषिभिरपि पतञ्जलिसमैर्वेदभाष्यं न निष्पादितम् । यद्यप्यधुनातनैः स्वामिदयानन्द-सत्यव्रतसामश्रम्यादिभिर्भूमिकारूपेण किञ्चिद्विमृष्टं तथापि न तद्वैदिकालौकिकपदघटितवाक्यार्था-वगतये साहाय्यं विधातुं कल्पते । आधुनिकविपश्चित्तल्लजाना वैदिकग्रन्थानामव्याख्यानपङ्ककलङ्कः किंप्रयोज्य इति बहुधा विमर्शनेऽपि न मनीषावर्त्मावरोहति ।

यद्यप्यथर्ववेदे १-४, ६-८, ११, १७-२० काण्डाना सायणाचार्यभाष्यं दृक्पथमवतरति, तथापि मध्ये ५, ६-१०, १२-१६ काण्डानाम्, अष्टमकाण्डस्य ४-५ अनुवाकयोरन्तिमस्य विंशकाण्डस्य ५ ६ अनुवाकानां च सायणभाष्यं नोपलभ्यते । अत्र किञ्चिद् ब्रूमः—

उत्तरत्र भाष्यनिर्माणं पूर्वत्रापि भाष्यनिर्मितिमनुमापयति, प्रायः पूर्वभाष्यं निर्मायैवोत्तरत्र भाष्यनिर्मितेर्व्याख्यातृशैलीसिद्धत्वात् । किञ्च, पुरा लेखपत्रादेः प्राचुर्याभावेन कियानंशः केनापि लिखितः कियानपरेणेति । एकत्र संगृह्य मुद्रणप्रसङ्गे प्रतिबन्धकवशादुक्ताशाना भाष्यानुपलब्ध्या तत्तदंशो न मुद्रित इति हेतोः कारणान्तराद्वा पूर्वोक्तकाण्डेषु भाष्यानुपलब्ध्या दूयमानस्वान्तस्य वैदिकसाहित्यरसिकस्य मुख्यमन्त्रिणो व्रात्यकाण्डे गम्भीरार्थकतामाध्यात्मिकरहस्यपरिपूर्णता लोके धर्मशास्त्रादिप्रसिद्धोपनयनादिसंस्कारहीनद्विजातिपरकस्य व्रात्यशब्दस्य व्रात्यकाण्डे ईश्वरार्थकता ब्रह्मज्ञानिपरकता योगिपरकता चावेत्य व्रात्यकाण्डस्य भाष्यनिर्माणेऽभिरुचिः संजाता ।

एतद्भाष्यनिर्माणं वैदिकसाहित्येऽनिर्वचनीयकारणाद् व्याचिख्यासाशून्याना प्रेक्षावत्प्रका-ण्डानामपि प्रेक्षामाश्चर्योदन्वति निमज्जयत्, महाराजस्य बुक्कणक्ष्मापतेर्मन्त्रिणं मीमांसाशास्त्र-सिद्धान्तप्रतिपादिकाया महत्या अधिकरणमालाया रचयितारं विद्वद्वरेण्यं माधवं स्मारयत्, भूयो भूयो वैदिकसाहित्यपर्यालोचनया समुद्भूता श्रीसम्पूर्णानन्दमहोदयानामप्रतिमप्रतिभा

त्रिदशभारत्या निरतिशयं प्रेमाणं च विद्योतयद् मुख्यमन्त्रिणो धन्यवादवितरणाय विपश्चिद्-पश्चिमसङ्गं प्रयोजयति ।

मुख्यमन्त्रिणा आत्यशब्दनिष्ठवृत्तिविषये यादृशी विवेचना विहिता, तादृश्यन्यत्र क्वापि न दृश्यते । सा च प्राक्कथनेऽष्टमपृष्ठे द्रष्टव्या । एतद्भाष्यदर्शनेनेदं प्रतीयते यदनेन विदुषोपनिषद्ग्रन्था ब्राह्मणभागा वेदचतुष्टयसंहिताश्चानुसन्धानपूर्वकमधीताः । यतस्तत्र तत्रैतरेयादि-ब्राह्मणग्रन्थानामुपनिषदां वेदानां च वाक्यान्युद्धृत्य स्वाभिहितार्थस्य प्रामाण्योपपत्तये समुपन्यस्तानि । एतद्भाष्यस्य पाण्डित्यपूर्णतासत्यापनायै कियानंशः पुरस्क्रियते—

"स उदतिष्ठत्, स प्राचीं दिशमनुव्यचलत्" [व्रा० का० १।२।१]

"प्रसङ्गापतिता प्राच्या दिशो विशेषता निर्देष्टव्या । अस्या दिशायाः स्वामी देवराज इन्द्रः प्रोक्तः, तस्मादस्या वैशेष्यम् । पुनश्च सूर्योऽस्यामेव दिश्युदेति । "सूर्य आत्मा जगतस्तस्थुषश्च" इति श्रुतम् । लोकेऽप्येवमनुभूयते । तत्संबन्धेनापि प्राच्या वैशेष्यम् । तस्या लोकोपकारकर्तृत्वं विश्वात्मप्रतीकत्वं च संसूच्यते, सूर्योदयकालस्य वसन्तसमत्वं चोदाह्रियते । वसन्तर्तौ यानि कर्माण्यनुष्ठेयानि तेभ्यो यत् पुण्यफलं संपद्यते तत्सूर्योदयकाले कृतायज्ञादप्युपलभ्यते । "आदित्यो वाव सर्व ऋतवः । स यदैवोदेत्यथ वसन्तः" [ शतपथ० १।२।३।७ ] । पुरुषमेधप्रसङ्गे वसन्तो घृतरूपेण कल्पितः— "वसन्तोऽस्यासीदाज्यम्" [ ऋग्० १०।९०।६ ] इति । लोकधारकशक्तीनां समष्टिर्या विष्णुदेवता तस्याः प्रतीकं वसन्तः । पूर्वायां [? वस्यां] भानावुदिते वसन्तसमः पुण्यकालः प्रसरति, वैष्णवी शक्तिश्च सञ्चरति । एतेनापि प्राच्या दिक्षु वैशेष्यं प्रमीयते । अन्यदपि तस्याः प्राथम्यस्य कारणं वर्तते—"प्राच्या वै दिशि देवाः सोमं राजानमक्रीणंस्तस्मात्प्राच्यां दिशि क्रीयते" [३।१।१] इत्यैतरेयब्राह्मणेषु श्रूयते । प्रसिद्धं हि सोमस्य महत्त्वं वैदिकेषु कृत्येषु । यतो देवाः प्राच्यां सोमस्य क्रयमकुर्वन् तस्माद्दिशां प्राच्याः प्राधान्यमापद्यत एव । कः सोमः कोऽस्य विक्रेता किं मूल्यं देवैर्दत्तमिति प्रसज्यते । उक्तमैतरेये [ ५।१।१ ]—यद्देवा गन्धर्वेभ्यो वाचं मूल्यरूपेण दत्त्वा सोमं प्राप्नुवन् । गन्धर्वा हीनदेवास्ते नृत्यगानवाद्यैरुत्तमदेवान् प्रीणयन्ति । गानादिभिर्य आनन्दोऽनुभूयते स सोमः । सोमं प्राप्य देवा गन्धर्वेभ्यः पुरस्काररूपिणीं वाचं दत्तवन्तः । वाचो विकारो हि गानम् । वाग्दानेन गानशक्तिं प्रायच्छन् । अथवा वेदज्ञो विद्वान् गन्धर्वः । अथर्ववेदीय-गोपथब्राह्मणस्योत्तरभागे द्वितीयप्रपाठकस्यैकोनविंशतितमकण्डिकायां सदस्यब्राह्मणस्य

गन्धर्वत्वमुक्तम् । एष यः सामगः स कर्मसामान्याद्विशेषरूपेण गन्धर्वपदभाग् भवति । प्राची दिग् देवदिक्—"ता वा एता देवलोकाय युज्यन्ते यत्पराच्यः" [ २।२ ] इति सामवेदीये षड्विंशब्राह्मणे श्रूयते । विद्वांसः सामगानेन देवास्तोषयन्ति, सोममपि देवेभ्योऽर्पयन्ति । अनेन कर्मणा मुदिता देवास्तेभ्यो वाग्रूपि ब्रह्म यच्छन्ति । अयमेव देवाना सोमक्रयः । "पूर्वस्थानत्यागपूर्वकमुत्तरस्थानप्राप्तिश्चलनम् । न तत् सर्वव्यापिनः संभवति । तस्योत्थानादिक-मप्यसंभवम् । एकत्रात्यं परमेश्वरमुद्दिश्योत्थानचलनयोः शब्दयोः प्रयोगो लाक्षणिकः । तस्य "एकोऽहं बहु स्याम्" इति संकल्पात्मिकाऽऽत्मनः स्फीतिरुत्थानम् । तत्परं स प्राचीं व्यचलत् । देवलोकं स्रष्टुकामो भूत्वा देवान् ससर्ज । प्राच्या देवलोकसंबन्धः प्रदर्शित एव । "प्रजापतिस्तपोऽतप्यत तस्य ह वै तप्यमानस्य मनः प्राजायत देवान् सृजेयमिति त इमे देवा असृजन्त" [४।१] इति षड्विंशे ।" इति भाष्यम् ।

यद्यपि निर्जरगवीविद्वन्मानसाय क्वचिद् व्याख्याने भाष्यकृत्स्वातन्त्र्यमरालो नाभिरोचेत, तथापि श्रीमद्भागवतान्तर्गताया भगवत्पाञ्चजन्येशकृत्कुतूहलपराया रासपञ्चाध्याय्याः पाण्डित्य-पूर्णमध्यात्मपरकतया व्याख्यानं कस्मै नाभिरोचेत ? प्रत्युताऽऽनन्दोदधौ निमज्जयत् प्रशस्त्यास्पदतामेति । एवं मुख्यमन्त्रिकृद् भाष्यमपि पर्याप्तपाण्डित्यतया सहृदयविपश्चिता मानसे हंस इव व्याख्यानवर्त्ममुक्तासारं ग्राहयदाग्रहग्राह्यमवश्यमेव दवयेत् ।

"तं दितिश्चादितिश्चेडा" [१।६।२०] इति मन्त्रे दैत्यप्रसुवि प्रसिद्धस्य दितिशब्दस्य दीयते खण्ड्यते विभज्यतेऽनयेति व्युत्पत्त्या दितिर्भेदप्रयोजिकाऽविद्या, "अकर्तरि च कारके संज्ञायाम्" [३।३।१६] इति करणे क्तिनि दितिशब्दस्याविद्यार्थकत्वम्, एवं पुराणे लोके च देवमातृशक्तत्वेन प्रसिद्धस्यादितिशब्दस्य न दितिरदितिरिति भावमादय—"सर्वं खल्विदं ब्रह्म" [छा० उ० ३।१४।१] इति श्रुतितात्पर्यार्थद्योतकतया भेदविनाशकं ब्रह्मज्ञानमर्थ इति, तथा "स उदतिष्ठत्" [ १।२।१ ] इति मन्त्रभाष्ये सोमशब्दस्यानन्दार्थकत्वम्, गन्धर्वशब्दस्य च विद्वदर्थकत्वं च स्वबुद्धिवैभवेन सप्रमाणं निरूपितम् ।

मन्ये यदि सर्वं श्रुतिप्रभं भाष्यं सम्यक् पर्यालोचितं स्यात्तदा व्याख्यापरिपाट्यामभिनवा पद्धतिरुदीयात्, यस्याः साम्प्रतं नितान्तमावश्यकत्वम् । ,यद्यप्यत्र भाष्ये—"पूर्वायाम्" [ पृ० १२ ] इत्यादिकाः कतिपयाशुद्धयः संस्कृतविदुषा मनास्युद्वेजयेत्, परन्त्वेतादृशभाष्यलेखने —न्यस्तानामेतादृश्यशुद्धिर्न परिगणनार्हा ।

---

# पापप्रायश्चित्तविमर्शः

श्रीअनन्तशास्त्री फडके, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ [ या० स्मृ० ३।२१६ ]

इत्यादिवचनेनेन्द्रियार्थप्रसक्त्या विहितानुष्ठाननिन्दितसेवनाभ्यां प्रधानहेतुभ्यां प्रायः सर्वाणि पापानि समुत्पद्यन्ते । विधानस्य निषेधस्य च कालदेशव्यवहारावस्थाभेदेन भिन्नत्वात् पापकल्पनायां तद्विनाशकप्रायश्चित्तकल्पनायामपि च भिन्नत्वमर्थसिद्धमेव । सर्वपापकल्पनायां संभाव्यमानमनुगमकं किञ्चित्प्रदर्शयितुं वेदब्राह्मणप्रदर्शितपापस्वरूपप्रदर्शनात्पूर्वं समुपलब्धानां प्रायः प्रसिद्धानां पापनाम्नां निर्वचनप्रदर्शनं क्रियते ।

पङ्क-पाप्मन्-पाप-किल्बिष-कल्मष-कलुष-वृजिन-एनस्-अघ-अंहस्-दुरित-दुष्कृत-रूपाणि द्वादशनामानि प्रायः समुपलभ्यन्ते ।

पङ्कम् = पच्यते दुःखमनेन । 'पचि व्यक्तीकरणे', करणे घञ्, कुत्वम् ।

पाप्मा = आप्नोति व्याप्नोति लोकान् । 'आप्लृ व्याप्तौ', "नामन्सीमन्" [ उ० ४।१६५ ] अनेन निपातितः ।

पापम्—पान्त्यस्मादात्मानम् । 'पा रक्षणे', "पानीविषिभ्यः पः" [ उ० ३।२३ ] इत्यपादाने प्रत्ययः ।

किल्बिषम् = केलयति क्रीडयति विषयेषु । 'किल श्वैत्यक्रीडनयोः', "किलेर्बुक्च" [ उ० १।५० ] इति टिषच् बुगागमश्च ।

कल्मषम् = शुभं कर्म स्यति समाप्तं करोति । 'षोऽन्तकर्मणि', "आतोऽनुपसर्गे कः" [ ३।२।३ ] इति कप्रत्ययः, पृषोदरादित्वाल्लत्वषत्वे ।

कलुषम् = कलयति वशीकरोति । 'कल गतौ', "पॄनहिकलिभ्य उषच्" [ उ० ४।७५ ] ।

वृजिनम् = वृज्यते । 'वृजी वर्जने', "वृजेः किच्च" [ उ० २।४७ ] इतीनच् ।

एनः = यन्त्यधोऽनेन । 'इण् गतौ', "इण आगसि" [उ० ४।१९८] इत्यसुन्, नुडागमश्च ।

अघम्—अङ्घते गच्छति दानादिना । 'अघि गतौ', पचाद्यच्, आगमशास्त्रस्याऽनित्यत्वान्न नुम् ।

अंहः = अमति गच्छति। 'अम गत्यादिषु', "अमेर्हुक्च" [ उ० ४।२१३ ] इत्यसुन्, हुगागमश्च।

दुरितम् = दुष्टमितं गमनमनेन। इणो भावे क्तः।

दुष्कृतम् = दुष्टं कृतं करणमनेन। इदुदुपधस्येति षः।

एतच्च भानुजीदीक्षितकृतं निर्वचनम्। यास्कीये निरुक्ते किञ्चिदन्यथा निर्वचनं दृश्यते। तदपि प्रदर्श्यते—

पापः = "पापः पाताऽपेयानां पापत्यमानोऽवाङेव पततीति वा पापत्यतेर्वा स्यात्" [नि० ५।२]। "अपेयानि अलेह्यानि यानि तान्यसौ पिबति, विषयप्रसक्त इत्यर्थः। पापत्यमानः पुनः पुनः पात्यमानः, तेनैव पापेन कर्मणा, अवाङेव नरकमेव प्रति पतति असौ, तस्माद्वा पापः" इति दुर्गाचार्यः।

अघम् = 'हन्तेर्निर्ह्रसितोपसर्ग आहन्तीति" [ नि० ६।११ ]।

दुरितम् = "अतिक्रममाणा दुर्गतिगमनानि सर्वाणि" [ नि० ६।१२ ]। "दुरितानि दुर्गतिप्रापकाणि कर्माणि।...एवमत्रातिक्रमणसंबन्धाद् दुरितं दुष्कृतमित्युपपद्यते" इति दुर्गाचार्यः।

एनः = "एन एतेः" [नि० ११।२४]। "तदग्र्येवमेवावश्यमेवैति (कर्तारम्)" इति दुर्गः।

किल्बिषम् = "किल्भिदं सुकृतकर्मणो भयम्, कीर्तिमस्य भिनत्तीति वा" [नि० ११।२४]।

इत्थं सर्वनिर्वचनदर्शनेन दुःखदायकं हठाद् विषयप्रेरकं शुभकर्मनाशकमधोगमनकारकं कीर्तिनाशकं लोकव्यापकं दानादिना विनाशशीलं च पापस्य स्वरूपमुपलभ्यते।

ऋग्वेदे सामर्थ्ये सति दानाद्यकरणं पापं भवतीति प्रतिपादितम्—

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥ [ १०।११७।६ ]

"अदातारं दूषयति—अप्रचेता अप्रकृष्टज्ञानो दाने चेतो यस्य न भवति स मोघं व्यर्थमेवान्नं विन्दते लभते।...इदं सत्यं यथार्थमेवेति ब्रवीमि...न केवलं व्यर्थं किन्तु तस्य पुरुषस्य स वध इत् वध एव...। यः पुरुषः, अर्यमणम्। उपलक्षणमिदम्। सर्वान् देवान् अर्यमादीन् न पुष्यति हविःप्रदानेन न पोषयति, नो नापि सखायं समानख्यानमभ्यागतमतिथिं मित्रवर्गं च न पोषयति।...अत एव केवलादी...केवलमसात्त्विकमन्नं भुञ्जानः स केवलाघो भवति केवलपापवान् भवति" इति सायणः।

शतपथब्राह्मणेऽसत्यभाषणं पापमिति प्रतिपाद्य तत्पापस्य संशोधकमपामुपस्पर्शनं विहितम्—"तद्यदप उपस्पृशति। अमेध्यो वै पुरुषो यदनृतं वदति। तेन पूतिरन्तरतः। मेध्या वा आपः। मेध्यो भूत्वा व्रतमुपयानीति। पवित्रं वा आपः। पवित्रपूतो व्रतमुपयानीति। तस्माद्वा अप उपस्पृशति" [ शत० १।१।१।१ ]। तथा ताण्ड्यब्राह्मणेऽपि—"एतद्वाचश्छिद्रं यदनृतम्" [ ८।६।१३ ] इति।

अन्यत्र शतपथे मिथ्याभाषणेन भाषितुस्तेजो नश्यतीति प्रतिपाद्य सत्यभाषणं विहितम्—"अथ यो अनृतं वदति। यथाग्निं समिद्धं तमुदकेनाभिषिञ्चेदेवं हैनं स जासयति। तस्य कनीयः कनीय एव तेजो भवति। श्वः श्वः पापीयान् भवति। तस्मादु सत्यमेव वदेत्" [ २।२।२।१९ ]

सत्यस्यैवापरं नाम ऋतमिति—"ऋतमिति सत्यम्" [ श० ६।७।३।११ ]। तेन सत्येन केवलेन स्वर्गलोकप्राप्तिर्भवतीति ताण्ड्यब्राह्मणे श्रावितम्—"ऋतेनैवैनं स्वर्गं लोकं गमयन्ति" [ १८।२।९ ]। प्रत्युत सत्यभाषणं वेदत्रयीतुल्यमित्यन्यत्र शतपथे प्रतिपादितम्—"तद्यत्तत् सत्यं त्रयी सा विद्या" [ ९।५।१।१८ ]। सत्यभाषणकर्तुरनपजय्यं यशो भवतीत्येकत्र श्रावितम्—"एवं ह वा अस्य जितमनपजय्यमेवं यशो भवति य एवं विद्वान् सत्यं वदति" [श०३।४।२।८ ] इति। मैत्रायणीसंहितायामसत्यभाषणं देवानामपराधकरणं भवतीति प्रतिपादितम्—"यद्देवा देवहेडनं यद्वाचानृतमोदिम" [ ४।१४।१७।१ ] इति।

एवं च तेजःकीर्तिनाशकं देवापराधरूपमसत्यभाषणं पापरूपम्, सत्यं च कीर्तिस्वर्गदेव-प्रीतिकरं चेति ब्राह्मणतो निश्चीयते।

मद्यपानस्यानर्थवर्णनपूर्वकं पापरूपत्वं काठकसंहितामैत्रायणीसंहितयोः श्रूयते—"तस्माज्जायाश्च कनीयाश्च स्नुषा च श्वशुरश्च सुरां पीत्वा सह लालपत आसते" [ का०सं०१२।१२]। "तस्माद् ब्राह्मणः सुरां न [1]पिबति पाप्मना [2]नेत्संसृज्या इति" [ का० सं० १२।१२; मै०सं० २।४।२ ]।

एवं ब्राह्मणवधो गुरुपत्नीगमनं च पापरूपं प्रतिपाद्य तदपनोदनमश्वमेधावभृथस्नानमश्व-मेधकरणं च प्रतिपादितं बालक्रीडोद्धृतया जाबालिश्रुत्या—"स यदा राजानमुन्नेतोन्नयति। अथैनस्त्विन उपतिष्ठन्तेऽन उपद्रवते। इत्थं ब्राह्मणमवधिषमित्थं गुरोर्जायामभ्यगामिति। निरुक्तमेनो यथा यथा तान् ऋत्विजो राजा च ब्रूयुरश्वमेधावभृथपूता भवथेति। तेऽपोऽभ्यवयन्ति।···स

१. 'पिबेत्' इति मै० सं० [ २ । ४ । २ ] पाठः।

२. 'नेत्संसृजा' इति मै० सं० [ २ । ४ । २ ] पाठः।

यावन्तमश्वमेधेनेष्ट्वा लोकं जयति, त्रिस्तावन्तं जयति। यस्यैवं विदुष एवमेनस्विनोऽवभृथ-मभ्यवयन्ति" [३।२३७]।

आपत्काले पुत्रादिकं विक्रीणन्ति स्म, पितुः पुत्रे तादृशाधिकारात्, तथापि तत्पापमिति बोधितम्—"स होवाचाजीगर्तः सौवयसिः। तद्वै मा तात तपति पापं कर्म मया कृतम्" [ऐ० ब्रा० ७।१७]।

भ्रूणहननं पापजनकमिति संश्राव्य तत्पापनाशकमग्निष्टोमकरणमिति ब्राह्मणेन बोधितम्—"भ्रूणहत्याया वा एषोऽतिमुच्यते योऽग्निष्टोमसंस्थं यजते" [बालक्रीडाधृतब्राह्मणवचनम् ३।२३७]। कृष्णयजुर्वेदीयत्रिसुपर्णेऽपि भ्रूणहत्यापापनाशकं त्रिसुपर्णमन्त्रपठनमिति श्रावितम्—"भ्रूणहत्या वा एते घ्नन्ति ये ब्राह्मणास्त्रिसुपर्णं पठन्ति।...आसहस्रात्पङ्क्ति पुनन्ति" [म०नारा०उ० १७।७]

रजस्वलास्त्रीगमनमपि पापजनकमिति शतपथवचनं बोधयति—"आत्रेय्या योषितैनस्वी" [१।४।५।१३]। आत्रेयी = रजस्वला स्त्री।

यज्ञीयदीक्षायुक्तस्यान्नभक्षणमपि पापमिति श्रावितम्, तथा तन्निन्दाकरणं तन्नामग्रहण-मपि—"त्रेधा वा एतस्य पाप्मानं विभजन्ते यो दीक्षितः। योऽन्नमत्ति स तृतीयम्। योऽश्लीलं कीर्तयति स तृतीयम्। यो नाम गृह्णाति स तृतीयम्। तस्माद्दीक्षितस्य नान्नमद्यान्नाश्लीलं कीर्तयेन्न नाम गृह्णीयात्" [का० सं० २३।६]।

एवं शत्रोरन्नभक्षणं वेदनिन्दा च पापमित्यपि धर्मसूत्रधृतब्राह्मणवचनतो ज्ञायते—"द्विषन् द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमांसमानस्य मीमांसितस्य वा। पाप्मानं हि तस्य भक्षयतीति विज्ञायते" [आपस्तम्बधर्मसूत्रधृतब्राह्मणवचनम्, २।३।६।१६-२०]।

परधनचोरणं पापमित्यप्यैतरेयब्राह्मणवचनतो ज्ञायते—"यथा ह वा इदं निषादा वा सेलगा वा पापकृतो वा वित्तवन्तं पुरुषमरण्ये गृहीत्वा कर्तमन्वस्य वित्तमादाय द्रवन्ति" [८।११]। सेलगाः = नीचाचाराः। कर्तमन्वस्य = कूपे पातयित्वा।

अपूतवाक्पूर्वकनिन्दाकरणं पापमित्यपि बोधितं ब्राह्मणेन—"पापस्य वा इमे कर्मणः कर्तार आसतेऽपूतायै वाचो वदितारः" [ऐ० ब्रा० ७।२७]।

शत्रुयुक्तताऽपि पापमित्यन्यत्र प्रतिपादितम्—"अंहसा वा एष गृहीतो यो भ्रातृव्य-वान्" [का० सं० १०।१०]।

अन्यत्र रोगयुक्तत्वमपि पापमिति प्रतिपादितम्—"पाप्मनैष गृहीतो य आमयावी" [का० सं० १३।६]।

पशुहिंसनमपि पापजनकमित्यप्यैतरेयब्राह्मणतोऽनुमातुं शक्यते। यतस्तत्र पशवो हिंसा-भयाद् दूरंगताः सन्तो देवानवोचन् वयं हि हिंसाविषया न भवेमेति—'देवेभ्यो वै पशवो-ऽन्नाद्यायाऽऽलम्भाय नातिष्ठन्त। तेऽपक्रम्य प्रतिवावदतोऽतिष्ठन्नस्मानालप्स्यध्वे नास्मा-निति" [ २।३ ]।

मूर्खाय दुष्टाय वा शिष्यायोपदेशदानं पापजनकं भवतीति श्रूयते—"इदमथर्वशीर्षमशि-ष्याय न देयम्। यो यदि मोहाद्दास्यति स पापीयान् भवति" [गण०अ० शीर्ष०]।

मन्त्राणामृषिच्छन्दोदैवतविनियोगाज्ञानेन याजनमपि पापजनकं भवतीत्यार्षेयब्राह्मणतो ज्ञायते—"यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वाऽऽपद्यते प्र वा मीयते यातयामान्यस्य च्छन्दांसि भवन्ति" [आ० ब्रा० १]।

इत्थं च सामान्यतो वेदब्राह्मणभागालोचनेन विभवे सति दानाभावः, मिथ्याभाषणम्, सुरापानम्, ब्राह्मणवधः, गुरुपत्नीगमनम्, पुत्रविक्रयः, भ्रूणहत्या, रजस्वलास्त्रीगमनम्, दीक्षित-स्यान्नभक्षणनामग्रहणाश्लीलकीर्तनानि, धनचोरणम्, अपूतवाक्पूर्वकनिन्दाकरणम्, शत्रुरोग-युक्तत्वम्, पशुहिंसाकरणमितीमानि पातकानि प्राय उपलभ्यन्ते। एतेषामितोऽपि भिन्नाना प्रायः सर्वेषा पापाना नाशकानि यज्ञतपोदानजपादीनि वेदब्राह्मणादिविहितान्युपलभ्यन्ते। तथा हि—

य: समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये।
यो नमसा स्वध्वरः ॥
तस्येदर्वन्तो रंहयन्त आशवस्तस्य द्युम्नितमं यशः।
न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत् ॥

[ऋ० ८।१९।५-६]

"यो मर्तो मनुष्यः, समिधा पालाशादिनेध्मेन, अग्नये अग्न्यर्थम्, ददाश परिचरति। यश्च आहुती आहुत्या आज्यादिसाध्यया परिचरति। यश्च वेदेन वेदाध्ययनेन ब्रह्मयज्ञेन परिचरति। यश्च स्वध्वरः शोभनेनाध्वरेण ज्योतिष्टोमादिना युक्तः सन् नमसा अन्नेन चरुपुरोडाशादिना, अग्नये ददाश अग्न्यर्थं परिचरति। तस्यैत् तस्यैव, आशवो व्यापनशीलाः, अर्वन्तः अश्वाः, रंहयन्ते वेगं कुर्वन्ति, शत्रून् प्रहन्त इत्यर्थः। द्युम्नितमं दीप्तिमत्तमं यशः कीर्तिश्च तस्यैव भवति।··· अपि च देवकृतं देवैः कृतम्, अंहः पापम्, कुतश्चन कस्मादपि हेतोः, तं न नशत् न प्राप्नोति। न मर्त्यकृतं मनुष्यैः कृतम्" इति सायणः।

अन्यत्र च—'सर्वस्मात्पाप्मनो निर्मुच्यते य एवं विद्वान् अग्निहोत्रं जुहोति" [शत० २।३।१।६]। तथाऽपरत्र—"तेनेष्ट्वा सर्वां पापकृत्यां सर्वां ब्रह्महत्यामपजघान सर्वां ह वै पापकृत्यां सर्वां ब्रह्महत्यामपघ्नन्ति योऽश्वमेधेन यजते" [शत० १३।५।४।१]। तथेतरत्र च—"पारिक्षिता यजमाना अश्वमेधैः परोऽवरम्। अजहुः कर्म पापकम्" [शत० १३।५।४।३]।

अन्यत्र शाकलहोमेनापि सर्वपापविनिर्मुक्तिः श्राविता। तथा—"तद्यथाहिर्जीर्णायास्त्वचो निर्मुच्यत इषीका वा मुञ्जात्, एवं हैवैते सर्वस्मात्पाप्मनः संप्रमुच्यन्ते ये शाकला जुह्वति" [गोपथ० उ० ४।६]। एवमैतरेयब्राह्मणेऽपि—"ऊर्ध्वो नः पाह्यंहसो निकेतुना" [२।२]। अत्र यूपमुद्दिश्याध्वर्युः कथयति—हे यूप त्वमूर्ध्व स्थितः सन्नस्मान् पापेभ्यो रक्षेत्यर्थः।

महाभारतेऽपि तपःकर्मदानैः पापनाशो भवतीति प्रतिपादितम्—

तपसा कर्मणा चैव प्रदानेन च भारत।
पुनाति पापं पुरुषः पुनश्चेन्न प्रवर्तते॥ [म०भा०शा० ३५।१]

प्राणायामादि तीर्थयात्रादि च तपःपदेन स्वीक्रियते।

कदाचित् स्वकीयपापप्रायश्चित्तमन्येन संपाद्य स्वशोधनं भवति। तत्र प्रायश्चित्तकरणार्थं प्रतिनिधिभूतस्य प्रकारद्वयमवलोक्यते—एकः कश्चन शुद्धो मनुष्यः प्रायश्चित्तकरणार्थमेव योजनीयः, अपरश्च यः पापयुतः। शुद्धेन परपापमङ्गीकृत्य प्रायश्चित्तकरणापेक्षया पापिना स्वपापं प्रायश्चित्तेन संशोध्य परपापप्रायश्चित्तकरणमुचितमिति कल्पनयाऽशुद्धापेक्षया पापयुतस्य प्रतिनिधित्वं कल्पितं दृश्यते। ब्राह्मणे वेदे च देवैः स्वपापशोधनार्थमेकतद्वितत्रितानामुत्पत्तिः संपादिताः, ततः सूर्याभ्युदितप्रभृतिषु च पापस्थापनं कृतमिति वर्णनमुपलभ्यते। तथा हि—

"त्रिते देवा अमृजतैतदेनस्त्रित एतन्मनुष्येषु ममृजे" [अ० सं० ६।११३।१]

"देवा वै हविर्भूत्वाऽब्रुवन्। कस्मिन्निदं म्रक्ष्यामह इति। सोऽग्निरब्रवीत्॥ मयि तनूः सन्निधद्ध्वम्।...सोऽङ्गारेणापोऽभ्यपातयत्। तत एकतोऽजायत। स द्वितीयमभ्यपातयत्॥ ततो द्वितोऽजायत। स तृतीयमभ्यपातयत्। ततस्त्रितोऽजायत।...ते देवा आप्त्येष्वमृजत। आप्त्या अमृजत सूर्याभ्युदिते। सूर्याभ्युदितः सूर्याभिनिम्रुक्ते। सूर्याभिनिम्रुक्तः कुनखिनि। कुनखी श्यावदति। श्यावदन्नग्रदिधिषौ। अग्रदिधिषुः परिवित्ते। परिवित्तो वीरहणि। वीरहा ब्रह्महणि। तद् ब्रह्महणं नात्यच्यवत" [तै० ब्रा० ३।२।८।६-१२] इति।

देवैरग्नौ हविःसमर्पणादनन्तरमुत्पन्नं पापं कथं परित्यक्तव्यमिति जिज्ञासितम्। तदाग्निसाहाय्येनैकतद्वितत्रितानामाप्त्यसंज्ञकाना पापस्वीकारार्थमुत्पत्तिः कृता। आप्त्यैरपि तत्पापं सूर्याभ्युदिते (उदिते सूर्येऽपि स्वापकर्तरि) परित्यक्तम्। तेनापि सूर्याभिनिम्रुक्ते (अस्तंगतसूर्ये स्वप्तरि), योजितम्। तेन कुनखिनि, तेन श्यावदति, तेनाग्रदिधिषौ (ज्येष्ठभगिन्यपेक्षया पूर्वोढायाम्), तया परिवित्ते (ज्येष्ठभ्रात्रपेक्षया पूर्वं दाराग्निहोत्रकर्तरि), तेन वीरहणि (नष्टगृह्याग्नौ), तेन ब्रह्महणि योजितमित्यर्थः।

अन्यस्य पापमन्यः प्रायश्चित्तेन शोधयतीति धर्मशास्त्रादिप्रसिद्धमेतत्। यथा वैशम्पायनकृतब्रह्महत्याप्रायश्चित्तमन्यैः कृतम्। बालकस्य वृद्धस्यातुरस्य च पापप्रायश्चित्तं तत्पुत्रादिभिः क्रियते। यथा वा राज्यपरिपालयितुः पापाशौचाद्यर्थमन्यस्य तदाचरणकर्तुर्व्यवस्था। सापि देवकृतत्रितादिव्यवस्थामूलिकैव न तु स्वतन्त्रा।

मनुष्याणां पापकर्मणि कुतः प्रवृत्तिर्भवतीति जिज्ञासायामैतरेयब्राह्मणे सर्वत्रानुगतमेकं कारणं बोधितम्—"अशनाया वै पाप्माऽमतिः" [ २।२ ]। अत्राशनेत्युपलक्षणं बलवच्चित्तेन्द्रियप्रवृत्तीनाम्। तद्द्वारा च विहिताकरणं निषिद्धाचरणं च भवति। अत एव महाभारते—

अकुर्वन् विहितं कर्म प्रतिषिद्धानि चाचरन्।
प्रायश्चित्तीयते ह्येवं नरो मिथ्यानुवर्तयन्॥ [शान्ति० ३४।२]।

मनुनापि—

अकुर्वन् विहितं कर्म निन्दितं च समाचरन्।
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥ [११।४४]

इतीन्द्रियार्थेषु प्रसक्तिः प्रदर्शिता।

बलवच्चित्तेन्द्रियप्रवृत्तेरपि कारणं रजोगुणाधिक्यमेव। अत एव गीतायां भगवता रजोगुणोद्भूतयोः कामक्रोधयोर्महापापरूपत्वं बोधितम्—

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥ [ गीता० ३।३७ ],

यतस्तयोः सर्वपापानां प्रवर्तकत्वात्, पुरुषस्यानिच्छतोऽपि बलात्प्रवृत्तेः कारकत्वाच्च।

स्मृतिभारतपुराणेषु वेदादिमूलकमेव पापविभागसंख्यानां विवृद्धिजातमवलोक्यते। तत्र सर्वपापप्रकारावलोकनेनेत्थं संभावयितुं शक्यते—तत्र तत्र समाजे स्थापितैहलौकिकपारलौकिकसुखदायकव्यवस्थोल्लङ्घनमेव पापजनकमिति। व्यवस्थोल्लङ्घनेऽनेके प्रकाराः संभवन्ति—(१)

अध्यापकमर्यादात्यागो यथा—गुरोरग्रे प्रौढपादादिनोपवेशनम्, तं प्रति हुंतुंकरणम्, परिवेदक याजनम्, पापिसंसर्गकरणम्, अशिष्यपाठनमित्यादिकम्। (२) समाजनिश्चितकर्तव्याकरणं यथा—वेदादित्यागः, युद्धात्पलायनम्, वाणिज्ये ग्राहकवञ्चनम्, सेवाद्यकरणम्। (३) परस्वत्वापहरणं यथा—सुवर्णस्तेयप्रभृति। (४) समाजोपयोगिवस्तुनाशनं यथा—ग्रामाधिकृतोत्सृष्टवृषभकूपाराम-घट्टमन्दिरवृक्षादिनाशनम्। (५) समाजसंरक्षणं समाजघटकाना सुरक्षया भवति। तदर्थं स्थापित-नियमोल्लङ्घनं पापम्। यथा—बुद्धिनाशकसुराप्रभृतिपदार्थभक्षणम्, ब्रह्मचर्यावस्थाया वीर्यनाशः, अगम्यागमनम्, रोगजनकत्वात्तत्तन्मासे निषिद्धपदार्थभक्षणम्। यथा वा रजस्वलारोगिणीस्त्रीगमनं रोगकारकम्। (६) क्वचिन्मनोविरुद्धमपि यथा—भोजनपात्रे स्थिते पदार्थे निषिद्धपदार्थभावनाया तद्भोजनं पापजनकम्, यथा क्षीरादौ वान्तभावनं भावदुष्टशब्दितम्। (७) व्यवहारादृतनियमत्यागो यथा—भोजनसमयेऽन्यानपरिविष्य पदार्थभक्षणम्, भाषणे परहृदयपीडाकरसंभाषणादिकम्, व्यर्थसमययापनम्, परान्नपुष्टत्वम्, मिथ्याभाषणम्, गृहीतव्रतत्यागः, श्वसूकरकाकादिस्पर्शः, पितृमातृसुतभार्यादासशिष्याद्यपालनम्, अनापदि परवृत्तिकरणम्।

समाजस्योपकारो ज्ञानेनाचारेण तपसा सात्त्विकवृत्त्या च भवतीत्यतस्तद्विनाशे पापा-धिक्यं दृश्यते, यथा वृक्ष-कीटक पशु-शूद्र-वैश्य-क्षत्रिय-ब्राह्मण-विद्वद्ब्राह्मण-अग्निहोत्रि-सदाचार-विद्वच्छ्रोत्रियोपदेशकब्राह्मणहिंसायामुत्तरोत्तरमधिकं पापं बोधितम्।

एवं वयोऽज्ञानकालदेशादिभेदेन पापकल्पनाया न्यूनाधिक्यमपि बोधितं दृश्यते। यथा शूद्रेण स्त्रिया बालकेन वा कृते निषिद्धे कर्मणि, तथाऽज्ञानत आपत्काले शरीरासामर्थ्ये वृद्धत्वे चाल्पं पापम्। सर्वथैतद्वैपरीत्ये च संपूर्णम्, मत्याभ्यासे च द्विगुणादिकम्। एव च समाजव्यवस्थासंरक्षणं यथा भवेत्तथा पापव्यवस्था तद्विनाशकप्रायश्चित्तव्यवस्था च दृश्यते। तद्द्वारा च समाजघट-कानां सर्वेषामैहिकपारलौकिकफलप्राप्तिः। समाजे सर्वथोपप्लवकारकस्य समाजहितकर्तृविनाश-कस्य प्राणदण्ड एव। यथा—श्रोत्रियब्राह्मणादिवधकर्तुः।

समाजसंधारणार्थं तदा तदा मान्यैः सर्वज्ञैर्ऋषिभिः प्रवर्तिता नियमा अपि दृश्यन्ते। यथा माण्डव्येन चतुर्दशवर्षपर्यन्तं पुण्यपापविभागज्ञानपर्यन्तं वा बालकस्य पापं नास्तीत्यु-द्घोषितम्—

मर्यादा स्थापयाम्यद्य लोके कर्मफलोदयाम्।
आ चतुर्दशकाद्वर्षान्न भविष्यति पातकम्॥ [भार० आ० ११७।१७]

यथा चोद्दालकेन पातिव्रत्यपत्नीव्रतविषये मर्यादा स्थापिता—

व्युच्चरन्त्याः पतिं नार्या अद्यप्रभृति पातकम् ।
भ्रूणहत्यासमं घोरं भविष्यत्यसुखावहम् ॥
भार्यां तथा व्युच्चरतः कौमारब्रह्मचारिणीम् ।
पतिव्रतामेतदेव भविता पातकं भुवि ॥

[भार० आदि० १२२।१७-१९]

एवमेव दीर्घतमसा पातिव्रत्यविषये—

अद्यप्रभृति मर्यादा मया लोके प्रतिष्ठिता ।
एक एव पतिर्नार्या यावज्जीवं परायणम् ॥
मृते जीवति वा तस्मिन्नापरं प्राप्नुयान्नरम् ।
अभिगम्य परं नारी पतिष्यति न संशयः ॥

[भार० आ० १०४।३४-३६]

कानिचिद्दैवयोगाज्जातानि कर्माणि पूर्वजन्मकृतावशिष्टपापफलभूतानीति मत्वा तान्यपि प्रायश्चित्तशोद्ध्यानीति समाजादृतशिष्टाचारेण पापरूपेण गणितानि । यथा—सुवर्णनाशः, श्वादिप्राणिदंशः, अग्निहोत्रिणोऽग्निना गृहदाह इत्यादिकानि, कुनखित्वश्यावदन्तत्वप्रभृतीनि जन्मतो जातानि च । क्वचिच्चाल्पपापकरणेन यदि सर्वथाऽधिकसमाजघटकसंरक्षणं भवेत्तदा न तत्पापमित्यपि बोधितम् । यथा—परप्राणरक्षार्थं मिथ्याभाषणम् ।

एवं च मनुष्याः समाजं कृत्वैव तिष्ठन्ति, जीवन्ति, वर्धन्ते च । तदर्थं समाजधारणपोषणरक्षणसमर्थं परावरज्ञैर्ज्ञातं बन्धनमैहिकपारलौकिकफलसिद्ध्यर्थमपेक्ष्यत एव, तच्च धर्मादृते नान्यदुपलभ्यते । अत एव—"धारणाद्धर्ममित्याहुर्धर्मो धारयति प्रजाः" इति धर्मस्वरूपमृषिभिर्बोधितम् । भगवता श्रीवेदव्यासेन च—"न जातु मोहान्न भयान्न लोभाद् धर्मं त्यजेज्जीवितस्यापि हेतोः" इति भारतसावित्र्या प्रत्यबोधि । इन्द्रियविषयासक्त्या विहितधर्मत्यागनिषिद्धाऽधर्मसेवनेन च पापोत्पत्तिर्भवति, तच्छोधनार्थं देशकालवयोवस्थाव्यवहारानुसारं प्रायश्चित्तोपदेश इति शिवम् ॥

---

# सदाचारविमर्शः

श्रीरामचन्द्रशर्मा होसमने, साङ्गवेदविद्यालयः, वाराणसी ।

साम्प्रतं भारतवर्षे सर्वत्र श्रूयमाणायाश्चौर्यवधादिप्रवृत्तेः, अशान्तिहेतुभूतायाः स्वार्थपरायणतायाः, जनेषु प्रतिदिनं दृढतया वर्धमानस्य स्वेच्छाचारनिदानस्य गुरुभक्तिलोपस्य च कारणं सदाचारप्रधानतायाः पराङ्मुखतैव । अतः समाजहितकाङ्क्षिभिरवश्यं प्रथमं जनेषु सदाचारप्रवृत्तिः पूर्ववद्यथा स्यात्तथा प्रयतितव्यम् । यावदत्र सदाचारप्रधानः समाज आसीत्तावदशान्तिरपि नासीदिति तु को वा न जानातीतिहासज्ञः ।

अथ कः सदाचारः ? किञ्च तल्लक्षणम् ? तत्प्रवर्तनेन च कथं लोके सुखशान्त्यादयो भविष्यन्ति ? तत्प्रवर्तनोपायश्च कः ? तत्प्रवर्तनस्यैव चावश्यकत्वं कुतः ? इत्यादयो विषयाः क्रमेण विमृश्यन्ते । तत्र सदाचारो नाम—

विद्वेषरागरहिता अनुतिष्ठन्ति यं द्विजाः ।
विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः ॥

[ आचाररत्नप्रस्तावनायाम् ]

इत्युक्तलक्षणानुसारेण सता वेदार्थज्ञानाहितसंस्काराणां सज्जनानां लोभादिमूलकत्वाभावविशिष्ट आचारः, अत एव धर्मे प्रमाणभूतः । तदुक्तम्—

"अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्" [ मी० द० १।३।७ ] इति ।

तादृशानां चाचारो न कदाचिदप्यसन् भवितुमर्हति, नहि लवणाकरे जायमानं लवणमयादन्यत् संभाव्येत—"आकरे पद्मरागाणां जन्म काचमणेः कुतः ।" अतः स एव सन्, नाम समाजसुव्यवस्थाकारणीभूतो व्यक्तेः श्रेयस्करश्चाचारः । तदुक्तं कामसूत्रे—

"वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्रायाः" [१।२।३१] इति ।

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् । [ १।१।२ ]

इति भागवतेऽपि ।

आचारो नाम नहि स्वाभाविकक्रियामात्रम्, किन्तु कञ्चिद्विशिष्टोद्देश्यं पुरस्कृत्य विशिष्टया मनोवृत्त्या बुद्धिपुरस्सरं क्रियमाणं कर्म । एतादृश एव कर्मणि धर्मसम्बन्धोऽपि विद्यत इति धर्मस्योद्देश्यद्वयं यत्—समाजस्य व्यक्तेर्वा धारणपोषणपूर्विका ऐहिकोन्नतिः, धर्माचरणकर्तुः पारलौकिकोन्नतिश्चेति । तद्द्वयमपि सदाचरणलभ्यम् । धर्मस्यैव बाह्यस्वरूपमाचारः । अत एवोक्तम्—"आचारः प्रथमो धर्मः" [मनु० १।१०८] इति ।

येनाचरणेनोत्साहो हर्षश्च वर्धते लोके स एव सदाचारः, येन च भयं लज्जा च प्रतीयते सोऽधर्म इति सदसदाचारयोः सामान्यतो व्याख्या भवेत् । तदुक्तम्—

यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ [मनु० ४।१६१]
यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जति ।
तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम् ॥ [मनु० १२।३५]

तत्र कः सदाचारः, कश्चासदाचारः ? इत्यस्मिन् विषये मनुष्यस्य विशेषतो भ्रम एव संभवेत्, स स्वकीयेन्द्रियवासनातृप्त्यैव सन्तुष्टः सन् तज्जनकाचारमेव सदाचारं मन्येत । किञ्च, क्वचिद्देशे समाजे वा कस्यचनानाचारस्याप्यत्यन्तं रूढत्वे तत्करणे लज्जा न प्रतीयेत कस्यापि, प्रत्युत सोत्साहं तत्पापं कुर्याज्जनः । अतोऽस्मिन् जगति सर्वेषु धर्मेषु प्रायः सदृशा एव केचन सद्गुणाः सदाचारत्वेन सुव्यवस्थित्यर्थं सर्वैरपि पालनीयतयोपदिष्टाः ।

अत्र राजनीतिज्ञस्य 'एडमण्ड बर्के'-महोदयस्यापि संमतिर्विद्यते । तेन हि स्वकीये [1]राजनैतिकग्रन्थे लिखितम्—"समाजस्यायं प्रथमो नियमो यन्मनुष्यसंबन्धिनो वर्तनस्य हिताहितत्वे तेन स्वतो न निर्णेतव्ये" इति, "नीतियुक्तो नियमः पालनीयः सर्वैरपि" इति च ।

तत्र सामान्यतः सदाचारा दशविधा मुख्या इति वक्तुं शक्यम् । तेष्वहिंसा सत्यमस्तेयं ब्रह्मचर्यमपरिग्रहश्चेत्येते पञ्च यमपदवाच्याः समाजस्य व्यक्तेश्च हितकारिणः सद्गुणा इति व्यपदिश्यन्ते । यतो ह्यहिंसा नाम—

कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ।
अक्लेशजननं प्रोक्ता अहिंसा परमर्षिभिः ॥ [ईश्वरगीता]

इत्युक्तलक्षणः प्राणिमात्रदुःखसाधनभिन्नो व्यापारः । अतोऽयं न केवलं वैयक्तिको

---

१. "रिफ्लेक्शन्स ऑन दी रिवोल्यूशन इन फ्रांस" नामके ग्रन्थे ।

गुणः, किन्तु सामाजिकोऽपि। एवमेव सत्यम् = यथादृष्टयथाश्रुतविषयकं व्यवहरणम्। तच्च द्विविधम्—कथनरूपमाचरणरूपं च। तदुक्तम्—

"यथार्थकथनाचारं सत्यं प्रोक्तं द्विजातिभिः" [ ईश्वरगीता ] इति।

अत्रापि समाजसंबन्धः स्फुट एव। एवमेव चान्यत्रापि बोध्यम्। अस्तेयम् = परद्रव्यापहरणसङ्कल्पस्याप्यभावः। ब्रह्मचर्यम् = साभिलाषस्मरणाद्यष्टविधमैथुनत्यागः, स्वाभाविक्याः कामप्रवणतायाः प्रतिरोध इति यावत्। अपरिग्रहः = देहयात्रातिरिक्तभोगसाधनाऽस्वीकारः।

शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानरूपाः पञ्च नियमास्तु वैयक्तिका एव। तत्र शौचं बाह्यमाभ्यन्तरं चेति द्विविधम्। बाह्यं मृज्जलादिना कायमलप्रक्षालनम्। आभ्यन्तरं मैत्र्यादिभावनाभिरसूयादिचित्तमलप्रक्षालनम्। तथा च सदा सुखिषु सौहार्दमीर्ष्याकालुष्यनिवर्तकं कर्तव्यम्, दुःखिषु दया कृत्वाऽसूया निवर्तयेत्, पुण्यवृत्तिषु हर्षं द्वेषनिवर्तकं कुर्यात्, पापिष्वौदासीन्यममर्षनिवर्तकं भावयेदिति भावः। अस्य चैकाग्र्येन्द्रियजयधृत्यादयः फलानि, अशौचस्य चापस्मारशीतलादयो लोकदृष्टान्येव। सन्तोषः—

यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः।
शेषवृत्तिविधानाय स वै सुप्तोऽथ वा मृतः॥

इत्यादिभावनया यदृच्छालाभतः पूर्णमिति बुद्धिः। तपः = देवद्विजगुरुपूजादि। स्वाध्यायः = सद्वाङ्मयवाचनादिः। ईश्वरप्रणिधानम् = ईश्वरप्रसादानुकूलो व्यापारः। स च स्वस्वकर्तव्यपरिपालनमेव। तदुक्तम् —

"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" [ भ० गी० १८।४५ ]।

"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" [ भ० गी० १८।४६ ] इति च।

अधुना त्वेतद्विपरीतानामयाचारानाचारपदवाच्यानां हिंसानृतस्तेयव्यभिचारासन्तोषकर्तव्यत्यागादीनामेव प्राबल्यं सर्वत्राशान्तिनिदानं संवृत्तम्। अतः पूर्वोक्तसदाचाराणां सम्यक् प्रवर्तनेन समाजेऽवश्यं सुखशान्त्यादिभिर्भाव्यमिति कार्यकारणभावानुरोधेनैव सिद्ध्यति।

किञ्च, "चौर्यं न कार्यम्" इत्यादय एतत्सदृशा दशैव नियमा आचरणीयतया बाइबिलादिषु पाश्चात्त्यधर्मग्रन्थेष्वपि निर्दिष्टा इत्येतादृशानामाचाराणां समाजसुव्यवस्थानिदानत्वे पाश्चात्यानामपि नैव वैमत्यं भवितुमर्हति।

पाश्चात्त्यदेशेषु साम्प्रतं साम्यवादसमाजवादप्रभृतीनां प्राबल्यं प्रचलति। परस्परं प्रतिक्रिया अपि स्वस्ववादस्थापनार्थं विशेषेण क्रियमाणा अन्योन्यभयहेतवः संवृत्ताः। भारत-

वर्षस्य त्वध्यात्मवादप्रधानस्य न कदापि तेभ्यो भयं भवितुमर्हति। अतः पाश्चात्या अपि यदा स्वस्ववादाभिनिवेशं परित्यज्येममेवाध्यात्मवादं स्वीकरिष्यन्ति, तदैव संसारेऽस्मिन्नाशिष्यन्ति सुखशान्त्यादीन् द्रष्टुं प्रभविष्यन्ति। अन्यथाऽऽध्यात्मिकत्वशून्यास्तेषां वादा अवश्यं संसार-नाशका एव भविष्यन्तीत्यत्र नास्ति संशीतिलेशोऽपि। अत एव पाश्चात्यवैज्ञानिकवरेण 'बरट्रॉड रसेल'-महोदयेनोच्यते[1] यत्—"भौतिकशास्त्रस्य प्रगतिरियं कदाचिन्मानवसंस्कृतेरेव नाशं करिष्यतीत्यस्माकं भीतिर्भवति" इति।

अन्यच्च, स्वभावत एव वैषम्यनैघृण्यवुक्तायामस्यां सृष्टौ कथमेभिः समानता सर्वे-षामुत्पादयितुं शक्या स्यात्? सृष्टिकर्त्रा परमेश्वरेण सृष्टिस्थित्यर्थमेव मनुष्यसमाजस्य गुण-स्वभावानुरोधेन कर्माणि पृथक् पृथक् प्रविभक्तानि। तदुक्तम्—

सर्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः।
मुखबाहूरुपज्जानां पृथक् कर्माण्यकल्पयत्॥ [मनु० १।८७] इति।

तत्र स्वाधिकारिके कर्मणि सर्वेऽपि स्वतन्त्रा एवेत्यतो न कस्यापि पारतन्त्र्यवार्ता। एवं स्थिते स्वस्वकर्तव्यपरिपालनमेवात्मोन्नतिहेतुभूतं परित्यज्यान्यकर्तव्ये स्वाधिकारप्रातीच्छाजनिता पाश्चात्यैरुत्पादिता समानताबुद्धिरेव तावत्सर्वथा समाजनाशहेतुः।

आध्यात्मिकोन्नतिस्तु मनुष्यमात्रस्य ध्येयकोटावापतति, सा च न सदाचारोन्नतिमन्तरा संभवेत्। यतो हि पूर्वोक्तैर्दशविधैराचारैरेव कामक्रोधादयः षड्वैरिण आत्मोन्नतिप्रतिबन्धका जिता भविष्यन्ति, नान्योपायेन; तद्विरुद्धत्वात्तेषाम्। पूर्वमाध्यात्मिकबलमेव हि भारतवर्षस्य प्राणा आसन्, तद्बलेनैव च सर्वत्र सुखशान्तिसमृद्धतया सर्वजगन्मूर्धन्यताऽप्यासीदस्य। तदुक्तम्—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥ [मनु० २।२०] इति।

तद्ह्रासेनैव त्विदानीन्तनी दशा संपन्ना। अतस्तत्संपादनमन्तरा नास्त्यन्यः कोऽप्युपायः सुखशान्तिनिर्माण इति सुधीभिर्विभावनीयम्।

एवमेव व्यक्तिनियन्त्रका अन्येऽपि केचन धर्माः, कुटुम्बवर्धकाः कुलधर्माः, आनुवंशि-कपद्धतेः स्थिरतासंपादका जातिधर्माः, शरीरोपचयानुसारेण नियमविधायका आश्रमधर्माः, तत्तद्देशकालानुसारिणो देशधर्मा इत्यादयोऽनेक आचाराश्चित्तशुद्धिहेतवः प्राकृतिकनियमाविरुद्धा मानसशास्त्रतत्त्वानुसारेण मनुष्यस्वभावाभिज्ञैः समाजशास्त्रतत्त्वज्ञैश्च दूरदर्शिभिर्मन्वादिभिस्तैस्तैः

---

१. "साइन्स एण्ड फ्यूचर" नामके ग्रन्थे।

परिपालनीयत्वयोक्ताः । तेऽपि सदाचाराः समाजोन्नतिकरा एव न कदापि हानिकरा भवितु-मर्हन्ति । तत्र सर्वेषां यथाधिकारं योग्या एवाचारा विहिताः, तेन न कुत्रचिद्वैयक्तिकाचारेण सह सामाजिकाचारस्य विसंगतिर्दर्शयितुं शक्या । अतस्तेषां परस्परं भिन्नत्वेऽप्येकसमाजघटकत्वं व्यक्तीनां सम्भवत्येव । धर्मानुरोधेनैव सर्वासां जातीनां वृत्तिव्यवस्थापनाच्च जन्मत एव तद्विषये निश्चिन्तता पराक्रमणभीत्यभावश्च सर्वेषां सिद्ध्यति ।

तथा हिन्दुषु प्रचलिता ये गर्भाधानादयः संस्कारा विशिष्टशक्तिसंपादकाः प्रत्येकं तदनुकूला एवाचारा अपि विहिताः । एतादृशसंस्कारयुक्तस्यैव हि पुत्रस्य पुन्नामनरकात् त्रातृत्व-रूपं पुत्रत्वं नान्यस्येति तादृशसुप्रजानिर्माणद्वारा वंशाविच्छेदसम्पादनं मनुष्यमात्रस्य परमं कर्तव्यम् । अतस्तदर्थमपेक्षिता विवाहनियमा ग्राह्याग्राह्यादिविचारसहिताः प्रतिभादिजनक-शुद्धजातिसंरक्षकतयाऽत्यावश्यकाः प्रतिपादिताः । अन्यथा सङ्करात्लोको नाशं गच्छेदिति "सङ्करेण समाजः पूर्णतया नश्यति" इति समाजशास्त्रज्ञेन 'नेल्सन'-महादयेनाप्युच्यते । "सङ्करो हानिकरः, सङ्करजातीयाश्चातिक्रूरा भवन्ति" इत्यत्र तु [1]डार्विनमहोदयस्यापि संमतिर्विद्यते ।

किञ्च, सृष्टेर्व्यवस्था सर्वथा न्याय्या नियता च वर्तत इति सर्वानुभवसिद्धम् । तथापि तत्र ये वैषम्यनैर्घृण्ये दृश्येते तत्कारणेन केनाप्यवश्यं भाव्यम् । तत्रास्मिन् जगति दृश्यमानयो-र्जडचेतनयोर्मध्ये चेतनो यो जीवस्तस्य स्वरूपं किम् ? मृत्योः पश्चात्तत्स्वरूपं किं भवति ? स कुत्रचिद् गच्छति चेदस्य जन्मनः पूर्वमपि क्वचिदासीत् ? एवं चैतस्य यः प्रवासः प्रवर्तते, तस्यारम्भः कुतः ? अन्तं वा कुत्र ? तस्मिन् प्रवासे निवासस्थानभूतेऽस्मिन् जन्मनि तस्य स्वातन्त्र्यं विद्यते वा ? उत पारतन्त्र्यम् ? इत्याद्यतिसूक्ष्मविचारपूर्वकं शास्त्रकारैरिदमेव निर्णीतं यत् कृतहान्यकृताभ्यागमप्रसङ्गाज्जीवोऽयं प्राक्तनकर्मभिर्बद्ध इति तत्परतन्त्रः । तथा च श्रुतिः—"तद्य इह रमणीयचरणाः...ते रमणीया योनिमापद्येरन्...य इह कपूयचरणाः...ते कपूया योनिमापद्येरन्" [ छा० उ० ५।१०।७ ] इति, "तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्" [६।४३] इति च गीतायाम् । तथा च वैषम्यनैर्घृण्ये न्याय्ये एवेति ।

एवं च सत्कर्मणा जीवस्योत्तरोत्तरमुन्नतिः, दुष्कर्मणा चावनतिर्भवतीत्यवश्यमङ्गीकर्तव्यम् । तत्र कर्मणः सदसत्त्वनिर्णयो न मनुष्यबुद्ध्यधीनो व्यवस्थापक इत्यपौरुषेयवेदानुसारेणाचार-व्यवस्था कृता मन्वादिभिः ।

---

1. "वेरियेशन ऑफ प्लान्ट्स एण्ड एनीमल्स अन्डर डोमेस्टिकेशन" नामको डार्विनविर-चितो ग्रन्थो द्रष्टव्यः ।

एतेऽपि पूर्वोक्ता आचारा निष्कामनया नामेश्वरार्पणबुद्ध्या स्वकर्तव्यबुद्ध्या वाऽनुष्ठेयाः। अत एव गीतायामपि निष्कामकर्मैव विधीयते—"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" [२।४७] इत्यादिभिः। एतेषामनभिशङ्कयत्वं तूदयनाचार्यैः साधु प्रतिपादितं न्यायकुसुमाञ्जलौ—

विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा।
दृष्टलाभफला वापि विप्रलम्भोऽपि नेदृशः॥ [१।७] इत्यत्र।

श्रुतिरपि पूर्वोक्तसदाचरणमेव हि त्रिवर्गसिद्ध्युपायत्वेनोपदिशति—"अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः" [तै० उ० १।११] इत्यादिना।

एतादृशसदाचारेषु प्रवृत्तिः सद्विचाराधीना, सद्विचारश्च सच्छिक्षणाधीनः। आधुनिकी शिक्षैव तावद्बालकेभ्यो दीयमानाऽत्यन्तं सदाचारविहीनेत्यतो हेतोस्तेषां नैसर्गिक्या अनाचारप्रवृत्तेः प्रतिरोधे, कर्तव्याकर्तव्यपरिज्ञानजनने,

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥ [श्वेता०उ० ६।२३]

इत्युक्तन्यायेन सर्वेषु तत्तद्विद्यानिष्णातत्वसंपादिकाया गुरुभक्तेर्निर्माणे चासमर्था; प्रत्युत सहशिक्षणादिनाऽनाचारप्रवर्तिकैव। सदाचारशिक्षणाभावादेव हि साम्प्रतं सर्वत्रात्मावनतिहेतुभूताया आसुरीसंपदोऽभिवृद्धिरप्रतिहता वर्तते। एतद्वर्णनं च सुष्ठु कृतं भगवद्गीतायाम्—

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते॥ [१६।७] इत्यादिना।

तत्रापि बाल्यात्प्रभृति दीयमानं सदाचारशिक्षणमेव चिकीर्षितायाः—"अभयं सत्त्वसंशुद्धिः" [१६।१] इत्यादिना गीतोक्तदैवीसंपदभिवृद्धेर्जनकं भवेत्। अन्यथा—

पूर्वे वयसि यः शान्तः स शान्त इति कथ्यते।
धातुषु क्षीयमाणेषु शमः कस्य न जायते॥

इति न्यायेनान्यदा दीयमानमपि तन्न फलकारि स्यात्। अतो बाल्य एव सदाचारप्रधानं शिक्षणं विधीयते—

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्यं च सन्ध्योपासनमेव च॥ [मनु० २।६९] इति।

तत्राप्याधुनिकानामिव केवलं ज्ञानप्रधानं शिक्षणं नोपयुक्तम्, किन्तु तदनुसारेण वर्तनपर्यन्तमप्यपेक्षितम्। तत्र स्वयमसदाचारवता न कथमप्यन्येषु सदाचारप्रवर्तनं सुशकमिति शिक्षकैर्मातापितृभिश्च प्रथममवश्यं सद्वृत्तैर्भवितव्यम्। तदैव बालकेषु तत्र प्रवृत्तेरुत्पादनं सुकरं स्यान्नान्यथा।

किञ्च, आधुनिकसाहित्यवाङ्मयं सर्वथाऽश्लीलादिगर्भितम्, चलचित्रगृहादयश्च सद्विचारप्रतिबन्धका इति तेषां प्रतिरोधोऽपि सदाचारशिक्षणार्थमपेक्षितः।

एवमेव सत्सङ्गतिर्बालानां यथा स्यात्सदा, दुःसङ्गतिश्च न स्यात्तथा प्रत्यहं जागरूकैर्मातापितृभिर्भाव्यम्। तेषामेव हि कर्तव्यमिदम्, अज्ञत्वाद्बालानाम्। निसर्गतः सर्वेषां दुश्चरितेष्वेवाभिरुचिर्नियता, निर्बन्धमन्तरा च सा न प्रतिरोद्धुं शक्या। अत्र विषये 'बरट्रॉंड रसेल'-महोदयो[1] वदति यत्—"मनुष्यस्य मनो वायुसदृशं विद्यते, यथा यथा तस्योपरि निर्बन्धः शिथिलीक्रियते तथा तथाऽधिकं स्थलमाक्रामति तत्" इति। अतो दुःसङ्गतिर्यद्युत्पन्ना तर्हि तज्जनितस्य दुश्चारित्र्यस्य परिणामो न कदापि हितकरः शान्तिदायी वा स्यात्।

तथाऽऽहारशुद्धिरपि सद्विचारहेतुरिति तदर्थमपि यावच्छक्ति प्रयतनीयम्। "यादृशमन्नं भुज्यते तादृशी बुद्धिर्भवति" इति लोके प्रसिद्धमेव। अत एव भक्ष्याभक्ष्यविवेकः, स्पृश्यास्पृश्यविवेकश्च धर्मशास्त्रे कुतो नानुप्रयुक्तः। अत्र विषये सुष्ठूक्तं केनचित्कविना—

संयच्छत निजोदरं नित्यं जागृत ध्यानपटहेन।
विषमा इन्द्रियचौरा हरन्ति चिरसंचितं धर्मम्॥ इति।

अथ यदा यदा सदाचारजीवने विघ्नभूतानां दुर्वासनानामुद्बोधो मनसि जायेत, तदैवात्महितेच्छुना—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥ [मनु० २,९४]

इत्यादिभिर्विचारैस्तत्तिरस्कारे प्रयत्नो विधेयः। दुर्गुणानां सद्गुणानां च परस्परं सङ्घर्षे सदसद्विचाराधीनस्तयोर्विजयः, तदनुसारेण च हिताहितरूपं फलमवश्यं भावि। सर्वेषामपि प्रकृतिस्तु साक्षात्परम्परया वा कामवासनापरिपूर्त्यर्थमेवेति हि दृश्यते लोके। परं "कामवासना

---

१. "मैरेज एण्ड मोरल्स" नामके ग्रन्थे।

दुष्पूरा” इति ‘ए०ए०रोर्वेक’-महोदयेन, ‘डा० सिग्मण्ड फ्रायड’-महोदयेन[1] च मानसशास्त्रतत्त्वज्ञेन स्वीक्रियते। ‘एलिस’-महोदयोऽपि [2]वदति—“कामविकारोऽयं कदाप्यनश्यन्ती ज्वालैव” इति। “कामविकारोऽयं सद्गुणानां विचारपूर्वकाभ्यासेन नियन्तुं शक्यः” इति च [3]‘पावलोव’-महोदयस्यापि मतं विद्यते।

सदाचारशीलः पुरुषः संयमी विनयी वृद्धसेवी सात्त्विकस्त्यागी उदारचित्तश्च भवतीत्यतोऽवश्यं जनानुरागपात्रत्वं तस्य संभवति, तेन च स श्रिया युक्तो भवेदेव। तदुक्तम्—“जनानुरागप्रभवा हि सम्पदः” इति।

अस्मिंश्च न कदाप्यन्यापकारकर्तृत्वस्य, समाजानुपकारकत्वस्य, स्वार्थपरायणताया वा संभवः। न कथञ्चिदयं क्षणिकैहिकसुखार्थमसदाचरितुमिच्छेत्।

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम्॥ [मनु० २।१२१]

इत्यादिफलभागी स्थितप्रज्ञावांश्च स एव भवति।

दुराचारः पुरुषस्तु लोके निन्दितो रोगी अल्पायुर्दुःखभाक्परद्रोही च भवति। रजस्तमोगुणतिरोभावपूर्वकं मनुष्यस्य सत्त्वगुणाविष्कारकः शुद्धमनोभूमिकानिर्मापकः सौजन्यसंपादकश्च सदाचारः। किञ्च, सदाचारेण मनुष्यस्य निरलसत्वनुद्योगनियत्वं च सिद्ध्यति।

सदाचारजीवने एकदा येन प्रवेशः कृतः, नित्यनैमित्तिकाचारमन्तरा तस्य मन एव न तृप्येत्कदापि। यस्य कस्यापि मन्तव्यं यथा कथञ्चिदपि तेन कर्तुमशक्यमेव भवति। अत एवोच्यते ‘जर्मन्’-देशीयेन तत्त्ववेत्त्रा [4]‘फ्रेडरिक नित्शे’-महोदयेनापि यत्—“त्वया एकदा यदि सद्गुणस्य, तन्नान्तरीयकदुःखस्य च स्वीकारः कृतः, तर्ह्यधुना किमित्यसद्गुणेषु दृश्यमानमैहिकं सुखमभिलषसि? यस्मिन्नहनि त्वया सद्गुणस्यैवादरः कृतः, तस्मिन्नेव दिने सर्वं वैषयिकं सुखं परित्यक्तम्” इति।

---

१. सेक्स इन सिविलाइजेशन, पृ० २५७, लेक्चर्स ऑन साइकोएनालिसिस एण्ड अदर वर्क्स, बाई फ्रायड।

२. “इन्ट्रोडक्शन टू सेक्स इन सिविलाइजेशन” नामके ग्रन्थे।

३. “लेक्चर्स ऑन कन्डीशनल रिफ्लेक्सेस” नामके ग्रन्थे।

४. “ट्वाइलाइट ऑफ आइडियल्स” नामके ग्रन्थे।

अथ सदाचारस्य राजनीतेश्च परस्परं निगडितः संबन्धो विद्यत इति न तयोर्विरोधः स्यात्कदापि। तथा हि—स्वभावत उच्छृङ्खलस्य समाजस्य नियन्त्रणमेव खलु राजनीतेर्मुख्यं प्रयोजनम्। तच्च धर्मयुक्तसदाचारव्यवस्थापनद्वारा यथा सुकरं न तथाऽन्यसाधनेन। अत एव भारतीयराजनीतौ प्राधान्येन तद्व्यवस्थापनमेव प्रथमकर्तव्यतयोक्तम्। न खलु धर्मप्रधाना परलोकभीतिमन्तरा केवलं राजदण्डभयेन सम्यतेति बुद्ध्या, मानवतासंरक्षणबुद्ध्या वा रहसि क्रियमाणहिंसास्तेयादीना प्रतिबन्धः कर्तुं शक्य इति न परोक्षमधुनातनपरिस्थितिविदाम्। प्रत्युत हिंसादिकर्तॄणा लोकाना यथा राजदण्डादि न भवेत्तादृग्व्यवस्थाभिमुखी प्रवृत्तिरेव दृश्यते लोके। अत एव पदार्थविज्ञानशास्त्रज्ञो मैक्स प्लैंक'-महोदयोऽपि [1]वदति यत्—"परलोकभीत्य-परपर्यायया गुरुशास्त्रादिवाक्येषु विश्वासरूपया श्रद्धया विना न कस्यापि ज्ञानस्य कार्यस्य वा प्रगतिर्भवेदतः श्रद्धाऽऽवश्यकी" इति। प्राणिशास्त्रज्ञस्य 'आगुस्त वेझमान'-महोदयस्यापीदमेव [2]मतम्।

किञ्च—

श्रद्धावान् लभते ज्ञान तत्परः संयतेन्द्रियः।<br>ज्ञानं लब्ध्वा परा शान्तिमचिरेणाधिगच्छति॥ [४।३९]

इति गीतोक्त्यनुसारेण तत्त्वज्ञानस्य श्रद्धायाश्च जन्यजनकभावोऽपि विद्यते। अतः सा परलोकभीतिर्यथार्था कल्पिता वा भवतु, तत्परिणामः सुखकर इत्यत्र तु न सन्देहः। केवलं कल्पनाया अपि परिणामः सन् भवतीति मनोवैज्ञानिकदृष्ट्याऽपि सिद्ध्यति। अत्र दृष्टान्तं तु प्रत्येकस्मिन् रोगे विश्वासचिकित्सानामकः पाश्चात्त्यैरेव कृतः प्रयोगः। तत्र—"तव किमपि न जातम्, त्वं निरोग्यसि" इति पुनः पुनर्विश्वासजननमात्रेण तस्य रोगमुक्तता भवतीति दृष्टम्। अत एव मोहम्मदखिस्तधर्मादिष्वपि सा पुरस्कृता। कौटिल्येनापि—

व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।<br>त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति॥ [अर्थ० १।३]

इत्यत्र लोकगतं प्रसादावसादाभावरूपं समुचितं फलं त्रय्येकसाध्यमिति प्रतिपादितम्। अन्यथा वर्तमानपाश्चात्त्यसभ्यतया किञ्चित्कालपर्यन्तमाप्यर्थकामसमृद्ध्यात्मकप्रसादविशेषलाभेऽपि पार्यन्तिकदुरवस्थाऽपरिहार्यैव। अन्यच्च, समाजनियन्त्रणार्थं नियमानामावश्यकत्वे सिद्धे प्राचीनै

---

१. "व्हेयर इज साइन्स गोइङ्ग" नामके ग्रन्थे।

२. "जर्म-प्लज्म"- नामको ग्रन्थो वेझमानकृतोऽवलोकनीयः।

महर्षिभिरैहिकपारलौकिकोभयविधश्रेयःसंपादकत्वेन निर्णीताना नियमाना परित्यागं यावत्पर्यन्तं तदनुष्ठाने कृतेऽपि फलादर्शनं न भवेत्तावत्पर्यन्तं तदननुष्ठानजनितदुष्परिणामदर्शी को वा परीक्षकोऽनुमन्येत ?

एतावता कार्यकारणभावदृष्ट्या सदाचारस्य फलं तत्प्रवर्तनोपायाश्च प्रदर्शिताः। किन्तु यत्र पाश्चात्यवासनावासितान्तःकरणतया येषां धर्मस्य नामश्रवणमात्रेण शिरःशूलं भवति तादृशजनबहुले समाजे तदुपायानुष्ठानमपि कथं वा कर्तुं शक्यमिति महान् प्रश्नः समुपस्थापितो भवति। परमितोऽन्यः कश्चन समाजे शाश्वतसुखशान्तिकारी दृढतरो निश्चितश्चोपायोऽस्ति वेति सुधीभिरेवात्र विचारणीयम्। पाश्चात्या हि सकलैश्वर्यसमृद्धा अपि—"यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" [छा० ७।२३।१] इति श्रुत्यनुसारेण समस्तसुखकेन्द्रभूतमीश्वरं विस्मृत्य सर्वमपि मनुष्येणैव कर्तुं शक्यमित्यहङ्कारयुक्ताः केवलं भौतिकवादप्रधानाः सन्तो महान्तं विज्ञानाविष्कारं कृत्वाऽपि न कुत्रचिद्वास्तविकसुखशान्त्यादेरुपायमाविष्कर्तुं प्रभवन्ति, प्रत्युत यावानेव विज्ञानाविष्कार उन्नतिं नीयते तावदेवासन्तोषस्याशान्तेश्चाधिक्यमनुभूयते लोके। एतादृशपाश्चात्यवासनया युक्ताना भौतिकवादप्रगल्भ्या मोहिताना केषाञ्चित् योऽयम्—"एते सदाचाराः स्वार्थिभिर्ब्राह्मणैः स्वजीविकानिर्वाहार्थं रूढिं नीता अन्यैरपि केवलमन्धश्रद्धयाऽनुष्ठीयन्ते" इत्याक्षेपः, स कियान् संगत इति सदसद्विवेककुशला एवावधारयन्तु। ज्ञानतो ज्येष्ठस्य ब्राह्मणस्यैव हि कर्तव्यमन्येषा सदाचारे व्यवस्थापनम्। किञ्च—

> सन्दिग्धे परलोकेऽपि त्याज्यमेवाशुभं जनैः।
> यदि न स्यात्ततः किं स्यादस्ति चेन्नास्तिको हतः॥

इति न्यायेनाप्युक्तसदाचारानुष्ठानमेव सर्वेषा सर्वथा श्रेयस्करम्।

एतावत्पर्यन्तं पौरस्त्यसिद्धान्तमनुसृत्य सदाचारस्योपकारकत्वं प्रतिपादितम्। अधुनाऽऽधुनिकदृष्ट्याऽपि तत्र किञ्चिद्विमृश्यते दृष्टान्तप्रदर्शनपूर्वकम्। पूर्वोक्तदशविधसदाचारविषये तु न कस्यापि विप्रतिपत्तिर्भवितुमर्हति, अन्येषामपि विषय आधुनिकैः केवलं धर्मांश विहाय—"अशुच्यवस्थायां शरीरेऽशुचिदेशे च रोगजनकाः कीटाणवस्तिष्ठन्ति, येन केनचित्प्रकारेण तेषां शरीरान्तःप्रवेशे सति रोगो भवतीत्यत आरोग्यदृष्ट्या सर्वैरपि स्नानादिना शुचीभूय शुद्धवस्त्रं परिधाय च शुद्धवायुयुक्ते प्रदेशे शुद्धान्नभक्षणं कर्तव्यम्" इत्यादिना सर्वत्र दृष्टप्रयोजनमेवेक्ष्यते स्थूलदृष्ट्या। प्राचीनैस्त्वतिसूक्ष्मविचारेण तत्रैव दृष्टादृष्टोभयप्रयोजनानुसन्धानपूर्वकं किञ्चिद्

व्यवस्थाप्यत इत्येतावानेव विशेषः। अतस्तेषां सदाचाराणामुक्तफलजनकत्वे न विवाद आधुनिकानामपि विदुषाम्, किन्तु परिस्थित्यनुसारेण तत्प्रचारो दुष्कर इत्येव तेषां मतम्।

नीतियुक्तवर्तनादिना मनुष्यशरीरतः पञ्चाङ्गुलिप्रमाणपर्यन्तं लोहचुम्बकवदृश्याया विद्युच्छक्तेस्तेजस्वितारूपायाः प्रसारो भवति, तत्रापि विशेषतो हस्ताग्रे। तया कीटाणूनां नाशो भवतीत्यतस्तादृशपुरुषहस्तस्पर्शमात्रेण, तैर्दत्तेन भस्मादिना वाऽसाध्या अपि रोगा विनश्यन्तीत्यनुभवसिद्धम्। अस्य प्रयोगोऽपि कयाचित्पाश्चात्यवैज्ञानिकस्त्रिया प्राणिनां मृतशरीरेषु केषुचित्कृतः, तेन च तानि शरीराणि बहुदिनपर्यन्तमपि न दुर्गन्धयुक्तान्यभूवन्। किन्तु सचेतनानीवासन्निति श्रूयते (कल्याणयोगाङ्के)। किञ्च, योगशास्त्रोक्तचित्तवृत्तिनिरोधात्मकेन मनस ऐकाग्र्येण दृष्टिवेधनरूपो 'मेस्मेरिज्म'-प्रयोगोऽपि सिद्ध्यति।

सङ्कल्पस्य तु तीव्रतमा शक्तिरनुभूयत एव सर्वैर्यत्— रात्रौ निद्रावसरे प्रातस्त्रिवादनसमये मयोत्थातव्यमिति मनसि सङ्कल्पं विधाय यदि सुप्यते, तर्हि तस्मिन्नेव समय उत्थापकसाधनमन्तराऽपि जागृतिर्भवतीति दृश्यते। एवमेव शब्दस्यापि विचित्रा शक्तिर्विद्यत इति 'फ्रांस' देशीयया प्रसिद्धवैज्ञानिकस्त्रिया 'मैडम फिनेलाङ्ग'-नाम्न्या स्वीयप्रयोगद्वारा निर्णीतम्। तया च प्रयोगकाले कञ्चित्प्रियमुद्दिश्य यथा गीयते स्म, तथैव तस्य चित्रं पुरःस्थितफलके आविर्भवति स्म (कल्याणसंस्कृत्यङ्के)। एतेन जपपारायणादीनामपि प्रभावो ज्ञेयः। किञ्च, सूर्योदयात्पूर्वं स्नानकरणेनारोग्यस्य मेधाया आयुषश्च वृद्धिर्भवतीत्यायुर्वेदे वर्णितम्। ततो देवपूजार्थं मन्दिरगमने शरीरव्यायामः, तत्र च धूपदीपादिसुगन्धद्रव्यसंपर्काच्छुद्धेन वायुना मानसिकस्वास्थ्यलाभान्मनः प्रसन्नं भवति। अत एव तत्र गमनमात्रेण नास्तिकोऽपि नतमस्तको भवत्येव। एवमेव सर्वत्र लौकिको लाभोऽवगन्तव्यः। तत्र कस्यापि देवस्योपासनाया स्वस्वश्रद्धानुसारेण स्वातन्त्र्यं वर्तते सर्वेषाम्।

मनुष्यमात्रस्य शारीरिकभोजनं यथा क्षीणतापरिहारार्थमपेक्षितम्, तथाऽऽध्यात्मिकजीवने क्षीणतानिवारकमाध्यात्मिकभोजनमप्यावश्यकम्। अतः प्रत्यहं प्रातःसायं द्विवारमपि किञ्चित्समयपर्यन्तं स्वस्थतयोपविश्य भगवच्चिन्तनं कर्तव्यमात्मोन्नतिकामेन। किञ्च, शरीरे मन्दाग्निजनितेऽजीर्णे सति यथाऽवश्यं रोगो भविष्यतीति वैद्यचिकित्सादिभिस्तन्निवारणे प्रयत्यते; तथैवात्मविनाशहेतोराध्यात्मिकाजीर्णताया निवारकस्य, सांसारिकजगत आध्यात्मिकजगत्प्रापकस्य, पशुभावान्मानवतासंपादकस्य च सदाचारस्य कृतेऽपि प्रयत्नशीलैर्भाव्यम्।

अथ संस्कृतिशब्दार्थविचारेणापीदमेवायाति यत् समुपसर्गपूर्वककृधातोर्भूषणार्थे सुडागमपूर्वकं 'क्तिन्'-प्रत्यये कृते 'संस्कृति'-शब्दो निष्पद्यते। तत्यार्थः सम्यक्कृतिर्नाम भूषणभूता क्रियेति, अर्थात्सदाचारे एव पर्यवस्यति। अतः संस्कृतिसंरक्षणेच्छूनामपीदमेव प्रथम कर्तव्यं यत्सदाचारप्रवर्तनं लोके।

किञ्च, समाजशब्दोऽपि मुख्यतया सदाचारविशिष्टानामेव समूहस्य वाचकः। तथा हि—"पशूना समजोऽन्येषा समाजोऽथ सधर्मिणाम्" [अमर० २।६।४२] इति कोशानुसारेण सधर्मिणां समूहः समाज इत्यायाति। धर्मश्च प्रवर्तनाज्ञानाधीनेष्टसाधनत्वानुमितिजन्यप्रवृत्ति-विषयीभूता क्रियेति धर्मविचारकुशलैर्मीमांसकैर्निर्णीतम्। प्रवर्तना च शास्त्राज्ञारूपा, आप्ताज्ञारूपा, राजाज्ञारूपा वा भवतु। एवं च यं कञ्चिदाचारमवलम्ब्यैवात्र सर्वेऽपि समाजाः स्थिरीभूता-स्तिष्ठन्ति। यथा—गोब्राह्मणपूजकत्वं गृहीत्वा हिन्दुसमाजः, यजनयाजनाध्यापनादिषट्कर्मकर्तृत्वेन ब्राह्मणसमाजः। एवमेव सर्वोऽपि समाजः स्थिरतया वर्तते, अतः सङ्घटनं यदि सर्वैषा काम्यते तर्हि पूर्वोक्तसदाचारप्रवर्तनमेवावश्यकम्। यतो हि संघटन नाम—एकात्मतानिर्माणम्, अर्थादेकस्मिन् कुटुम्बे यथा कस्यचन दुःखे समुत्पन्नेऽन्यस्यापि दुःखं भवति, तथा सर्वत्र समाजे प्रत्यभिज्ञाजननम्। तच्च न कस्यचनैकस्य धर्मस्यावलम्बनमन्तरा शक्यम्। अत एव मोहम्मदादिभिरपि तद्द्वारैव संघटनं क्रियते हि।

एतावता संक्षेपतः प्राय उपयुक्ताः सर्वेऽपि विषया यथामति पौरस्त्यपाश्चात्त्योभयविचार-सरण्योल्लिखिताः। अस्मिन् विषये इतोऽप्यधिकं प्रतिपादयितुं शक्यम्, किन्तु विस्तरभयादन्ते भारतवर्षेऽस्मिन् पूर्वोक्तरीत्या राजकीयैरेव सदाचारप्रवर्तने कृते सत्यधुनाऽप्यवश्यम्—

न मे स्तेनो जनपदे न कदर्यो न मद्यपः।
नानाहिताग्निर्नाऽविद्वान्न स्वैरी स्वैरिणी कुतः॥ [छा० उ० ५।११।५]
धर्मैकताना: पुरुषा यदाऽऽसन् सत्यवादिनः।
तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः॥ [नारदस्मृ० १।१]

इत्यादिवचनेषु प्रतिपादितानि फलानि भवेयुरेवेत्युक्त्वाऽस्माल्लेखाद्विरम्यते।

इति शम्॥

---

म० म० उत्तरप्रदेशराज्यपाल-डा० क० मा० मुंशीमहोदयानाम्

# दीक्षान्तभाषणम्

## राजकीयसंस्कृतमहाविद्यालयदशमदीक्षान्तमहोत्सवे प्रदत्तम्

मुदितोऽहं भव संगमेन स्मिन् वाराणसीस्थराजकीयसंस्कृतमहाविद्यालयस्योपाधिवितरणमहोत्सवे।

बहुशताब्दीभ्योऽयं महाविद्यालयः संस्कृतविद्याकेन्द्रीभूतः। प्रतिवर्षमस्मान्महाविद्यालयान्निःसरन्ति स्म ज्ञानज्योतिःशलाका वहन्तस्ता च विशिष्टामन्तःप्रेरणा जनयन्तो विद्वांसो यत्कृते संस्कृतं सन्तिष्ठते। अधुना वयमाशास्महे यदयं महाविद्यालयो भारते प्रथमः संस्कृतविश्वविद्यालयो भविष्यति।

यतोऽयं महाविद्यालयोऽचिरेणैव विश्वविद्यालयीभविष्यति, अत एतद्देशे संस्कृतविद्यास्थितिपर्यालोचनमस्माभिरवश्यं कर्तव्यम्। मया बहुवारमुक्तम्—संस्कृतं जननी भारतराष्ट्रभाषायाः, अस्या व्याकरणकोषाभ्यामुत्तरभारतीयभाषाभ्यो मौलिकं स्वरूपं प्रदत्तम्, अस्याः शब्दराशिना दक्षिणभारतीयभाषाः संवर्द्धिताः, प्रदत्ते च ताभ्यो वाग्मीत्निसाहित्यिकभावने।

इतिहासानभिज्ञाः संस्कृतं कर्मकाण्डविधिमात्रेण तादात्म्यीकुर्वन्ति, कर्मकाण्डविधिं च साम्प्रदायिकसंकीर्णतया। परन्विदमस्माभिः स्मरणीयं यद् गतेषु त्रिसहस्रवर्षेषु संस्कृतमेवास्माकं मौलिकमैक्यम्, एवं चास्मद्भाषाणामैक्यम्, तासामेकरूपं सहित्यिकविकासम्, दृढसामाजिकसंघटनं च जनयति स्म। अध्यात्मविद्यासदाचारयोश्चाधिगमः संस्कृतद्वारेणैवाभवत्। संस्कृतस्योपेक्षाऽस्माकं मौलिकमैक्यमापत्तौ पातयिष्यति।

अतः समुत्तिष्ठत्ययं प्रश्नः—कथं संस्कृतप्रभावो रक्षणीय आधुनिकजीवने? इदं खलु सम्यगवगन्तव्यं यदाधुनिककाले जीवनदशास्तथा भेदमुपगता येन संस्कृतप्रभावरक्षणमसंभाव्यमिव प्रतिभाति, यदि संस्कृतशिक्षाऽऽधुनिकका ावश्यकतानुसारं न परिवर्त्यते। हठधर्मिता क्षयति, कर्मकाण्डविधिः शनैःशनैर्लुप्यति, कुलपुरोहितसंस्था नगरेषु व्यवहारतो लुप्तप्रायैव।

अतो यदि संस्कृतच्छात्रा बहुवर्षपरिश्रमानन्तरमपि न लप्स्यन्ते समुचिता जीविकाम्, अल्पतराश्छात्राः संस्कृताध्ययनाकृष्टा भविष्यन्ति ।

इदमप्यस्माभिः सम्यगवगन्तव्यं यद्विश्वविद्यालयप्रदत्ताऽऽधुनिकी संस्कृतशिक्षाऽपर्याप्ता समुचितगुणरहिता च । पाठशालारीतिर्या भवद्भिरनुस्रियते, ददाति समुचितं मूलग्रन्थाधारम्, जनयति च विश्वासं संस्कृतमहत्त्वे । उक्तगुणद्वयेनासज्जितस्य संस्कृतस्य जीवितभाषारूपं नंक्ष्यति । इदमपि भाषाविज्ञानिना साहित्येतिहासकारेण च कृते मृतप्राचीनशास्त्रीयभाषास्वेका भाषा भविष्यति ।

अतः संस्कृतशिक्षाऽस्माभिस्तथाऽऽधुनिकीकर्तव्या यथा वयं न केवलमस्मच्छात्रिणो जीवनयुद्धार्थं सज्जीकर्तुम्, अपि तु पाठशालाध्ययनपरिपाटीमपि परिरक्षितुं शक्नुयाम, येन संस्कृतस्यान्तःप्रेरणावजीवस्रोतस्त्वमवतिष्ठेत ।

यद्युभे अप्युद्देश्ये समधिगन्तव्ये, तर्हि पाठशालाशिक्षाप्रणाली तथाऽऽधुनिकीकर्तव्या येन शास्त्री न केवलं समधीतसंस्कृतग्रन्थेऽपि त्वाधुनिकविषयाणां गणितेतिहासभूगोलराजनीत्यादीनां समुचितज्ञानवानपि स्यात्, येन विश्वविद्यालयीयदीक्षितैः सह स्पर्धितुं शक्नुयात् ।

अतः प्रथमं तावदिमे विषयाः शास्त्रिपाठ्यविषयेषु तथा पाठनीया येनैषां स्तरः 'इन्टरमीडियेट'-परीक्षास्तरेण समो भवेत् । द्वितीयं तावद् यथैव संस्कृतग्रन्थज्ञानं तथैवेदमप्यत्यावश्यकं यत् पाठनमाध्यममपि संस्कृतमेव स्यात् ।

पाठशालाशिक्षाया संस्कृतं परित्यज्य भाषान्तरमाध्यमेन पाठनमतीवानुचितम् । इदं मामतीव दुःखाकरोति यदस्मिन्नुत्तरप्रदेश एव पाठशालाशिक्षा उच्चतरपाठ्यक्रमेष्वपि हिन्दीमाध्यमेनैव प्रदीयते, यथाऽहमपश्यम् । प्रवेशिकायाः पूर्वतरस्तरेष्वेवंकरणं स्यादावश्यकम्, परं सर्वेषामुच्चपाठ्यक्रमाणां पाठने संस्कृतमाध्यमेनैव भवितव्यम् । एतदभावे छात्रसंस्कृतयोः सजीवः संबन्धो नंक्ष्यति ।

व्याकरणांशे संस्कृतं स्यात् कठिनम्, परन्तु वाचिकसंस्कृतज्ञानं शक्यतेऽऽवाप्तुमल्पप्रयत्नेन । दृष्टमिदं मया, विशेषतो दक्षिणे, कथं सरलमृजु च संस्कृतं प्रयुज्यते । तथा प्रयुक्तं संस्कृतं शक्यतेऽवबोद्धुं सर्वत्र, यत्र कथञ्चन साहित्यसमृद्धा हिन्द्वार्यभाषानिःसृता काचन भाषा प्रयुज्यते । एवंभूतं सरलमृजु हृद्यं च संस्कृतं संस्कृतछात्रैः पाठशालासु विश्वविद्यालयेषु च प्रयुक्तं सद् दास्यति संस्कृताय जीवनरशर्म । एवं वयं शक्ष्यामः स्वीया दैनिकावश्यकताः प्रकटयितुं संस्कृतेन । एवं संस्कृतस्य कृते वयं जीवितभाषास्थानं परिग्रहीतुं रक्षितुं

च शक्ष्यामः। ततश्च संस्कृतमस्मदीयभारतीयभाषाभ्यो बहुतरां समृद्धिं भावप्रकटनशक्तिं च प्रदास्यति।

एवंभूतं संस्कृतमुपलब्धुं संस्कृतपाठनप्रकारोऽवश्यं परिवर्तनीयः। मूलग्रन्थज्ञानमनुपेक्ष्य संस्कृतमृजुना प्रकारेण पाठनीयम्, प्रोत्साह्य संलापं वादविवादं निबन्धरचनां च दैनिकव्यवहार-विषयानवलम्ब्य।

छात्रे साधारणजनं प्रति स्वाभिप्रायप्रकटनशक्तिजननं पाठशालाशिक्षाया अन्योऽद्यावध्युपेक्षितः प्रधानांशः। मूलग्रन्थज्ञानभाराक्रान्तः साधारणजनं प्रति स्वाभिप्रायप्रकटनाशक्तः शास्त्री निरर्थकप्रायो भविष्यति। स खलु पाठशालायामेव शास्त्रिपदं ग्रहीतुं समर्थो भविष्यति, न तु शक्ष्यत्याधुनिकमहाविद्यालयीयच्छात्रान् पाठयितुम्।

विद्यमानपरिस्थितौ कर्मकाण्डविधिर्न्यूनान्न्यूनं जनप्रिया भविष्यति। अतः कर्मकाण्डानुष्ठानोपजीविनः पण्डिता आगामिनि काले तावदपि नापेक्षिष्यन्ते यावदपेक्ष्यन्ते साम्प्रतम्। अतो भाविपण्डितेन तथा सज्जीभाव्यं येन स आधुनिकपरिस्थित्यनुकूलं सस्कृतसन्देशं नवं व्याख्यातुं शक्नुयात्, नयेच्च तं साधारणं जनं प्रति। जनाः श्राद्धानुष्ठानादुपरमेयुः, परं स पण्डितो य उपनिषद्भगवद्गीतामहाभारतादिकं तथा व्याख्यातुं शक्नोति यथेदमाधुनिकसाधारणजनमनोहारि स्यात्, नूनं परां प्रतिष्ठां लप्स्यते।

मम मुम्बापुरीस्थसंस्कृतमहाविद्यालयसंचालनानुभवो नातीव मोदावहः। बहुशः प्रयत्ने कृतेऽपि स्वल्पा एव तत्संस्थासमुत्तीर्णाः शास्त्रिणो गीतायाः प्रारम्भिकसंस्कृतस्य वा कक्षाः संघटयितुं शक्नुवन्ति, का कथा साधारणजनप्रभावनस्य तेन विषयेण, यस्य ते पण्डिताः। अतो नवीनपाठशालाशिक्षाया आवश्यकमुद्देश्यं शुष्कपण्डितंमन्यतानिगडेभ्यः शास्त्रिणां विमोचनमेव। इयं तथा परिवर्तनीया येन सा इमान् संस्कृतसंदेशस्य, अर्थात् भारते गुरुपरम्परागतस्य संस्कृतिसन्देशस्य प्रसाराय बद्धपरिकरप्रचारकीभवितुं प्रोत्साहयेत्।

मिथ्येदं मतं यत् संस्कृतज्ञानं केवलं कर्मकाण्डानुष्ठानाय भारतीयस्यालङ्कारशास्त्रस्य दर्शनस्य वाऽध्ययनायावश्यकम्। संस्कृतं स्रोतः साधनं च मानवस्य सदाचारे प्रवर्तनाय। संस्कृतसाहाय्येनैव मानवेषु 'ऋते', परमात्मतादात्म्ये च साऽऽस्था शक्यते जनयितुं या मानवजातिमाधुनिकादनात्मवादात् परिरक्षितुं शक्नोति। मानवजात्यर्थमस्ति एकः संदेशः संस्कृतस्य। संस्कृतं मानवमनात्मवादाद् मिथ्यातो हिंसातश्च परिरक्षितुं समर्थम्, शक्नोति चोपदेष्टुमहिंसासत्यब्रह्मचर्यापरिग्रहमहाव्रतान्, यत्र 'ऋतम्' प्रतिष्ठितम्। अन्यभाषाभ्योऽधिकं संस्कृतम्—"यो मा

पश्यति सर्वत्र सर्वं च मयि पश्यति" [गीता ६।३०] इति महोपदेश उपदिष्टा विश्वैक्यभावनां जनयितुं शक्नोति।

संस्कृतं विहाय नान्या काचन भाषा रागभयक्रोधरूपपाशमोचनपुरःसरं परमेश्वरतादात्म्य-रूपपरमपुरुषार्थसिद्धयै प्रवर्तयति। अतो भाविसंस्कृतशिक्षया तथाविधाश्छात्रा उत्पादनीया ये संसारं प्रविश्य मानवजाति विद्यमानदुर्दशातः समुद्धरणक्षममिमं संदेश संदिशेयुः। अतो-ऽहमाशासे यत् संस्कृतशिक्षाऽस्मिन् प्रदेशे विशेषतोऽस्मिन् लब्धप्रतिष्ठे महाविद्यालये प्रगति-शीला भविष्यति, येन भविष्यत्येतेषामुद्देश्याना पूर्तिः।

संसारे वाराणसी प्राचीनतमा विश्वविद्यालयपुरी। इह भगवद्विश्वनाथप्रसादेन सहस्रेभ्यो वर्षेभ्यो विद्याऽभ्यस्यते। अत आधुनिकदशाया सस्कृतस्य जीवितभाषारूपं परिरक्षितुमावश्य-कोपायानुपाददद्भिरस्माभिर्नेदं विस्मरणीय यत् शिक्षाया उद्देश्यं प्रकृष्टपाण्डित्यं विद्याध्ययनप्रसारपरं जीवनं च। वयं सर्वे आधुनिके संसारे वाराणस्या यशः परिरक्षितुं कामयामहे। एतस्य परिरक्षणं प्रकृष्टपाण्डित्यस्य स्मृत्युपदिष्टपरम्परागताचार्यधर्मैः सह समन्वये क्रियमाण एव संभवति।

बहवोऽस्मत्पण्डिता विद्याभ्यासपरायणं जीवनं कदाचन परमदरिद्रदशाया यापयन्ति। ते विद्या तत्कृते एवाभ्यसन्ति। ते धननिरपेक्षं पाठयन्ति। सत्यं ते आचार्यदेवाः।

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥ [मनु० २।१४०]

एतस्य परम्परागतस्योत्कृष्टाचार्यधर्मस्य परिरक्षणं भवद्भिः कर्तव्यम्, येन धनलिप्सा यया-न्यानि विद्याक्षेत्राण्याक्रान्तानि, इदं शुद्धं स्वच्छमन्तःप्रेरणास्रोतो विषाक्तीकर्तुं न प्रभवेत्।

एक एवोपदेशश्छात्रेभ्यः प्रदेयो मया। नास्ति तैत्तिरीयोपनिषदन्तर्गताद् दीक्षान्तो-पदेशादुच्चतरः समधिकान्तःप्रेरणाजनकश्चोपदेशः। स च ज्ञायत एव भवद्भिः। जीवने प्रविशद्भिर्भवद्भिरयमुपदेश एवैतन्महाविद्यालयोपदेशतया माननीयः। अहं च भवतो विश्वासयामि यद् भवन्तः कदाचनापि दुष्पथं नानुसरिष्यन्ति।

सर्वतोऽधिकम्, विश्वसिहि ईश्वरे। स च विश्वासः क्वचनान्यत्र तथोत्कृष्टभाषायां नोक्तो यथा श्रीमद्भागवते—

न भारती मेऽङ्ग मृषोपलक्ष्यते न वै क्वचिन्मे मनसो मृषा गतिः ।
न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिः ॥

[ भाग० २।६।३३ ]

अन्तेऽहं परं सस्नेहमभिनन्दयामि तान् यैरद्योपाधयो लब्धाः, आशासे च यत्ते स्वकीयं संस्कृतज्ञानं निक्षेपमिव मंस्यन्ते। तेन सहैवेदं परमकर्तव्यमापतति यद् यथासंभवं संस्कृतानुराग प्रसार्य संस्कृतसदेशः संसारे प्रसारणीय इति ।

विरमन्नहं भवत्सौभाग्यं कामये ।

शिवास्ते पन्थानः सन्तु ॥

---

## प्रधानाचार्यश्रीकुबेरनाथशुक्लमहोदयानाम्

# अभिभाषणम्

### राजकीयसंस्कृतमहाविद्यालयदशमदीक्षान्तमहोत्सवे प्रदत्तम्

माननीया अध्यक्षमहोदयाः, संमान्या राज्यपालाः श्रीमुंशीमहोदयाः, देव्यः, श्रद्धेया विद्वांसः, स्नातकाः, नागरिकाश्च ।

श्रीकाशीविश्वेश्वरस्य कृपया राजकीयसंस्कृतमहाविद्यालयस्य दशमोपाधिवितरणोत्सवावसरे समवेताना भवता समेषामतिथीना वयं हार्दं स्वागतं व्याहरामः । महामहिम्ना राज्यपालाना श्रीमुंशीमहोदयाना वयं विशेषेणाभारमावहामः, यैर्नैकविधव्यस्तकार्यक्रमेऽप्यस्माकं स्नातकेभ्यो दीक्षान्तोपदेशं प्रदातुं स्वीयोऽमूल्यः समयः प्रादायि ।

तत्र प्रथमं महाविद्यालयस्य गतवर्षीयकार्यविवरणं संक्षेपेण भवता पुरस्तादुपस्थापयामः । अस्मिन् वर्षेऽस्य महाविद्यालयस्य परीक्षाश्चतुःषष्टिकेन्द्रेषु संपन्नाः, यासामुत्तरप्रदेशे त्रिचत्वारिंशत् केन्द्राणि, ततो बहिश्चैकविंशतिः केन्द्राणि मध्यप्रदेश-मध्यभारत-मोहमयी-सौराष्ट्र-राजस्थान-विन्ध्यप्रदेश-हिमाञ्चलप्रदेशेषु नेपालदेशे च विद्यन्ते । ऐषमश्च सप्ताशीत्युत्तरचतुश्शताधिक-द्वादशसहस्रं छात्राः संमिलिताः । नवसप्तत्युत्तरनवशतविद्यालयैः स्वीयाश्छात्राः प्रहिताः, येष्वेकविंशत्युत्तरद्विशतविद्यालयाः प्रदेशाद्बहिः सन्ति । अत्रत्यासु परीक्षासु न केवलं भारतस्य, अपि तु नेपाल-पाकिस्तान-ब्रह्मदेश-श्रीलङ्काप्रभृतिदेशानामपि च्छात्राः प्रविशन्ति ।

महाविद्यालयस्य साहित्यसंबन्धिकार्येषु छात्रपरिषदा भाषणमालाः, निबन्धप्रतियोगिताः, वादविवादप्रतियोगिताश्चायोजिताः । अतः परं तुलसीजयन्ती-कालिदासजयन्ती-मानवाधिकार-दिवसप्रभृतिसमारोहा अपि समपद्यन्त । प्राध्यापकाना साहित्यपरिषदो विद्वद्गोष्ठ्या अनेकान्य-धिवेशनानि जातानि, येषु महाविद्यालयीयाध्यापकैर्बाह्यैश्च प्रतिष्ठितैर्विद्वद्भिरनेके महत्त्वपूर्णा निबन्धाः पठिताः, तत्र गभीरो विचारविमर्शोऽपि जातः । संस्कृताध्यापकाना पुनःशिक्षण-सत्रस्यैषमो द्विरावृत्तिः समजनि । प्रथमसत्रे संस्कृतपाठशालाभ्यः समागता अष्टपञ्चाशदध्यापकाः

प्रशिक्षिताः। द्वितीयं तु साम्प्रतमपि प्रचलति, यस्मिन् राजकीयमाध्यमिकपाठशालाभ्यः समायाता अष्टाविंशतिरध्यापकाः प्रशिक्ष्यन्ते।

दर्शनपरिषदः संस्थापनमस्य वर्षस्य महत्त्वपूर्णः समारम्भः। आर्षदर्शनानां तत्त्वानुशीलनाय, नव्यानां दार्शनिकराद्धान्तानां समुद्भावनाय, सामाजिकजीवनस्योपयोगिनां दार्शनिकतथ्यानां संकलनाय, छात्रान् प्राच्यप्रतीच्यविभिन्नदर्शनदिशा परिचाययितुं च दर्शनमनीषिभिरस्माकं राज्यस्य मुख्यमन्त्रिभिः श्रीसम्पूर्णानन्दमहोदयैः कार्तिकशुक्लचतुर्दश्यां सोमवासरे (२८-११-५५) दर्शनपरिषत् समुद्घाटिता। विद्वद्भिः परिषदियं सबहुमानं सत्क्रियते। परिषदः समक्षमेकः कार्यक्रमोऽपि प्रस्तावितो विद्यते, येन गवेषणात्मकानां परिचयात्मकानां च निबन्धानां पाठः, दर्शनेषु व्यवहृतानां पारिभाषिकशब्दानां कोशनिर्माणम्, पाश्चात्त्यानामितरेषां च दर्शनानां दृष्टीः परिचेतुं तत्तद्ग्रन्थानां तात्पर्यसंकलनात्मकः प्रामाणिकोऽनुवाद इत्यादीनि महत्त्वपूर्णानि कार्याणि संपाद्यमानानि सन्ति। आशास्यते परिषदियं शासनद्वारा समुचितं प्रोत्साहनं समुपलभ्य शीघ्रमेव प्रस्तुतं गरिमाधायकमेतत्कार्यजातं संपादयेत्।

महाविद्यालयस्य सरस्वतीभवनाख्येन ग्रन्थालयेन देशीयैर्विदेशीयैश्च विश्वविद्यालयैः पुस्तकालयैश्च दृढतरः संबन्धः संस्थापितो वर्तते। बाह्यग्रन्थालयेषु सुरक्षिता दुर्लभा ग्रन्थाः स्थानीयपाठकैः सौकर्येण लब्धाः स्युरिति प्रबन्धोऽपि सरस्वतीभवनग्रन्थालये विहितः, येनानेके गवेषका विद्वांसश्च लाभान्विता भवन्ति। अत्र सुरक्षितानां हस्तलिखितग्रन्थानां सूच्यास्तृतीयो भागः, यत्र धर्मशास्त्रस्य सार्द्धद्विसहस्रपरिमिता ग्रन्थाः समाविष्टाः, प्रकाशनार्थं प्रेषितः। पुराणग्रन्थानां सूचीपत्रमपि समाप्तप्रायमेव। शीघ्रमेवैतौ द्वौ भागौ मुद्रितौ भविष्यतः। सरस्वतीभवनग्रन्थमालायामाश्वलायनश्रौतसूत्रस्य सिद्धान्तिभाष्यस्य द्वितीयो भागः, भास्करीनामकस्य शैवदर्शनग्रन्थस्य तृतीयो भागः, तत्त्वपरिशुद्धिनामकश्च वेदान्तग्रन्थः प्राकाश्यन्त। कलिकातान्यायालयीयाङ्गलधर्माधिकरणैस्तत्रत्यधर्मशास्त्रज्ञविदुषां परामर्शेन हिन्दूधर्मशास्त्ररीत्या निर्णीतानां व्यवहारपदानां विवरणात्मकस्य व्यवस्थापत्रसंग्रहस्य प्रकाशनमपि समारब्धम्। संस्कृतभाषायां निबद्धनूतनग्रन्थस्य बृहत्तरभारतस्य, मनोविज्ञानस्य, पाश्चात्त्यनीतिशास्त्रादेश्च प्रकाशनप्रबन्धोऽधिकृतः।

महाविद्यालयस्य त्रैमासिक्या अनुसन्धानपत्रिकायाः "सारस्वत्याः सुषमायाः" विनिमये सरस्वतीभवने देशाद् विदेशाच्च त्रिपञ्चाशत् शोधपत्रिकाः प्राप्यन्ते। ग्रन्थानां छायाचित्रं ग्रहीतुं वाचयितुं च यन्त्रं क्रीतम्। अनेन यन्त्रेण जीर्णशीर्णानां हस्तलिखितग्रन्थानां संरक्षणं सुदृढं संभाव्यते। लन्दननगरस्थ-'इण्डिया आफिस'-पुस्तकालयात् प्राप्तस्य कालिकापुराणस्य,

अन्यान्येभ्यो ग्रन्थालयेभ्यश्च प्राप्तानां नर्तननिर्णयादिद्वादशाधिकानां हस्तलिखितग्रन्थानां छायाचित्राणि संगृहीतानि सन्ति। सरस्वतीभवनस्य गवेषणाकार्ये व्याकरणदर्शनभूमिकाया द्वितीयो भागः प्रकाशनार्थं प्रस्तुतः। साधोलालानुसन्धानविभागस्य च्छात्रैः 'अग्निपुराणस्य' प्रामाणिकं संस्करणं संपाद्यते, यद्धि पुराणानां वैज्ञानिकसंस्करणस्य प्रथमोपक्रमः।

संस्कृतशिक्षेतिहासे वाराणस्याः संस्कृतमहाविद्यालयस्य च नाम युगपत् स्मर्यते। महाविद्यालयोऽयं प्राच्यानां प्रतीच्यानां च विद्यावदातचेतसां विदुषां लोकोत्तरया तपस्यया गरिमाणमिममवापत्। अस्य देशस्योनविंशशताब्द्या विद्वांसः प्रायेण साक्षात् परम्परया वाऽनेन महाविद्यालयेनानुप्राणिता आसन्। प्राच्यविद्याविषये सरस्वतीभवनग्रन्थालयस्तत्रत्येनानुसन्धानात्मकेन प्रकाशनेन संपादनेन च यूरोपदेशीयान् एशियावास्तव्यांश्च विदुषश्चिरादात्मदिश्युन्मुखयन्नास्ते। हिन्दूधर्मविषयेषु संस्कृतविद्याविषयेषु चायं महाविद्यालयो न केवलमुत्तरप्रदेशीयशासनेन, अपि तु विभिन्नराज्यशासनैः केन्द्रीयशासनेन च प्रमाणतयाऽभ्युपगम्यते। अस्य महाविद्यालयस्य गौरवापादक इतिहासोऽस्य भविष्यनिर्माणायालम्। अत एव अष्टात्रिंशदुत्तरोनविंशशततमे ईशवीये वर्षे यदा राष्ट्रियमहासभया राज्यशासनमवाप्तम्, ततः प्रभृत्येव तदानीन्तनाः शिक्षामन्त्रिणो डा०श्रीसम्पूर्णानन्दमहोदया अस्य महाविद्यालयस्य नवनिर्माणाय नूतना योजनाः प्रारभन्त। पूर्णस्वातन्त्र्यप्राप्त्यनन्तरं श्रीसम्पूर्णानन्दमहोदयैर्वैदेशीयशासनेनावरुद्धा योजना द्विगुणितोत्साहेनोज्जीविताः। तदैव राज्यशासनेनेमं महाविद्यालयं विश्वविद्यालयत्वेन परिवर्तयितुं समुद्घोषितम्। सौभाग्येन साम्प्रतं डा०श्रीसम्पूर्णानन्दमहोदयानां सुदृढयोः स्कन्धयोरुत्तरप्रदेशस्य मुख्यमन्त्रित्वस्य गरीयान् भारः समवतिष्ठते। प्रदेशस्य वर्तमानकालिका राज्यपाला अद्य चास्माकं प्राधान्येनातिथयः श्रीमुंशीमहोदयाः स्वीयकार्यकालस्य प्रारम्भादेव संस्कृतवैजयन्तीं निखिलेऽस्मिन् देशे समुद्वेलयन्ति। संस्कृतविश्वपरिषन्मुखेनैते महानुभावाः समस्तदेशस्य दृष्टिं संस्कृताभ्युदयाभिमुखमाकृष्टवन्तः। एभिर्महानुभावैः काश्यामयं महाविद्यालयः संस्कृतविश्वविद्यालयत्वं भजेदित्यत्रातिमात्रं बलमाहितम्। एषा सर्वेषां प्रयत्नानां परिणामस्वरूपं राज्यविधानसभायां शिक्षामन्त्रिभिः श्रीहरगोविन्दसिंहमहोदयैर्वाराणसेयसंस्कृतविश्वविद्यालयविधेयकं समुपस्थापितम्। अनेन विधेयकेन संस्कृतविश्वविद्यालयं निर्मायोत्तरप्रदेशीयं शासनं देशसमक्षमेकमादर्शं प्रस्तोष्यति। शीघ्रमेव विश्वविद्यालयस्य कार्यं प्रारप्स्यते। अस्य कार्यविधिं प्रति समस्तो देश उन्मुखस्तिष्ठति। आशास्यत इदमायोजनं राज्यान्तराणां कृतेऽपि मार्गनिर्देशकं भविष्यति।

अद्यत्वे स्वतन्त्रभारतस्य नवनिर्माणं तीव्रगत्या क्रियते। द्वितीया पञ्चवर्षीया योजना शीघ्रमेव कार्यान्विता भविष्यति। यस्या योजनायाः कार्यान्वये सत्ययं महाविद्यालयो विश्वविद्यालयत्वेन परिणमयिष्यते। एतादृशे महत्त्वपूर्णावसरे संस्कृतस्य वर्तमानसमस्यानां गम्भीरतया विचारस्तासां यथोचितं समाधानं चापेक्ष्यते, येन संस्कृतवाङ्मयस्य सर्वाङ्गीणोऽभ्युदयोऽथ च तस्य देशव्यापकः प्रचारः प्रसारश्च संभवेत्। सम्प्रति संस्कृतस्य सामान्यमध्ययनं प्रति पूर्वापेक्षया किञ्चिदधिकमाकर्षणं नूनं प्रतीयते तथापि पारम्परिकप्राचीनाध्ययनाध्यापनं प्रति सार्वजनीना रुचिः शिथिलीभूतेव दृश्यते। प्रतिभाशीला मेधाविनश्छात्राः प्रायशः संस्कृतविद्यालयेषु नैवागच्छन्ति। परिणामतः शास्त्राणामध्ययनाध्यापनेषु यद्गभीरं पाण्डित्यमपेक्षितं तस्यानुदिनं ह्रासो दृग्दृश्यते।

आङ्गलविद्यालयेषु विश्वविद्यालयेषु च दीयमानसंस्कृतशिक्षाया संस्कृतपाठशालासु संस्कृतमहाविद्यालयेषु च दीयमानाया तस्या महदन्तरम्। स्नातकोत्तरशिक्षाया कस्मिंश्चिद् विषये 'डाक्टरेट' पदप्राप्तौ वाऽपेक्षितस्याध्ययनस्यापि सामान्यशिक्षानुसारितया तदालोचनाया गवेषणाया वा पूर्तिमात्रं विधत्ते। किन्त्वेतेन तद् गम्भीरमध्ययनं नैव संपाद्यते येन शास्त्राणि नवीनः सम्प्रदायो नूतना व्याख्या वा प्रवर्तेत। इदमेव निदानं यत् प्राचीनग्रन्थानां प्रत्यग्रव्याख्या विश्वविद्यालयानामनया संस्कृतशिक्षयाऽद्यावधि सम्पादिता नाभूत्। संस्कृतपाठशालानां संस्कृतमहाविद्यालयानां च शिक्षाप्रणाली प्रारम्भादेवेदृशी भवति, यया ज्ञानस्य नवनवानां प्रस्थानानामुद्बोधनं भवितुमर्हति। सेयं शक्तिः तत्तद्विषयकाणां ग्रन्थानां पङ्क्तीनां टीकानामनुटीकानां चाध्ययनेन परिस्फुरति। समासेन विश्वविद्यालयानां संस्कृतशिक्षा विस्तृतीकरणोन्मुखा, अस्माकीनपाठशालानां च विशिष्टीकरणोन्मुखेति वक्तुं युज्यते। विशिष्टीकरणमेवास्माकीनशिक्षाया मेरुदण्डः। तदपि दुर्दैववशेनास्माकमुत्तरोत्तरमुपक्षीयते।

किन्त्वेतादृशमध्ययनं विना शास्त्राणां ग्रन्थानां च मर्मज्ञानमसंभवि। विद्यायाः साम्प्रदायिकमर्मज्ञानं विना शास्त्रेषु कोऽपि नवीनोपहारप्रस्तावो दुराशाविलसितमेव प्रतिभाति। विश्वविद्यालयेषु प्रारम्भत एवेदृशः प्रयत्नो नाभूत्। दुर्दैवादस्मास्वपि प्रौढपाण्डित्यं विलुप्यमानमिव दृश्यते। अस्याः संरक्षणमद्यतन्याः संस्कृतशिक्षाया दुरूहा समस्या प्रतिभाति। अस्याः समाधानमभिलक्ष्यैव संस्कृतशिक्षाया आयतिर्निर्भरा। अस्याः समाधानं तावदसंभवि यावत् संस्कृतविदुषामार्थिकजीवनं समुन्नतं न स्यादथ च समाजे तेषां समुचितः संमानो न भवेत्। प्रायेण सर्वेऽपि संस्कृतच्छात्रा विद्वांसश्चात्मन आर्थिक्याऽवस्थयाऽसन्तुष्टाः सन्ति। पुरातनाना-

ऋषीणां विदुषामिव चाद्यतनानां गीर्वाणवाणीपरिशीलनव्यवसायो न लक्ष्यते। विद्यासु येऽपि भृशं श्राम्यन्ति तेऽपि शासनात् समाजाद्वा समुचितं संमानं न लभन्ते। अत इदानीन्तनानां संस्कृताध्ययनाध्यापननिरतानां जीवनं नीरसत्वमुपगतम्। साम्प्रतं संस्कृतपाठशालानां या दयनीया विषमाऽऽर्थिकी दशा वरीवर्ति, तामभिलक्ष्य संस्कृतच्छात्रोऽत्यर्थमुद्विजते। स हि संस्कृतमधीत्य स्वगुरुरिवात्मानमार्थिक्या दुःस्थितौ पातयितुं नोत्सहते। एष व्यापकोऽवसादः सर्वात्मना दूरीकर्तव्यः। अतः संस्कृतपाठशालाभ्यः पुष्कलमार्थिकं साहाय्यमावश्यकम्, येन ता अध्यापकेभ्यो यथोचितवेतनदाने नवीनपाठ्यक्रमस्य सुचारुतया सचालने च समर्थाः स्युः।

निरुक्तविशिष्टप्रौढपाण्डित्यसंरक्षणाय मेधाविनां छात्राणामाकर्षणं तावन्न सम्भवति यावज्जीविकाक्षेत्रं प्रशस्तं न स्यात्। शासनेन प्रथमामध्यमाशास्त्रिपरीक्षाभ्यो या मान्यता प्रदत्ता सा खल्वाङ्गलभाषामादाय तत्तत्परीक्षोत्तीर्णेभ्यश्छात्रेभ्य एव। किन्त्वद्यत्वे हिन्दी राष्ट्रभाषापद-मध्यासीनाङ्गलभाषाया महत्त्वमाक्रामति, अतः संस्कृतच्छात्राणामाङ्गलभाषाप्रतिबन्धो न युज्यते। शासनद्वारा प्राचीनपद्धत्याऽधीतसंस्कृतविद्यानां विदुषां संरक्षणमत्यावश्यकम्। विद्यार्णवे चाकण्ठमग्नानां पण्डितानामार्थिकदीनावस्थाऽवाञ्छनीया। राज्यतो विशिष्टविदुषां जीवन-निर्वाहाय पर्याप्तदक्षिणाऽपेक्षिता। भविष्णवश्छात्राश्चापि विशिष्टाभिश्छात्रवृत्तिभिः पुरस्कार्याः। तथा सत्येव संस्कृतभाषायाः संरक्षणं संवर्द्धनं च संभवति।

भारतीयसंस्कृतेः संरक्षणमथ चाधुनिकज्ञानविज्ञानैः सार्धं भारतीयज्ञानानां समन्वय-श्चास्माकमिदानीन्तनी ज्वलन्ती समस्या वर्तते। यद्यस्याः समाधानमस्माभिः क्रियते तर्हि राष्ट्रनिर्माणेऽस्माकं स्थायिनी कृतिः स्यात्। अस्य प्रयोजनस्य सिद्धये संस्कृतवाङ्मयस्य विभिन्न-शाखानां गभीरं व्यापकं च पाण्डित्यमपेक्षितम्। यावत् संस्कृतशास्त्राणां विशदं गम्भीरं चालोडनं न क्रियेत तावत् भारतीयसंस्कृतेर्विराट्स्वरूपं न प्रकाशेत।

इदानीं संस्कृतशिक्षायाः प्रवाहो विशेषेण व्याकरणसाहित्यादिकतिपयविषयेष्वेव प्रवर्तते। वेदानां तदीयविभिन्नशाखानां वेदान्तदर्शनस्य विभिन्नसम्प्रदायानामागमानां मीमांसाधर्मशास्त्रयोः पुराणेतिहासयोर्जैनबौद्धदर्शनयोश्चाप्यध्ययनाध्यापनप्रबन्धेन भवितव्यम्। अस्माकं पाठ्यक्रमे यद्यप्येतेषां विषयाणां समावेशः कृतः, तथापि यथायथं तदध्ययनाध्यापनप्रबन्धो न समजनि। भारतस्य प्राचीनभाषाणां पालिप्राकृतापभ्रंशानामध्ययनं विना संस्कृतस्याध्ययनमपूर्णतामापद्यते। अत एतासां भाषाणामध्ययनाध्यापनव्यवस्था चानुवेलमपेक्ष्यते।

प्रौढपाण्डित्यसंरक्षणमिवानुसन्धानकार्यमपि महाविद्यालयस्य महत्त्वपूर्णं कार्यम्। भारतीयसंस्कृतेर्निगूढतत्त्वज्ञानमस्माकमनुसन्धानस्य मुख्यमुद्देश्यम्। भारतीयसंस्कृतेर्व्यापकस्वरूप-परिचयाय सेयं संस्कृतिः पुरा यत्र यत्र देशे प्रसृता, सर्वेषामेव तत्तद्देशानामपेक्षितसाहित्यस्य तद्दर्शनस्य चाध्ययनमपेक्षितम्। अस्माकं पूर्वजैस्तत्तद्देशेषु तत्तद्भाषासु च ग्रन्थराशिरनूदितः, अनूदितेषु ग्रन्थेषु तत्र तत्र शताब्दीं यावन्नूतनग्रन्थाः प्रणिन्यिरे। किं बहुना, तत्तद्देशेष्वस्माक प्राचीनाचारपद्धतिरद्यापि कालानुसारं देशानुसारं च विकसितरूपेण व्याप्ता वर्तते। तदध्ययनेन वयं स्वस्याः प्राचीनाचारपरम्पराया एकेन विशिष्टेन रूपेण परिचिता भवेम। तत्परिचयं विना-ऽस्माकमनुसन्धानमपूर्णमेवावतिष्ठेत। एतदर्थमेका बृहती सुविचारिता च योजनाऽपेक्ष्यते, ययाऽयं महाविद्यालयो दक्षिणपूर्वेशियाखण्डस्य प्राचीनवाङ्मयस्य तत्रत्यसंस्कृतेश्चानुसन्धानकेन्द्रं निर्मी-येत। एतदर्थमस्माभिरनुसन्धातारो विद्वांसो नियोक्तव्याः, प्रकृष्टप्रज्ञाजुषां विदुषां सांस्कृतिकमण्डलं च तत्तद्देशेषु प्रेषणीयम्, विशिष्टच्छात्रवृत्तिसमवेताश्छात्राश्चाध्ययनार्थं तत्र प्रहेयाः। अस्मिन्ना-योजने बृहत्तरभारतस्य प्रमुखभाषाणां ज्ञानमावश्यकम्। अतोऽस्माभिर्जर्मन-फ्रेंच-रशियन-आदि-भाषाभिः साकं चीन-भोट-ब्रह्मदेश-सिंहलप्रभृतिदेशभाषाणां शिक्षणप्रबन्धोऽपि विधातव्यः। अस्माभिरेतदनुसन्धानकेन्द्रमेतादृक् साधनसंपन्नं निर्मीयेत यत्र पाश्चात्त्यानां गवेषकाणां कृतेऽप्यनु-सन्धानसामग्री सुलभा भवेत्। इत्थं वयं तां लोकविश्रुतां परम्परामुज्जीवयिष्यामः, या परश्शता-ब्दीतः पूर्वं तक्षशिलानालन्दाविश्वविद्यालयैः स्थापिता।

अनुसन्धानकार्यसंपादनाय दुर्लभानाममूल्यानां च ग्रन्थानामन्वेषणमत्यावश्यकम्। भारतस्य विभिन्नस्थानेषु विभिन्नशास्त्राणां विभिन्नप्रस्थानानामुद्भवो विकासश्चाभूत्। तेषां शास्त्राणामध्ययनाध्यापनं पण्डितानां कुलेषु प्राचलत्। पण्डितानां लघुकाया गृहा एव विद्यालया ग्रन्थालयाश्चासन्। वंशपरम्परागताध्ययनप्रणाल्या विच्छेदेन ते ग्रन्थाः क्रमशो विलुप्यन्ते। शासनेन तेषां ग्रन्थानां संग्रहायाऽऽयोजनं कर्तव्यम्। अन्यथा गच्छता कालेन ते ग्रन्थाश्चिराय विलुप्येरन्।

अस्माकं पारतन्त्र्ये देशस्यामूल्यो ग्रन्थनिधिर्विदेशं प्रस्थितः, अद्याप्यसौ विदेशीयग्रन्था-लयानां श्रियं वर्द्धयति। इदानीं तं परावर्तयितुं प्रयत्नानुष्ठानमावश्यकम्। सरस्वतीभवनग्रन्थालयं दक्षिणपूर्वेशियाखण्डस्य प्रमुखगवेषणाप्रतिष्ठानं विधातुमिदमावश्यकं यदत्र देशीयविदेशीयपुस्त-कालयेषु सुरक्षितानां दुर्लभग्रन्थानां छायाचित्राणि संगृहीतानि स्युः। एतदप्यावश्यकं यद्देशेषु विदेशेषु चाद्यावधि मुद्रितानां प्राच्यविद्योपयोगिनां सर्वेषां ग्रन्थानां संग्रहो भवेत्। एतदर्थं

पुस्तकालयभवनस्याधिकतरो विकासोऽपेक्षितः । एतत्सर्वं कार्यजातं विशिष्टराजकीयसाहाय्यमन्तरा दुष्करम् ।

अप्रकाशितानां दुर्लभानां च ग्रन्थानां प्रकाशनस्य संपादनस्य च कार्यं योजनापूर्वकमनुष्ठेयम् । संस्कृतग्रन्थानां पुरातनाः प्रकाशका अपि व्यापारिकदृष्ट्याऽल्पलाभेन नव्यानां संस्कृतग्रन्थानां प्रकाशनकार्याद् व्यरज्यन्त । कथञ्चित् प्रकाशिता अपि ग्रन्था: पुनर्नैव प्रकाश्यन्ते । एवं स्थिते विशिष्टमध्ययनं दूरमास्ताम्, उच्चकक्षासु पाठ्यत्वेन निर्धारितानां प्रभूतानां ग्रन्थानां सौलभ्यं दुर्घटम् । सरस्वतीभवनस्य हस्तलिखितविभागे शतशोऽमूल्या ग्रन्था: सुरक्षिताः । एषां ग्रन्थानाम्, हस्तलिखितग्रन्थानां विस्तृतविवरणात्मकस्य सूचीपत्रस्य, पूर्वप्रकाशितानां महत्त्वपूर्णानां च ग्रन्थानां प्रकाशनं संपादनं चावश्यमपेक्षितम् । एतत्कार्यानुष्ठानायाऽत्रत्यो वर्तमानकालिको धनराशिरत्यन्तमल्पः । एतदर्थं विपुलो निधिरपेक्षितः ।

अतीतशताब्दीद्वये यूरोपीयदेशेषु ज्ञानविज्ञानशाखानामत्यधिको विस्तारः समजनि । तस्य नव्यज्ञानविज्ञानस्य परिचयं विना संस्कृतविश्वविद्यालयस्योद्देश्यं न सेत्स्यति । एतदर्थं संस्कृते आधुनिकपाश्चात्यविज्ञानस्य, गणितस्य, दर्शनस्य, मनोविज्ञानस्य, भाषाविज्ञानस्य, चिकित्साशास्त्रस्य, समाजशास्त्रस्य, राजशास्त्रस्य, अर्थशास्त्रस्य च ग्रन्थानां प्रामाणिकोऽनुवाद आवश्यकः । एषु विषयेषु मौलिकग्रन्थानामपि प्रणयनमावश्यकम् । संस्कृतवाङ्मयस्य मौलिकतत्त्वानामुदात्तानामुदाराणां च भावानां सार्वजनीनः प्रचारोऽपेक्षितः । एतत्सर्वं तदैव संभवेद् यदा जनभाषासु विशेषेण राष्ट्रभाषायां संस्कृतस्योत्कृष्टग्रन्था: सारल्येनानूदिताः स्युः । इमानि कार्याण्यस्माभिर्विभिन्नासु ग्रन्थमालासु प्रकाशितव्यानि ।

प्रकाशनानुसन्धानयोः कृते स्वतन्त्रस्यैकस्य मुद्रणालयस्यावश्यकता वर्तते । एतदभावेऽस्माभिः प्रतिपदं काठिन्यमनुभूयते । योजनाबद्धं नियतं च प्रकाशनमात्मीयमुद्रणालयमन्तरा सुचारुतया न संपादयितुं शक्यते ।

अयं महाविद्यालयः संस्कृतविश्वविद्यालयत्वेनाचिरमेव परिणतो भविता । दृढं विश्वसिमो यदयं संस्कृतविश्वविद्यालयः संस्कृतसाहित्यस्य भारतीयसंस्कृतेश्च सर्वाङ्गीणां समुन्नतिं संपादयिष्यति । तक्षशिलानालन्दाविश्वविद्यालयवदेष संस्कृतविश्वविद्यालयो विशालसंस्कृतवाङ्मयव्यापकाध्ययनस्य, अनुसन्धानस्य, भारतीयसंस्कृतिसंरक्षणस्य च प्रधानं प्रतिष्ठानं भवेत् । एवमयं न केवलमेशियामहादेशस्य, प्रत्युताखिलभूमण्डलस्य जिज्ञासुविदुषामाकर्षणकेन्द्रं संपद्येत ।

अन्ते च वयमभ्यागतेभ्यस्तत्रभवद्भ्यो महानुभावेभ्यो महामान्यराज्यपालश्रीमुंशी-महोदयेभ्यः, संमान्यशिक्षामन्त्रिश्रीहरगोविन्दसिंहमहोदयेभ्यः, शिक्षासंचालकेभ्यः श्रीचन्द्रमोहन-नाथचकमहोदयेभ्यः, अन्येभ्यश्चागतेभ्यो विद्वद्भ्यो नागरिकेभ्यश्च धन्यवादान् वितरन्तो भगवन्तं भूतभावनं श्रीकाशीविश्वेश्वरं प्रार्थयामहे यदसौ योजनानामाशा संपूर्तयेऽस्मासु बलं क्षमता चादधीत । इति शम् ॥

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ॥

ॐ शान्तिः, शान्तिः, शान्तिः ॥

---

# संस्कृतविश्वपरिषदश्चतुर्थमधिवेशनम्

व्र० व० द्वि०

संस्कृतविश्वपरिषदश्चतुर्थमधिवेशनं दक्षिणभारते सुप्रसिद्धाया तीर्थस्थल्या निरुपतिनगर्यां कार्तिककृष्णद्वादशीशुक्रवासरतः कार्तिककृष्णचतुर्दशीरविवासरपर्यन्तं (११-१३ नवम्बर, १९५५ ई०) महता समारोहेण समजायत। अस्यास्तृतीयमधिवेशनं १९५४ ई० वर्षे नागपुरनगरे संजातमासीत्। विहारप्रान्तस्य पटनानगरे विश्वपरिषदश्चतुर्थमधिवेशनं भविष्यतीति १९५५ ई०वर्षस्य मध्यभागे वृत्तपत्रैर्वार्ता प्रचारिता, किन्तु मुम्बापुरीतः प्रकाशिताया १९५५ ई०वर्षस्य जुलाई-अगस्तमासीयाया २५-२६ सख्याङ्किताया भारतीयविद्याभवनपत्रिकाया परिपत्रमेकं प्रकाशितमभूत्। तेन च परिज्ञातमस्मिन् वर्षेऽधिवेशनमान्ध्रप्रदेशे तिरुपतिक्षेत्रे नवम्बरमासस्य ११-१२ दिनाङ्कयोर्भवितेति। एतदर्थमान्ध्रप्रशासनेन स्वागतसमितिरेका निर्मिता, यस्याः प्रधान आन्ध्रप्रान्तराजस्वमन्त्री श्रीके०चन्द्रमौलिशर्मा, मन्त्री च तिरुमलैतिरुपतिदेवस्थानसमितेः प्रबन्धकः श्रीसी०अण्णारावमहोदयो निर्वाचितः। २६ संख्याङ्कितायामक्टूबरमासीयाया भवनपत्रिकाया विश्वपरिषदः प्रधानमन्त्रिणः श्रीज०ह०दवेमहोदयस्य निबन्ध एकः प्रकाशितः, यत्र हि तिरुपतितीर्थस्य परिचय इतिहासश्चासीत्। तत्रोत्तरप्रदेशीयप्रशासनेन ज्ञानपुरतः काशीराजमहाविद्यालयसंस्कृतविभागाध्यक्षो डा०जे०के०बलबीरमहोदयः, वाराणसीतश्चोत्तरप्रदेशीयसंस्कृतपाठशालाना निरीक्षकमहोदयः श्रीरामनरेशमिश्रः, अस्य विवरणस्य लेखकश्चास्मिन्नधिवेशने स्वप्रतिनिधित्वेन प्रेषिताः।

अस्मिन्नधिवेशने भारतस्य सर्वेभ्यः प्रदेशेभ्यः सार्द्धैकसहस्रं प्रतिनिधय उपस्थिता आसन्। आन्ध्र-मद्रास-मैसूरराज्येभ्य आगताना प्रतिनिधीना संख्या तत्र बहुलाऽऽसीत्। विगतेष्वधिवेशनेषु प्रतिनिधीना सख्या पञ्चशतीं नातिक्रान्ता। अचिन्तितस्याभूतपूर्वस्यास्य जनसंमर्दस्यावासभोजनयोर्व्यवस्था विधाय स्वागतसमित्या नूनमतुलनीय उत्साहः, स्वकीया प्रबन्धचातुरी च प्रदर्शिता। तिरुपतिविश्वविद्यालयभवनेषु तच्छात्रावासभवनेषु च दक्षिणभारतीयानामुत्तरभारतीयाना चावासभोजनयोः पृथक् पृथगायोजनमासीत्। दक्षिणभारतीयानामुत्तरभारतीयाना च भोजने परिदृश्यमानमतीव वैभिन्न्यमवलोक्यैव तदायोजनमक्रियत, भाषा तु तत्रोपस्थि-

तानां सर्वेषा संस्कृतमेवासीत्। अत्र प्राचीनविद्याविद्वांसः प्राचीनभूषाभूषिताः सन्त आधुनिक-वेषभूषाभूषितैरर्वाचीनैः संस्कृतप्रणयिभिः समभिलषितिति महद्वैशिष्ट्यं नाम सस्कृतपरिषदः। महिला अपि तत्र प्रतिनिधिरूपेण प्रेक्षकरूपेण चोपस्थिता आसन्।

कार्तिककृष्णद्वादश्या ( ११-११-५५ ) पूर्वाह्णे १० वादनवेलाया परिषदः कार्याध्यक्षाः श्रीमुंशीमहोदयाः श्रीवेङ्कटेश्वरविश्वविद्यालयविशालसभागृहे सस्कृतादिभाषासु हस्तलिखिताना ग्रन्थाना प्रदर्शनस्योद्घाटनमकार्षुः। अत्र प्रदर्शने हस्तलिखितग्रन्थाः, ताम्रपत्राणि, चित्रप्रतिलिपयः, प्राचीनकलाकृतयः, बहुमूल्यानि नाणकानि च प्रदर्शितान्यासन्। तत्राद्भुतमेकं तालपत्रमयं भगवद्गीतापुस्तकमप्यासीत्, यद्धि पूगीफलप्रमाणं रुद्राक्षमनुकुर्वत्सु समानेष्वष्टादशविभागेषु मालारूपेण प्रोतमासीत्। अत्र प्रतिखण्डमध्याय एको लिखित आसीत् सुसूक्ष्मैर्ग्रन्थाक्षरैः। उद्घाटनभाषणे श्रीमुशीमहोदयैरुक्तम्—

"समस्ते भारते संस्कृते तदितरभाषासु च वर्तमानानि हस्तलिखितपुस्तकानि विकीर्णानि वर्तन्ते, उपदीकाभिश्चाहारीक्रियन्ते। भारतीयविद्याभवनस्य नियामकैर्दुर्लभलिपि-ग्रन्थाना प्राप्तेः पूर्वं कीटनष्टग्रन्थाना शकटचतुष्टयवाह्या सामग्री प्रवाहिता। तेषा ग्रन्थाना प्रणाशात् कियान् ज्ञानराशिरस्माभिर्विलोपितः ! सर्वेषामस्माकमेतत्कर्तव्यं भवति यत् सर्वेऽपि लिपिग्रन्थस्वामिनः ग्रन्थसंरक्षणाय साग्रहं प्रेरयितव्या इति। कौटिलीयार्थशास्त्रस्यैकैव पुस्तिका कस्यचिद् गृहादुपलब्धा, सा चेत् प्राणंक्ष्यद् बहूमूल्यः स ग्रन्थो व्यलुप्स्यत्। अतोऽहं ब्रवीमि वेङ्कटेश्वरविश्वविद्यालयोऽयमान्ध्रप्रदेशप्राप्यान् संस्कृत-तमिल-तेलुगुभाषा-लिपिग्रन्थानासाद्य तान् निश्चिते आलये सुरक्षितान् कारयेत्" इति।

तस्मिन्नेव दिने (११-११-५५) अपराह्णे पञ्चवादनवेलाया वेङ्कटेश्वरविश्वविद्यालयस्य प्राङ्गण उपकल्पिते प्राचीनान्ध्रकलापद्धत्या स्वलङ्कृते मण्डपे परिषदो महाधिवेशनं प्रारभ्यत। तदा विंशतिसहस्रेभ्योऽधिका जनास्तत्रोपस्थिता आसन्। राष्ट्रपतिश्रीराजेन्द्रप्रसादमहोदयाः, उत्तरप्रदेशान्ध्रमुम्बापुरीराज्यपालाः, आन्ध्र-हैदराबाद-मैसूरमुख्यमन्त्रिणः, मध्यप्रदेश-मद्रासशिक्षा-मन्त्रिणः, लोकसभोपसभापतयः श्रीअनन्तशयनाय्यङ्गारमहोदयाः, भारतमुख्यन्यायालयस्य भूतपूर्वमुख्यन्यायाधीशाः श्रीपतञ्जलिशास्त्रिणः, मद्रासोच्चन्यायालयस्य प्रमुखन्यायाधीशाः श्रीराज-मन्नारमहाशयाः, श्रीसञ्जीवरेड्डी-श्रीकालावेङ्कटराव-श्रीचन्द्रमौलिशर्माणोऽन्ये चान्ध्रमन्त्रिणः, श्रीअण्णारावप्रभृतयो महानुभावाश्च व्याख्यानपीठमलङ्कृतवन्तः।

महाधिवेशनस्य प्रारम्भो वेदपाठमनु समपद्यत। प्रथम स्वागतसमितिसभापतिभिः श्रीचन्द्रमौलिशर्ममहोदयै राष्ट्रपतीना कण्ठे सुमनोमाला संन्यवेश्यत। आन्ध्रराज्यपालाः श्रीत्रिवेदि-महाशयाः स्वीयेऽल्पे संस्कृतभाषणे संस्कृतं भारतप्राणरूपमिति ख्यापयन्तो मान्यान् राष्ट्रपती-नाध्यक्षग्रहणाय प्रार्थयन्त, "परिषदियं संस्कृतस्य प्रसाराय स्थापिता, अस्मद्राष्ट्रपतयश्च प्रारम्भत एव तदध्यक्षा इति सुतरा समुचितं भवति" इति च स्वीय प्रस्तावमुपपादयन्तस्तेऽवोचन्। प्रस्तावममुमान्ध्रमुखमन्त्रिणः श्रीगोपालरेड्डीमहाशयाः समर्थितवन्तः। राष्ट्रपतिभिः श्रीराजेन्द्रप्रसाद-महाभागैराध्यक्ष्ये स्वीकृते तदनु श्रीके०चन्द्रमौलिशर्माणः स्वागतसमितेरध्यक्षा अध्यक्षमहोदयस्य प्रतिनिधीना च स्वागतं वाचयन्तोऽवदन्—

"इदानीमान्ध्रदेशे तिरुपतिक्षेत्रं दक्षिणभारतस्य काशीपुरीति ख्याति प्राप्तमस्ति। आन्ध्रदेशेऽतीते काले विक्रमशीलयोर्विग्रहरूपः श्रीकृष्णदेवराय., वेदान्तपारदृश्वानो विद्यारण्यस्वामिनः, दिव्यसंगीतगायकाः श्रीत्यागरायार्याः, एवं गङ्गादेवी-तिरुमलाम्बा रामभद्राम्बाप्रभृतयः संस्कृतस्यानन्यभक्ताः संस्कृतमभ्यवर्द्धयन्। आन्ध्रवासिनो भावुका आदर्शप्रियाश्च भवन्ति। तेनैव गुणनिचयेन ते अजन्ता-एलोरा-अमरावतीप्रभृतिषु स्थलेष्वमरकीर्तीः पाषाणमूर्ती-रालेख्यानि च विरचयितुं शक्ता अभूवन्। संस्कृतस्य दीप्तिमता प्रभावेण प्रथमत एवान्ध्राः प्रभाविता अभूवन्, येनोत्तरदक्षिणयो रम्यः संस्कृतिसङ्गमोऽत्र निष्पन्नोऽभूत्। पालिभाषाया जन्मभूमिरान्ध्रदेश इत्युच्यते। आन्ध्रद्वारा संस्कृतसभ्यता श्याम सुमात्रा जावा बालिप्रभृतिद्वीपेषु प्रतिष्ठापिता। इदानीमप्यान्ध्रभाषा संस्कृतसंस्कारान् दधाति।

"संस्कृतभाषाऽस्माकमैक्यस्य हेतुः। भारतीयाना मनस्सु तयैवैक्यभावो दृढीकृतः। अत एव स्वतन्त्रभारते प्रस्फुरन्तीना नूतनशक्तीना स्वारस्यपूर्णदृढीभावापादने संस्कृतसंस्काराणा पुनः प्रतिष्ठापनं नितरामावश्यकम्। अद्यतनीनसर्वकारस्य सक्रियं सहकारमन्तरा संस्कृतं पुनर्जीवनं संप्राप्तुं न शक्नुयात्। सर्वकारेण विद्यालय-महाविद्यालय-विश्वविद्यालयाना पाठ्यक्रमे संस्कृतस्योचितं स्थानं दातव्यमेव। संस्कृतमन्तरा न काऽपि समृद्धा संस्कारपूर्णा च भाषा दृश्यते, याऽर्वाचीनभाषाणा शब्दराशिसम्पदमभिवर्द्धयितुं प्रभवेत्। परिभाषानिचयः, अभिव्यक्तिलाघवम्, रचनास्पष्टत्वं चैते गुणा भाषासमृद्धा कर्तुमनिवार्या भवन्ति। संस्कृते ते सर्वेऽपि परिपाकं प्राप्ता भवन्ति" इति।

आङ्गलभाषया प्रदत्तं स्वागतसमित्यध्यक्षभाषणमिदं संस्कृतभाषया ललितया श्रीवेङ्कटेश्वर-दीक्षितमहोदयैर्यथावदनूदितम्। तदनु परिषदः संयुक्तप्रधानमन्त्रिणः श्रीवेङ्कटेश्वरदीक्षितमहोदया

आशीर्वादपुरःसरान् साफल्यसूचकान् संदेशानपठन्। श्रीमन्तो महामहिमानः श्रीकाञ्चीकामकोटिपीठाधिपा जगद्गुरवः श्रीशङ्कराचार्याः, श्रीमन्तो भारतीयराज्यप्रधानमन्त्रिणः पं०जवाहरलालनेहरूमहाशयाः, भारतीया वैदेशिकाश्च विश्वविद्यालयाः, अन्ये च विशिष्टाः प्राच्यविद्याविद्वांसः स्वीयं सन्देशं प्रेषयन्ति स्म।

तदनु परिषत्प्रधानमन्त्रिभिः श्रीज०इ०दवेमहाशयैः संस्कृतविश्वपरिषद इतिवृत्तमुपस्थापितम्। आद्ये सोमनाथाधिवेशने ततश्च द्वितीये वाराणसीयेऽधिवेशने, तृतीये नागपुराधिवेशने च संपन्नं कार्यं विमृश्य दवेमहाशयैर्नागपुराधिवेशनादनन्तरं संपादितः परिषदः कार्यकलापो निवेदितः। तैर्दर्शितं यत्साम्प्रतं परिषदः २४ प्रादेशिक्यः शाखाः, १६६ स्थानीयशाखाः, ६८ संस्कृतमण्डलानि, ८४ केन्द्राणि च सन्ति। एष्वमेरिकादेशीया शाखैका पञ्चविंशतिकेन्द्रयुता, अन्या च जापानदेशीयाप्यन्तर्भूते। भारते प्राथमिकसंस्कृतप्रचारपरीक्षासंचालकानां भिन्नभिन्नपरीक्षापीठानामेकसूत्रतासंपादनायोद्यमः प्रारब्धः। एतादृश्योऽष्टौ संस्था विश्वपरिषदा संलग्नाः सन्ति, यासां परीक्षाश्च विश्वपरिषदा प्रमाणिताः। प्राथमिकपरीक्षोपयोगीनि पाठ्यपुस्तकानि रचयितुमुद्यमोऽपि विहितः। तेषां रचना संस्कृतशिक्षणस्य रात्रिपाठशालास्ववकाशकक्षासु च भृशमुपकुर्यादित्याशास्यते। अन्ते दवेमहाशयैर्विविधराज्यप्रशासनैः संस्कृतप्रसारस्य लोकप्रियत्वं संपादयितुं कृताः प्रयत्नाः सूचिताः। परिषद उद्घाटयितॄन् भारतीयगणराज्याधिपान् प्रति स्वीयं कार्तज्ञमाविष्कुर्वद्भिस्तैर्न्यवेदि यत् तेषामस्मन्मध्येऽद्योपस्थितिरेव संस्कृतप्रणयिनामस्माकं महते उत्साहाय भवति, तेषामनतिसाधारणं संस्कृतप्रणयं च द्योतयति।

अथाध्यक्षीयं भाषणं करिष्यन्तः करतलध्वनिनिनादेन बहुकालपर्यन्तं श्रोतृगणैः संमानिता डा०राजेन्द्रप्रसादमहाभागा अवोचन्—

"संस्कृतं नाम आधारो भारतीयायाः संस्कृतेः स्फूर्तेश्च, आयतनमशेषस्य पुरातनमहिम्नः, निधानमखिलविमर्शसंपदः, मन्दिरं चाध्यात्मिकानामाकाङ्क्षाणाम्। पालि च प्राकृतं चेति भाषाद्वयेन ज्ञानभाण्डारायमाणं संस्कृतं परिपूर्यत इति वक्तुं शक्यते। विख्यातानां भारतीयदर्शनानां ज्ञानस्य, ललितानां संगीतनृत्यादीनां भारतीयकलानामनुसन्धानस्य, अस्मदीये दीर्घतमे इतिहासे विद्यमानानां रिक्तस्थलानां संयोजनस्य च कृते संस्कृतावगमो नितान्तमपेक्षितं साधनम्। परश्शतैः पाश्चात्त्यमनीषिभिरपि समुपासिता सेयं गीर्वाणभाषा न केवलमस्माकं विमर्शजातानां कलानां च विषये पुरातनज्ञानस्य खनिरूपा, परन्त्वस्मदीयराष्ट्रानुबन्धिनीनामाकाङ्क्षाणां सांस्कृतिकप्रथानां च प्रधाना स्रोतोवहापि। अपि च, भवति

साऽऽधुनिकाना भारतीयाना भाषाणा जननी प्रेरणाप्रदायिनी च। दक्षिणभारतीयाश्चन्त्यो भाषा अपि शब्दकोशस्य बहुलमंशं संस्कृतभाषात एवाऽलभन्। पुरा परमार्थेनो गीर्वाणवागेव व्यराजत राष्ट्रभाषापदव्याम्। अद्यतन्यां नितान्तपरिवर्तिनायां परिस्थितावपि संस्कृताध्ययनाद् राष्ट्रस्य बहुविधो लाभः संजायेतैव। आसीत्पुरा सा विशालस्य भारतदेशस्यैक्यापादिका, अस्ति च सा शक्तिस्तस्या साम्प्रतमपि" इति।

तदेतदाङ्गलभाषामयं भाषणं ललितया संस्कृतगिरा श्रीवेङ्कटेश्वरदीक्षितमहोदयैरनूदितम्। तत आङ्गलभाषया श्रीमुंशीमहोदयैरध्यक्षप्रवराणामाभारप्रदर्शनं कृतम्। तदनु च तेलुगुभाषया तस्य समर्थनं हैदराबादराज्यमुख्यमन्त्रिभिः श्रीरामकृष्णरायमहाशयैः कृतम्। भाषणद्वयमपीदं श्रीवेङ्कटेश्वरदीक्षिता अनुकालमेव प्रतिवाक्यं सुलभया शैल्या संस्कृतभाषयाऽन्ववदन्। अवसित एवं हर्षोल्लासपूरप्लावितः प्रथमदिवसीयः कार्यक्रमः।

द्वितीयदिनेऽपराह्णे द्विवादनसमये विश्वपरिषत्संसदध्यक्षाणां श्रीमुंशीमहोदयानामाध्यक्ष्ये सार्वजनीनमधिवेशनं प्रारभ्यत। स्वकीये प्रारम्भिकभाषणे तैरुक्तम्—

"यदीष्यते भारतवर्षमिदं स्वचैतन्यानुगुणं स्यात्, स्वमहत्त्वानुरूपां प्रतिष्ठां च प्राप्नुयादिति; तर्ह्यस्माकं सांस्कृतिकस्य नैतिकस्याध्यात्मिकस्य च प्रभावस्य योनिः संस्कृतभाषेयं परिपोषणीया। इदमप्यस्माभिरवगन्तव्यं यत् संस्कृतप्रभावसंरक्षिका प्राचीनजीवनपद्धतिरधुना झटित्येव विलयं प्राप्नोति। अतः प्रश्नोऽयमस्य देशस्य पुरतः समुपस्थितो यत्कथं नामास्मत्प्राणभूतस्य संस्कृतस्य पुनरुज्जीवनं स्यात्।

"परम्परागता संस्कृतपठनपाठनप्रणाली ह्रासं भजत इत्यत्र नास्ति संदेहः। तत्संरक्षका धार्मिकजनाः, धनाढ्याः, राजानश्चापि क्रमेण लोपं भजन्ते। यत्तैः कृतमासीत् तदाधुनिकशासनाधिकारिभिः, साधारणजनतया, देवस्थानैर्देवायतनैश्च कर्तव्यम्। पाठशालाश्च यावत् संस्कृतमवलम्ब्य पाठयद्भिर्विश्वविद्यालयैः सह न संबध्यन्ते, यावच्च पाठशालासु प्रातशिक्षाणां शास्त्रिणां सर्वेऽपि जीविकामार्गा अपावृता न स्युस्तावन्न जीवेयुः।

"इदमप्यस्माभिरवगन्तव्यं यन्न केवलं प्राचीनपठनपाठनरीतिः परिरक्षणीया, परन्तु तस्याः पाठ्यक्रमस्तथा नवीकरणीयो यथा शास्त्रिणः प्रगतिशीलेऽस्मिन् संसारे गतिविमुखा न भवेयुः। पण्डिताः प्राध्यापका इति विधाद्वयरूपः परस्परविरोध एव संस्कृतस्योपेक्षाया मुख्यो हेतुः। विरोधोऽयं परिहार्य उभयगुणान्वितक्रमबद्धपाठ्यक्रमनिर्धारणेन।

"अस्त्येक एवोपायः संस्कृतस्य स्थैर्यसंपादने, स च पाञ्चवार्षिकयोजनाया तदर्थं द्रव्यपरिकल्पनं नाम। तेन हि केन्द्रीयप्रान्तीयशासनानि देशेऽस्मिन् त्रिचतुरान् संस्कृतमेवावलम्ब्य पाठयतः संयोजितपाठशालान् संस्कृतविश्वविद्यालयान् स्थापयितुं शक्नुयुः, सर्वेषु विश्वविद्यालयेषु संस्कृतविद्यापीठानि कानिचित् स्थापयेयुः, पाठशालाभ्यः पर्याप्तं द्रव्यं वितरेयुः, अप्रकाशितानां संस्कृतग्रन्थानां संग्रहार्थं प्रकाशनार्थं च द्रव्यं प्रयच्छेयुः, राष्ट्रीयप्राचीनेतिहासप्रमाणसंग्रहालये तादृशं संस्कृतग्रन्थालयमपि स्थापयेयुर्यत्र सर्वेषां हस्तलिखितानां प्रतिकृतयोऽपि संगृह्येरन्" इति।

श्रीमुंशीमहोदयानां भाषणानन्तरं मुम्बापुरीराज्यपालाः श्रीहरिकृष्णमेहताबमहोदयाः प्रस्तावममुं समुपास्थापयन्—

"श्रीसोमनाथक्षेत्रे वाराणस्यां नागपुरे च मिलितेष्वधिवेशनेषु पारितानां प्रस्तावानां मुपोद्बलकत्वेन संस्कृतविश्वपरिषदोऽधिवेशनमिदम्—

१–(क) आन्तरराष्ट्रीयविषयनिरूपकस्य पञ्चशीलसिद्धान्तस्य बहुभिर्देशैः स्वीकरणं स्वागतवाचाभिनन्दति, यो हि सिद्धान्तो भारतीयपताकारूपस्य नैतिकाध्यात्मिकमाहात्म्यस्य श्रेष्ठतामावहति; यस्य च संस्कृतं भवति भाण्डारमुपकरणं च।

(ख) अधिवेशनमिदं ज्ञापयति च भूमण्डलस्य निखिलान् विश्वविद्यालयान् यत् संस्कृताध्ययनप्रवर्धनायोपायस्वीकरणमवश्यं कर्तव्यमिति, येन तत्पताकारूपं नैतिकाध्यात्मिकमहत्त्वं सर्वेषां देशानां फलोपेतं रिक्थं भवेत्।

२–ज्ञापयति प्रादेशिकान् शासकान् विश्वविद्यालयांश्च यन्माध्यमिककक्षासु, विश्वविद्यालयानुबन्धिनीषु प्राथमिकास्ववस्थास्वपि संस्कृतमनिवार्यत्वेन संस्थापनीयमिति। येन भारतीयरिक्थरूपस्य तस्य गुणग्रहणमस्मद्दैशिकदार्ढ्यस्य प्रवर्द्धनं कर्तुम्, आधुनिकपरिस्थित्यपेक्षां पूरयितुम्, भारतीयविज्ञानशक्त्यनुरोधिन्या पद्धत्या तदीयसंस्कृतेरभिवर्द्धनोद्यमेऽन्वेतुम्, भारतीयभूमिकारूपाणां नैतिकाध्यात्मिकतत्त्वानां माहात्म्योद्धरणे उपकारमाधातुं च तरुणाः स्फूर्तिं लभेरन्; येन ह्यद्यतनसंमर्दः संक्षोभश्च श्रद्धां शान्तिं चाधारीकृत्य स्थितस्य मानवीयैक्यभावस्य स्वबोधेन प्रतिनिहितौ भवतः।

३–प्रार्थयते भारतीयशासकान् यत्संपूर्णे भारते संस्कृताध्ययनस्याभिवृद्धये तत्समीकरणायाङ्गाङ्गिभावोपादानाय चाखिलभारतीयाऽऽयोगस्यायोजनं कर्तव्यमिति।

४-( क ) प्रार्थयते प्रादेशिकानि शासनानि केन्द्रशासनं च यद्बहुषु केन्द्रस्थानेषु संस्कृतविश्व-विद्यालयाः स्थापनीयाः, यैः सह तत्त-प्रदेशिन्यः पाठशालाः संयोज्येरन्।

( ख ) द्वितीयपाञ्चवार्षिकयोजनायां तादृशविश्वविद्यालयानां कृते सामग्री च परिकल्पनीयेति, स्वाधिकारविषयेषु विश्वविद्यालयेषु संस्कृतविभागश्च परिकल्पनीय इति, पाठशालानां संचालनाय हस्तलिखितानां ग्रन्थानां संपाद्य प्रकाशनं कुर्वन्तीनां संस्थानामुपकाराय विशिष्टानां संस्कृतग्रन्थानां प्रकाशनाय च धनसाहाय्यं कर्तव्यमिति च; तथा नियोजयति चाधोनिर्दिष्टसभ्योपेतां समितिमेकामनुरूपानधिकारिण उपसर्तुम्। ते च सभ्या एते—१. श्रीम०पतञ्जलिशास्त्रिणः (प्रमुखाः), २. श्रीना०चन्द्रशेखरार्यमहाशयाः, ३. श्रीमा०अनन्तशयनमय्यङ्गारमहाशयाः, ४. सरदारके०एम०पणिक्करमहाशयाः, ५. श्रीबक्षीटेकचन्द्रमहाशयाः, ६. श्रीज०इ०दवेमहाशयाश्चेति।

५-अधोनिर्दिष्टसभ्योपेतां समितिमेकां नियोक्तुं निश्चिनोति,

( क ) याऽऽधुनिकविद्याशिक्षणप्रणाल्यामभिरूपतां कलयितुं जीविकासंपादनस्य संभावनामापादयितुं च प्रयतेत।

( ख ) तथा साम्प्रदायिकपद्धतेर्नूतनप्रकारेण घटनाविषये विचारपूर्वकमाशयं निवेदयितुम्, विशिष्य नूतनशिक्षापद्धतेः सर्वास्ववस्थासु संस्कृतशिक्षणपद्धतिं विचारयितुं प्रयतेत; या च कुप्पुस्वामिशास्त्रिगवेषणसंस्थया पण्डितफडकेशास्त्रिभिरन्यैश्च परीक्षिता।

( ग ) एवं प्रकृतविषयानुबद्धमन्यदपि विचारयितुं प्रयतेत।

सभ्याः—१. श्रीक०मा०मुंशीमहाशयाः, २. श्रीपतञ्जलिशास्त्रिणः, ३. श्रीसत्यनारायणरावमहाशयाः, ४. डा०श्रीसम्पूर्णानन्दमहाशयाः, ५. श्रीवी०गोपालरेड्डीमहाशयाः, ६. श्रीराजमन्नारमहाशयाः, ७. श्रीगोविन्दमेननमहाशयाः, ८. श्रीवी०रामकृष्णरावमहाशयाः, ९. श्रीसी०सुब्रह्मण्यमहाशयाः, १०. श्रीबद्रीनाथवर्ममहोदयाः, ११. श्रीजगन्नारायणमहोदयाः, १२. श्रीपन्नालालघोसमहोदयाः, १३. श्रीवी०ए० मंडलोईमहोदयाः, १४. श्रीहरसिद्धभाईदिवाटियामहोदयाः, १५. श्रीरामचन्द्रनारायणदाण्डेकरमहाशयाः, १६ श्रीजयन्तकृष्णदवेमहाशयाः, १७. श्रीचन्द्रमौलिशर्मणः, १८. श्रीरमाप्रसन्ननायकाः ( मन्त्रिणः )।

६-विशिष्टकार्यकरणेनाधोनिर्दिष्टानां संस्थानां कार्याणि सुस्पष्टं श्लाघते—

( क ) सर्वास्वप्यवस्थासु संस्कृतशिक्षणमनुसन्धानं चाधिकृत्य विचारं कर्तुं विश्वविद्यालयै-

प्राध्यापकाना संमेलनकरणेन केन्द्रशासनम्, सर्वेष्वपि स्थानेषु प्रदेशेषु संस्कृतस्य स्थान-संपादनेनाखिलभारतीयाकाशवाणीविभागाधिकारिणश्च ।

(ख) बी०ए०कक्षाविभागे प्रधानपाठ्यविषयत्वेन संस्कृतस्य प्रवेशनेन, नियमितसंस्कृतपरीक्षायामुत्तीर्णेभ्य आन्ध्रपण्डितेभ्यस्त्रैवार्षिकवृद्धिप्रदानेनान्ध्रशासनम् ।

(ग) सागरविश्वविद्यालयेन संयोजितस्य संस्कृतमहाविद्यालयस्य रायपुरे संस्थापनेन मध्यप्रदेशशासनम् ।

(घ) १–कुरुक्षेत्रे संस्कृतविश्वविद्यालयस्य स्थापनं कर्तुं स्वीयाभिप्रायप्रकटीकरणेन, २–पण्डितानामुच्चतरपदवीसंपादनेन, ३–तेषां कृते शिक्षणमहाविद्यालयस्थापनेन, ४–हिन्दीपजाबीभाषाशिक्षकाणामुच्चतरोपाधिपरीक्षायां संस्कृतस्यानिवार्यत्वविधानेन, ५–संस्कृतपाठशालानां धनसाहाय्यवितरणेन च पञ्चापशासनम् ।

(ङ) उत्तरप्रदेशविधानसभायां प्रकृताधिवेशनावसरे वाराणसेयसस्कृतविश्वविद्यालयस्य स्थापने स्वीयाशयप्रकटनेनोत्तरप्रदेशशासनम् ।

(च) कलाविभागे उपाधिपरीक्षायामनिवार्यविषयत्वेन सर्वेषां सामान्यसंस्कृतस्य स्थापनेन च लक्ष्मणपुरविश्वविद्यालयम् ।

(घ) संस्कृतविद्यार्थिनां विशिष्टच्छात्रवृत्तिदानेन छात्रालयेषु निःशुल्कभोजनप्रबन्धविधानेन चानन्तशयनदेवस्वम् ।

७-स्वीयां चिन्तां प्रकटयति यद्भारते बहवो विश्वविद्यालया अद्य यावत् संस्कृताध्ययनाय विभागान् स्थानानि वा न संस्थापयन्ति, न वोत्तीर्णशास्त्र्याचार्यपरीक्षाणामुपाधिपरीक्षासूपवेष्टुमुपायान् परिकल्पयन्तीति । प्रार्थयते च सर्वान् विश्वविद्यालयान् सस्कृतवाङ्मयविषये तन्निर्वर्तितायां तदधिष्ठितायां संस्कृतौ विषये च विस्तृतव्याख्यानेभ्यः प्रबन्धः कर्तव्य इति ।

८–सखेदमनुपश्यति यद्देशेऽस्मिन् बहुषु प्रदेशेषु विद्यार्थिनां संख्याह्रास इत्यनेन व्याजेन माध्यमिकपाठशालासु क्रियमाण संस्कृताध्यापकानामुद्वासनम्, ज्ञापयति च तत्संस्थाधिकारिणो यदस्मद्राष्ट्रानुबन्धी विषयोऽयमिति कृत्वाऽनुरूपाणामुपायानां परिकल्पनेन सर्वासु पाठशालासु संस्कृताध्यापनं परिकल्पयन्त्विति ।

९–प्रमाणीकरोति चाधोनिर्दिष्टैः सभ्यैरुपेता समिति यदाधिकारिकमण्डलप्रश्नावल्याः, विशिष्य संस्कृतशिक्षणस्य प्रोत्साहने हिन्दीभाषायाः संस्कृतानुबन्धिविषये चानुरूपं समाधानं कर्तव्य-

मिति। समितेरस्या एते सभ्याः—१. श्रीपतञ्जलिशास्त्रिणः, २. श्रीको०अ० सुब्रह्मण्य-अय्यरमहाशयाः, ३. डा०वी०राघवशर्माणः, ४. श्रीज०ह०दवेमहाशयाश्च।

१०–समाह्वयति सर्वाः शाखाः केन्द्राणि संस्कृताभिमानिनश्च यत् स्वस्वप्रदेशस्थिताः पाठशाला उपकर्तुं पाठशालाद्रव्यसञ्चयसंपादनाय प्रबन्धं कुर्वन्त्विति।

११–निश्चिनोति यत् संस्कृतवाङ्मयाचार्यैर्व्यासवाल्मीकिकालिदासैः संबद्धेषु दिनेषु यथाक्रमं व्यासपूर्णिमा-श्रीरामनवमी-विजयदशमीत्येतेषु राष्ट्रियोत्सवा निर्वर्तनीया इति।

१२–निश्चिनोति च संस्कृते प्रारम्भपरीक्षाः स्थापनीया इति। तथा प्रमाणीकरोति संसदःयत्नानुरूपपाठ्यक्रमनिर्माणाय समितिमेकां योजयितुम्, संसद परीक्षाणां प्रवर्तनाय चेति" इति।

मुम्बापुरीराज्यपालाः श्रीहरेकृष्णमेहतावमहाशयाः प्रस्तावमनुपस्थापयन्त प्रावोचन्—"संस्कृतं धर्मतत्त्वज्ञानयोरेव निरतमिति प्रवादो न सम्यक्। पुरा भारतस्यान्यदेशैर्बहुविधः संबन्ध आसीत्, स च तदानीन्तन्या संस्कृतभाषाया बहुविधसाहित्यमन्तरा नाभविष्यत्" इति। भारतलोकसभाया उपसभापतयः श्रीअनन्तशयनायङ्गारमहाशयाः प्रस्तावं तमन्वमोदन्त। तदनु संस्कृते भाषमाणया श्रीमत्या निर्मलादेव्या, श्रीमनमोहनसिंहमेहतामहोदयैः, श्रीचन्द्रमौलिशर्मभिश्च समर्थिते तस्मिन् एष प्रस्तावः सर्वैरैकमत्येन स्वीकृतः।

तदनन्तरं संसदध्यक्षेष्वन्यकार्यव्यापृततयाऽसंनिहितेषु श्रीअनन्तशयनायङ्गारमहाशयानामाध्यक्ष्ये सभायाः कार्यं रात्रौ ११-३० वादनसमयं यावद् यथापूर्वं प्राचलन्। एतस्मिन् काले षड्विंशतिवक्तृभिः प्रस्तावसमर्थनप्रसङ्गेन स्वीया अभिप्रायास्तत्तत्प्रान्तेषु संस्कृतस्थितिप्रदर्शनपुरःसरं प्रकटिताः। तत्रोत्तरप्रदेशसंस्कृतपाठशालानिरीक्षकैः श्रीरामनरेशमिश्रमहोदयैरुत्तरप्रदेशे संस्कृतशिक्षायाः प्रगतिमनुरुध्य, विशेषत उत्तरप्रदेशस्य द्वितीयपाञ्चवार्षिकयोजनाया देववाण्याः संरक्षणार्थमभिवृद्ध्यर्थं च क्रियमाणं कार्यकलापमभिलक्ष्य गीर्वाणगिरा भाषणमकारि। उत्तरप्रदेशीया द्वितीया पाञ्चवार्षिकी योजना संस्कृतसंबद्धा श्रोतृभिः सबहुमानमभिनन्दिता करतलनिनादेन।

गतेष्वधिवेशनेषु समागतैः प्रतिनिधिभिः स्वीयाभिप्रायप्रकटनायावसरो न लभ्यत इत्यासीत् केषाञ्चिदाक्षेपः। तत्परिमार्जनार्थमस्मिन्नधिवेशने पूर्वनिर्धारितदिनद्वयस्य स्थाने दिनत्रयस्य कार्यक्रमो निर्धारितः। तमनुरुध्य कार्तिककृष्णचतुर्दश्यां रविवासरे (१३-११ ५५ ( प्रातः ६ वादनसमयेऽधिवेशनस्य तृतीयदिवसीयः कार्यक्रमः प्राचलत्। आदौ तावत् श्रीअनन्तशयनायङ्गारमहाशयानाम्, श्रीज०ह०दवेमहाशयानाम्, श्रीचन्द्रमौलिशर्मणा च धन्यवादभाष-

णानि संपन्नानि। तदनु श्रीज०ह०दवेमहाशयैर्वर्षस्यास्य कृते निर्वाचिताना संसदधिकारिणा नामावलिरुद्घोषिता। ततः संस्कृतविश्वपरिषदश्चतुर्थाधिवेशनस्योपसंहारभाषणं कुर्वन्तः श्रीमुंशी-महोदया अवदन्—

"संस्कृतं मृतभाषेति वदन्तः किं वदन्तीति स्वयं न जानन्ति। दिनत्रयात् परःसहस्रं जना यत्स्वरसतः संस्कृतव्याख्यानान्यश्रृण्वन्न तत्सौजन्यवशात्, परमनुपमरसास्वादनलाभादेव। समस्ते जीवने संस्कृतसेवाव्यापृता विद्वांसो व्याख्यानपीठात्तथा संस्कृते व्यवहरन् यथाऽस्मासु बहवः स्वभाषायामाङ्गलादिभाषासु च न व्यवहर्तुं शक्नुयुः। संस्कृतं यथा केचन वदन्ति न तथा मृतभाषेत्यत्रेदमेव निदर्शनम्" इति।

उपसंहारभाषणं कृत्वाऽसंनिहितेषु श्री मुंशीमहाशयेष्वध्यक्षपदं भूपितवत्सु च श्रीअनन्त-शयनायङ्गारमहोदयेषु विभिन्नप्रदेशीया अष्टादश प्रतिनिधयः संस्कृतभाषया स्वस्वप्रदेशीयां संस्कृत-विषयिकीं परिस्थितिं समवर्णयन्। अन्ते च श्रीबालाजिवेङ्कटेश्वरस्य मङ्गलश्लोकं राष्ट्रगीतं चाभव-ताम्। अवसितमेवमधिवेशनमिदम्।

अधिवेशनस्य द्वितीये दिने ( १२-११-५५ ) पूर्वाह्णे न कोऽपि कार्यक्रम आसीत्। उत्तरभारते 'बालाजी' इति नाम्ना प्रसिद्धस्य भगवतो श्रीवेङ्कटेश्वरस्य मन्दिरं तिरुपतिनगरतः क्रोशषट्कं यावद् दूरस्थिते तिरुमलैस्थाने वर्तते। अस्यामवकाशवेलायां देवदर्शनार्थं गन्तव्यमित्य-स्माभिरन्यैश्च बहुभिः प्रतिनिधिभिर्निश्चितम्। तदनुसृत्य श्रीरामनरेशमिश्रमहोदयाः, विन्ध्यप्रदेशे संस्कृतविश्वपरिषत्प्राध्यापकाः श्रीप्रभाकरमिश्रमहोदयाः, अहं च प्रतिनिध्यावासतस्तैल-यानमधिरुह्य तिरुमलैतिरुपतिदेवस्वसंस्थया संचालित तैलयानस्थानमागतवन्तः। अत्र दृष्टाः परश्शतं यात्रिणो देवदर्शनाभिलाषिणः। अनेकैः प्रतिनिधिभिर्विभिन्नप्रान्तीयैर्वार्तालापः संजातः, दृष्टाश्च तत्रैव मद्रपुरीविश्वविद्यालयसंस्कृतविभागाध्यक्षा डा०राघवमहोदयाः। एते महानुभावाः संस्कृतविश्वपरिषदो वाराणसेयाधिवेशने संमिलिताः, अत एवास्माकं परिचिता आसन्। एभ्यो मयैतेषां मद्रपुरीनिवाससङ्केतस्तत्र गृहीतः। तत्रैव दृष्टास्माभिर्लक्ष्मणपुर-विश्वविद्यालयकलाविभागाध्यक्षाः श्रीको०अ०सुब्रह्मण्य-अय्यरमहोदयाः। ततो वयं सर्वे संभूय तिरुमलैदेवस्थानं प्रति प्रस्थितास्तैलयानेन। क्रोशषट्कपरिमितो मार्गः प्रायः शैलारोहणक्रमेणैव प्रवर्तते। ततोऽवरुह्य तैलयानतो नैवेद्यादिकं गृहीत्वा दृष्टमस्माभिर्देवमन्दिरस्य प्रथमं गोपुरम्[१]।

१. उत्तरभारतीयेषु मन्दिरेषु शिखराणि—येषामधस्ताद्धि देवविग्रहः स्थाप्यते—वास्तुकलया मण्डितान्युच्चानि च भवन्ति। तद्विपरीतं द्रविडमन्दिरेषु गोपुरमेव वास्तुकला-

ततः प्रविश्य मन्दिरं मन्दिरवीथिकासु शान्तभावेन तिष्ठन्तं मुहुर्मुहुर्वेङ्कटेश्वरं नमन्तं दर्शकगण-मपश्याम। दक्षिणभारतीयेषु मन्दिरेषु दर्शकानां शान्तचित्तता, पङ्क्तिबद्धता, अनुशासनप्रियता चानुकरणीयाः सन्ति, किन्तु तस्मिन् दिने दृष्टं तत्र किमपि वैपरीत्यम्, तथापि विशाले मन्दिर-प्राङ्गणे पुनरपि संजाता व्यवस्था। मन्दिरस्याभ्यन्तरेषु भागेषु गर्भगृहादिषु चैक एव मार्गो रज्जुभिर्द्विधा विभक्तो दर्शकानां गमनागमनसौविध्यं करोति स्म। अन्ततो भगवतो श्रीवेङ्कटा-चलनाथस्य शङ्खचक्राद्यङ्कित विग्रहं दृष्ट्वा कृतार्थीकृते चक्षुषी। पूर्वं शङ्कररूपधारी भगवान् श्रीरामानुजाचार्यस्य प्रार्थनयोर्ध्वपुण्ड्राङ्कितं विष्णुविग्रहं धारितवानिति श्रूयते।

अधिवेशनस्य तृतीयदिवसस्य पूर्वार्द्धः संस्कृतपत्रिकासंपादकैरन्यैश्च प्रतिनिधिभिः परि-चयापादनमुखेन यापितः। वेङ्कटेश्वरशोधसंस्थानस्य दर्शनं तु तत्रत्याधिकारिणां समेषामधिवेशने व्यापृतत्वान्नैव संपन्नम्। भूयांस उत्तरभारतीया विशेषेण आसामप्रान्तीयाः प्रतिनिधयोऽत्रागत्य रामेश्वरादितीर्थानां यात्रामविधाय पुनरुत्तरभारते न गन्तव्यमिति विचारमाविष्कुर्वन्तोऽवालोक्यन्त। हैदराबादविश्वविद्यालयसंस्कृतविभागाध्यक्षाः[1] श्रीआर्येन्द्रशर्माणोऽप्यत्रागत्य दक्षिणभारतस्य प्रसिद्धानां स्थानानामवश्यमेव यात्रा विधेयेति स्वीयाभिप्रायं प्राकटयन्। माननीयानां श्रीराम-नरेशमिश्रमहोदयानामपि विचारसरणिस्तमेव पन्थानमनुधावन्ती दृष्टा। अतो मया च तैश्च तिरुपतितो रामेश्वराय प्रस्थातव्यमिति निश्चितम्। तिरुपतिवाष्पयानस्थानमागत्य मद्रपुरी-गामिवाष्पयानस्यागमने विलम्बमवगम्य मयि तन्निकट एव स्थितस्य श्रीगोविन्दराजमन्दिरदर्श-नस्य मनीषा समुत्पन्ना, दृष्टं च तन्मन्दिरं द्रविडशैलीमुखरायमाणम्। तत्र वर्तते पाषाणनिर्मित एको मण्डपः, यो हि स्वरूपतस्ताड्यमाने सति शब्दतश्च लौहनिर्मितिभ्रान्तिमुत्पादयति। मद्रपुरी-

---

मण्डितमुच्छ्रितं च भवति। देवविग्रहस्योपरि तत्र शिखराणि न स्थाप्यन्ते। तंजोर-नगरस्थशिवमन्दिरमेव मयाऽस्य नियमस्यापवादरूपत्वेनावलोकितम्। तत्र गोपुरापेक्षया शिखरमेवातीव सुरम्यमत्युच्छ्रायसमन्वितं चावलोक्यते।

१. एभिर्महानुभावैर्विचित्रः संयोग आसीन्मम। प्रतिनिध्यावासस्य यस्यां शालायामेते निवसन्ति स्म, तत्रैव ममापि रात्रौ ११ वादनसमये व्यवस्थापकैर्वासः कल्पितः। उत्तर-प्रदेशीयबदायूँमण्डलनिवासिनामेतेषां कनिष्ठभ्रातरः श्रीद्विजेन्द्रनाथशर्माणो वाराणसेय-राजकीयसंस्कृतमहाविद्यालये साहित्याध्यापकाः सन्ति। एवं नामतो पूर्वं परिचिताऽप्येते महानुभावा यथार्थतो द्वितीये दिने प्रातर्वार्तालापप्रसङ्ग एव परिचिताः।

पर्यन्तमावा श्रीको०अ०सुब्रह्मण्य-अय्यरमहोदयेन साकमागच्छाव:। तत आवां धनुष्कोटि-तीर्थं प्रति प्रस्थितौ।

अथाऽऽवामागता उपकण्ठं महोदधेः। तत्र पूजकाना स्नानसंकल्पवाक्ये—"रत्नाकर-महोदधिसंगमे" इति श्रुतम्। वस्तुतस्तु रत्नाकरमहोदधिसंगमः कन्याकुमारीतीर्थं एव, अत्र तु तस्य प्रयोग औपचारिकः। यत्र धनुष्कोटितीर्थं रामेश्वरतीर्थं च विद्येते तद् द्वीपं भारतभूमितः पृथगेव वर्तते। तत्परितो महोदधिः स्ववेलाभिः पावयंस्तत्तटाननारतमवतिष्ठते। बाष्पयानगमनागमनसाधनः सेतुरेव सयोजयति तद्भारतभुवा। तस्यैतस्य द्वीपस्यैकतो धनुष्कोटितीर्थमपरतश्च विद्यते रामेश्वरतीर्थम्। पंबनबाष्पयानस्थानमागत्य धनुष्कोटित आवा रामेश्वरतीर्थं प्रति प्रस्थितौ। तत्र मर्यादापुरुषोत्तमेन रामभद्रेणाऽऽराधितपूर्वो भगवान् रामेश्वरः सस्तुत आवाभ्या महिम्नस्तवेन।

तत आवा प्रस्थितौ प्राचीनाना पाण्डयपार्थिवाना प्रथिता राजधानी मदुरा प्रति। तत्र हि मीनाक्षीदेव्या मन्दिरमतिभव्यं विराजते। विशालानि चत्वारि गोपुराण्यन्यानि च लघूनि द्रविडस्थापत्यकलाप्रतीकभूतानि प्रद्योतयन्ति मन्दिरशोभाम्, विस्तारयन्ति पाण्डयनृप-तीना कलाप्रेम यशश्च, अमरीकुर्वन्ति च तन्निर्मातॄन् सूत्रधारान्। उत्तरभारते मन्दिर-विहार-चैत्याभ्यन्तरं स्थाने स्थाने स्थापिता मूर्तयो भग्नत्व,तेषा साम्प्रतमद्भुतालयेष्वेव संरक्षितास्तिष्ठन्ति, अत्र तु नटराजशिवस्य, तद्गणानामन्येषा च देवताना मूर्तयो यथास्थानं भित्तिषु स्तम्भेष्वन्यत्र च खचिता अनिर्वचनीया कामपि रामणीयकता तस्य पोषयन्ति। मन्दिरस्य पश्चिमगोपुरं समया सप्तसप्तसंख्याकाना स्तम्भाना सन्ति सप्त सघा:। तेषु प्रत्येकं ताडयमानेषु भवति सप्त-स्वराणामभिव्यक्तिरिति श्रुतं तत्र, तन्निदर्शनरूपं चावलोकितं तेषु केषाञ्चिदुपलताडनजातकार्श्यं कलेवरम्। साम्प्रतं तु तत्र‚याधिकारिभिः प्रतिषेधितं तत्ताडनम्, नियुक्तश्च तत्र रक्षापुरुषः। मदुरा साम्प्रतमपि स्वीया सौन्दर्याभिरुचिपरम्परा रक्षति, यतो हि मद्रासप्रान्तीयाः प्रथिततमाः शाट्योऽत्रैवोयन्ते।

इत आवा त्रिचनापल्ली प्रति प्रस्थितौ। रमणीयस्यास्य नगरस्य नातिदूरे कावेरी निम्नगा वर्तते वैष्णवाना महनीयं तीर्थं श्रीरङ्गं नाम। यत्र हि वर्तते श्रीरङ्गनायकस्यातिभव्यं मन्दिरम्। दक्षिणभारतस्य पवित्रतमाया कावेरीसरिति स्नात्वा कृतमावाभ्या श्रीरङ्गनायकस्य, शेषशायिनः श्रीविष्णोश्च पावनस्य विग्रहस्य दर्शनम्। इतः श्रीरामनरेशमिश्रमहोदयाश्चेन्नपुरी (मद्रास) प्रस्थिता, अहं चागमं तंजोरनगरीम्।

# संस्कृतविश्वपरिषदश्चतुर्थमधिवेशनम्

नगरी हीयं विद्याकलारसिकाना महाराष्ट्रीयमहीभुजा तुलजाजीप्रभृतीनामासीत् क्रीडास्थली। वर्ततेऽत्र संस्कृतहस्तलिखितग्रन्थाना विशालो ग्रन्थागारः। द्रष्टव्योऽयं मयेति धिया तत्र गतवानहम्। अवलोकितश्च कात्स्न्येंन सः। अनेकेषु भागेषु विवरणात्मिका सूची ग्रन्थालयस्यास्य प्रकाशिता विद्यते, प्रकाश्यते च शोधपत्रिकैका ग्रन्थमाला च। अत्रत्यग्रन्थपालाना श्रीनिवासाचार्यमहोदयाना तत्सहायकाना श्रीसुन्दरशर्ममहोदयाना च सौहार्देन मयाऽनेके विशिष्टा ग्रन्थास्तत्रावलोकिताः। तेषु चित्रमय ऋग्वेदः, प्रतितालपत्र त्रिंशत्पङ्क्तिमयं वाल्मीकिरामायणपुस्तकं चातीवाश्चर्यकरमवलोकितम्। ग्रन्थाना कीटादिभ्यः सुरक्षार्थमत्र ग्रन्थाधारेषु किञ्चिद् सुगन्धिद्रव्यमायुर्वेदपद्धत्या निर्मितं प्रदीयते। परीक्षणोऽयं वर्तते प्रयोगोऽन्यैरपि ग्रन्थसंरक्षकैः। अस्ति पुस्तकालयस्य समीप एवैकोऽद्भुतालयः। तत्र प्रतिद्वारमन्येषु च बहुषु स्थलेषु—यत्र हि बहुमूल्या रमणीयतमा च सामग्री स्थापिता, या दृष्ट्वैव च मनसि कोऽपि विकारो जनि लभेत—तं तत्रैव शमयितुमिव कृत्रिमरक्षापुरुषा वास्तविकान् तिरस्कुर्वन्त इव स्थापिता आसन्। अद्भुतालयस्यैकाऽपरा विशेषता मया [1]नागपुरस्थितेऽद्भुतालये दृष्टा। तत्र मृताः पशुपक्षिणस्तथा स्थापिताः सन्ति यथा तेषां वन्यं जीवनं पुरतः स्फुरेद्दर्शकस्य। कथं हि नामाजगरो वृक्षारूढः स्वभक्ष्यमाक्रामति पाशैर्बध्नाति च, क्षीरभोजने कथं नाम शृगालो मित्रं सारसं वञ्चति, लोमाशेन गानप्रशंसा विधाय काकः खलु कथं प्रतार्यत इत्यादिचित्रणमद्भुतालयेषु किमपि नावीन्यमनुभावयति।

तंजोरनगरीतश्चिदम्बरतीर्थमागत्य "जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी" इत्यादितालानुसारिणा ताण्डवेन त्रैलोक्यं मोहयतो नटराजस्य विग्रहं चिदम्बररहस्यं चावलोक्य कृतार्थीकृते चक्षुषी आत्मनः। अत्रैव अन्नमलाइविश्वविद्यालयो वर्तते, यत्र दिसम्बरमासस्य २६-२८ दिनाङ्केष्वखिलभारतीयप्राच्यविद्यापरिषदोऽष्टादशतममधिवेशनं संपन्नम्।

ततो नवम्बरमासस्य १८ दिनाङ्के प्रात आगममहं चेन्नपुरीम्। डा०वे०राघवमहोदयस्य गृहेऽस्थीयत मया तत्र। स्नानादिकं नित्यकर्म संपाद्य प्रथमं गतवानहं कुप्पूस्वामिशास्त्रिशोधसंस्थानं तत्रैव स्थितं सस्कृतमहाविद्यालयं च द्रष्टुम्। कुप्पूस्वामिशास्त्रिशोधसंस्थाया मन्त्रिणः स्वयं डा०वे०राघवमहोदया एव सन्ति। तेषा सहायकाः श्रीटी०आर०सुब्रह्मण्यमहोदयास्तत्र

1. वाराणसीत आगमनवेलायामचिन्तितकारणवशादावाभ्यां नागपुरे स्थितम्। तत्र नागपुरविश्वविद्यालयसंस्कृतविभागाध्यक्षमहोदयानां श्रीसरस्वतीप्रसादचतुर्वेदमहोदयानां गृहे गतमावाभ्याम्। तदैव दृष्टोऽयमद्भुतालयः। नागपुरविश्वविद्यालयस्य संस्कृतहस्तलिखितग्रन्थालयस्तु द्रष्टुं नापार्यत, तत्रावकाशवशात्।

प्रथमं दृष्टा मया। तैः सह पुस्तकालयभवनम्, महाविद्यालये संस्कृतपाठनप्रणाली, कुप्पूस्वामिशास्त्रिशोधसंस्थाने च बालानां संस्कृताध्यापनप्रणाली नूतनाऽवलोकिता। ततो गतवानहमड्यारसरित्सरितापतिसंगमस्थले स्थितमड्यारपुस्तकालयमवलोकयितुम्। साम्प्रतमस्य संचालकाः पूर्वं वाराणसीमधिवसन्तो भारतीयसंगीतमर्मज्ञाः फ्रांसदेशीयाः श्रीडेनियेलुमहोदयाः सन्ति, यैः 'शिवशरण' इति काश्यां स्वीयं नामाङ्गीकृतमासीत्। प्रथममेते महानुभावास्तत्र दृष्टा मया। ततश्च दृष्टो मया सम्पूर्णो ग्रन्थालयः। अत्र हस्तलेखानां सुरक्षार्थं वातावरोधिग्रन्थाधाराणां बहुव्ययसाध्यानां व्यवस्था विद्यते। दक्षिणभारतपुस्तकालयेषु सर्वत्र तालपत्रीयग्रन्थानां सुरक्षार्थं विशिष्टा व्यवस्था दरीदृश्यते। तत्र हि ग्रन्थाधारेष्वेकैकाय हस्तलेखाय पर्याप्तानि खण्डानि निर्मीयन्ते।

अड्यारपुस्तकालयतोऽगममहं मद्रासविश्वविद्यालयभवनम्, यत्र हि डा०वे०राघवमहोदया आसन्। तत्र दृष्टो मया स कार्यालयः, यत्र हि राघवमहोदयानां निरीक्षणे नूतनस्य हस्तलेखानां महासूचीपत्रस्य ( न्यू कैटलागस कैटलोगरम ) कार्यमग्रे सरति। दृष्टश्च मया विश्वविद्यालयस्य विशालतमो ग्रन्थालयः। विश्वविद्यालयभवन एवैकस्मिन् पार्श्वे वर्तते राजकीयहस्तलिखितग्रन्थालयोऽपि। आसीत्तस्मिन् दिने तत्रावकाशः, अतो न पारितं मया तदवलोकने।

अपराह्णे ४ वादनसमये कलाशालायामेकस्यामासीत् प्रान्तीया संस्कृतभाषणप्रतियोगिता। यस्यां मद्रासप्रान्तीया दशाधिकाश्छात्रवक्तारः संमिलिता आसन्, येषु तिस्र आसन् महिलाः। अस्याः प्रतियोगितायाः संयोजका निर्णायकेष्वेकतमाश्चासन् राघवमहोदयाः। मामपि तत्र नीतवन्त एते महानुभावाः। प्रतियोगितायां विषय आसीद् हिन्दीभाषाया राष्ट्रभाषात्वम्। एकया छात्रयाऽन्यैश्च कैश्चिद् वक्तृभिर्वाग्मिता स्वीया साधु प्रकटिता। अत्र राजकीयहस्तलिखितग्रन्थालयस्य संरक्षकमहोदया अप्युपस्थिता आसन्। डा०राघवमहोदयेन मया सह तेषां परिचयः कारितः।

रात्रौ डा०राघवमहोदयानामध्ययनकक्षं मयाऽवलोकितम्। तत्र नैकविधवाद्यानामुपस्थितिस्तेषां संगीतप्रेम प्रकाशयति स्म। मद्रपुरीसंगीतसभाया मन्त्रिपदं समलङ्कृतवन्त एते महानुभावाः काञ्चीपीठाधीशैर्जगद्गुरुभिः श्रीशङ्कराचार्यैः "कविकोकिल" इति विरुदप्रदानेन सत्कृता दिल्लीनगर्यां "साहित्य एकेडमी"-इति ख्यातायाः संस्थायाः संस्कृतविभागस्य संयोजकाः सन्ति। एभिर्महानुभावैः प्रति रविवासरं मद्रास-आकाशवाणीकेन्द्रतः संस्कृतकार्यक्रमः प्रसार्यते। महामहिम्नामेतेषां मय्येव कृपाभारः स्नेहश्च कृतज्ञताप्रकटनाय मां हठात् प्रेरयति। इति शम्॥

# विविधम्

## रघुवंशे हूणाचारस्य समुल्लेखः

डा० वासुदेवशरणोऽग्रवाल, हिन्दूविश्वविद्यालयः, वाराणसी।

रघुवंशस्य चतुर्थसर्गीया इमे श्लोका आवर्जयन्तु विदुषां मनांसि—

विनीताध्वश्रमास्तस्य वङ्क्षुतीरविचेष्टनैः।
दुधुवुर्वाजिनः स्कन्धाँल्लग्नकुङ्कुमकेसरान्॥
तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम्।
कपोलपाटनादेशि बभूव रघुचेष्टितम्॥
काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः।
गजालानपरिक्लिष्टैरक्षोटैः सार्द्धमानताः॥

[ रघु० ४।६७-६९ ]

अत्र प्रथमस्तृतीयश्च श्लोकस्तावदादौ परीक्ष्यते। तत्र प्रथमे श्लोके "वङ्क्षुतीरविचेष्टनैः" इति मूलपाठं परित्यज्य मल्लिनाथः 'सिन्धुतीरविचेष्टनैः" इति पाठमङ्गीचकार। ततः प्रभृति स एव पाठः प्राधान्येन प्रचलितः। दिनकर-धर्ममेरु-विजयगणिविरचितासु टीकासु 'वङ्क्षुतीर' इति पाठो वर्तते, चारित्रवर्द्धनवल्लभदेवविरचितयोष्टीकयोः कतिपयेषु हस्तलेखेषु 'वङ्क्षणुतीर' इति पाठो दृश्यते, सुमतिविजयस्य टीकायां च 'वङ्क्षुतीर' इत्येव पाठोऽधिगम्यते। तस्या एवान्यस्मिन् हस्तलेखे 'मङ्क्षु' इत्यपि पाठोऽधिगतः। श्रीनन्दारगीकरमहोदयः स्वसंपादिते रघुवंशसंस्करणे मल्लिनाथसंमतं पाठं मूले स्थापयित्वा प्राचीनानिमान् पाठभेदानुट्टङ्कितवान्। अत्र निःसंशयं "वङ्क्षुतीरविचेष्टनैः" इत्येव मूलपाठः श्रेष्ठतमश्च। श्रीके० वी० पाठकमहोदयो मूलपाठः 'वङ्क्षु' इत्येवासीदिति संसाध्य साम्प्रतम् 'ओक्सस'-नाम्ना प्रथिताया नद्या एवैतत्प्राचीनं नामेत्यसाधयत्[1]। [2]पुराणेष्वपि वङ्क्षोः "चक्षु-इक्षु-स्वरक्षु" प्रभृतीनि पाठान्तराणि समुपलभ्यन्ते।

---

१. इण्डियन एंटिक्वेरी, सन् १९१२, पृ० २६६

२. वायु० ४९।९३; गरुड० १।५६।१५; मार्कण्डेय० ६६।१३

[1]नरवर्मदेवस्य नागपुरशिखालेखे (संवत् ११६१) कालिदासीयस्यास्य पद्यस्य च्छायामाश्रित्य किमपि वर्णनं प्रस्तुतम्—

खेलोत्खाततुरुष्कदत्तविलसद्दाहावलीवेल्लन-
क्लाम्यत्कुङ्कुमकेसराधिकमृदौ वङ्क्षूपकण्ठस्थले।
येनावाप्य सरस्वतीसविधता साधिक्यवाक्पाटव-
श्चाटूनुत्कटपत्रपञ्जरगतः कीराधिपोऽध्याप्यत ॥

अनेन सुनिश्चितं प्रतीयते कालिदासीये पद्ये 'वङ्क्षुतीर' इत्येव पाठ आसीदिति। इदमप्यत्रावधातव्यं यत् "काम्बोजाः" इति श्लोके कालिदासेन वर्णिताः काम्बोजा वङ्क्षुतीर-निवासिन आसन्। संस्कृतसाहित्ये कम्बोजजनपदस्योल्लेखोऽतिप्रत्नकालादुपलभ्यते। पाणिनेरष्टा-ध्याय्यां कम्बोजनपद उल्लिखितः। "शवतिः गतिकर्मा कम्बोजेष्वेव भाष्यते" [ निरु० २।२ ] इति यास्काचार्य आह। पामीरप्रदेशस्य गलचाभाषास्वधुनापि गत्यर्थे शवधातुः प्रयुज्यत इति ग्रियर्सनमहोदयो लिखति। अनेन कालिदासेनोल्लिखिताः काम्बोजा वङ्क्षुतीरनिवासिन एव न तु सिन्धुतटवासिन इत्यनुमानं समीचीनं प्रतिभाति। एवं महाकवेः स्वकीयेन वर्णनेन, प्राचीनटीकाकाराणां व्याख्यानैः, अन्यैश्च समर्थैः प्रमाणैः कालिदासविरचितो मूलपाठः "वङ्क्षुतीरविचेष्टनैः" इत्येवासीदिति सिद्ध्यति।

अधुना द्वितीयः श्लोको विमर्शार्हः। अत्र महाकविना वङ्क्षुकम्बोजयोरुपत्यकासु निवसतां हूणानामाचार एकः कविभाषया वर्णितः। भारतीयानुश्रुतिपरम्परा कालिदासो विक्रम-नृपतेः सभायामासीदिति प्रमाणयति। एष विक्रमनृपतिः परमभागवतो महाराजाधिराजश्चन्द्रगुप्तो विक्रमादित्यविरुदभागासीत्। विक्रमादित्यविरुदाङ्किता अस्य नृपतेर्नाणकाः समुपलभ्यन्ते। मैरोलीप्रशस्तौ—"तीर्त्वा सप्त मुखानि येन समरे सिन्धोर्जिता वाह्लिकाः" इति वाह्लिकानां विजेतृत्वेन वर्णितो यशस्वी चन्द्रश्चन्द्रगुप्तविक्रमादित्य एव, नान्यः। वाह्लिकानां वङ्क्षुतीरे निवसतां हूणानां च राजनैतिकसीमानः परस्परं संयुक्ता आसन्। हूणास्तदा वङ्क्षुनदोपत्यकासु निवसन्ति स्म, तत्रैव च ते चन्द्रगुप्तसेनाभिर्युद्धे पराजयमवापुः। एषा ऐतिहासिकी वार्ताऽत्र महाकवेरनेन वर्णनेन सूच्यते।

---

१. संमेलनपत्रिका, भा० ४२, अं० १, पृ० ४ अत्र प्रकाशितः "कालिदास और हूण" इति शीर्षकः श्रीबुद्धप्रकाशनिबद्धो लेखो द्रष्टव्यः।

## रघुवंशे हूणाचारस्य समुल्लेखः

द्वितीयस्य श्लोकस्यायमभिप्रायः—रघुसैन्येन पराजिता हूणाः, तेषु बहवो मृताश्च। भर्तृमरणाकुला हूणयोषितस्तत्र विललपुः, स्वीयजातीयाचारानुरूपं[1] स्यापाविधिमकार्षुरिति। तदातीन्तनैश्चीनदेशीयैरितिहासलेखकैः सोऽयं हूणानामाचार उपवर्णितः। श्रीस्तानिस लाजूलियेमहाशयेन[2] स्वकीये लेखे प्रमाणान्येतानि संगृह्योक्तम्—

> "इदमनुश्रूयते हूणयोषितः स्यापाविधिपूरकाणि वाक्यानि क्रन्दन्त्यः स्वदूष्यानि परितो भ्रमन्ति। तदा च ताभिश्छुरिकया सूचीभिर्वा स्वमुखान्याविध्य रक्तधारा प्रवाह्यते। तेन च तासामश्रुधारा रक्तधारेव प्रवहमानाऽवलोक्यते" इति।

अस्यैव स्यापाख्यस्योग्रस्याचारस्योल्लेखः कालिदासेनास्मिन् पद्ये विहितः। मल्लिनाथेनात्रापि—"विनायकं प्रकुर्वाणो रचयामास वानरम्" इत्युक्तिश्चरितार्थीकृता। कालिदासस्य 'कपोलपाटनादेशि' इत्येष पाठस्तेन 'कपोलपाटलादेशि' इति पाठे परिणामितः, व्याख्यातश्च—"तासां कपोलेषु पाटलस्य पाटलिम्नस्ताडनादिकृतारुण्यस्यादेश्युपदेशकं बभूव" [रघु० ४।६८] इति। अत्र नूतनपाठकल्पने मल्लिनाथस्य महान् व्युत्क्रमो दृश्यते। 'पाटलादेशि' इति पाठे पाटलशब्दो विशेषणम्, मल्लिनाथेन तु 'पाटलिम्नः' इति विशेष्यमुखेन व्याख्यातः। संज्ञावाचकशब्दस्य भाववाचकत्वेन व्याख्यानं व्याख्याकारस्य कवेश्च कामपि न्यूनतां ख्यापयति। किं महाकवेः कालिदास्य शब्दसंपत्तावस्य श्लोकस्य रचनावसर एतादृशो ह्रासः संजातो येन विशेष्यस्य स्थाने तेन विशेषणं प्रयुक्तम्? वस्तुतो नात्र कवेर्दोषः, अपि तु टीकाकारस्य कोऽपि पाण्डित्यप्रकर्षोऽत्र कारणम्।

कालिदासरचितः पाठः 'कपोलपाटनादेशि" इत्येवासीत्। पाटनस्य चात्र विदारणमर्थः। अत्र कविना हूणानां स्यापाख्यस्याचारस्यैवोल्लेखः कृतः, यत्र हि तेषां योषितः पतिमरणानन्तरं छुरिकादिना तीक्ष्णेनायुधेन स्वकपोलानि विदारयन्ति। "वङ्क्षुतीरविचेष्टनैः" [रघु० ४।६७] इति पाठवदत्रापि नैकैः प्राचीनैष्टीकाकारैः "कपोलपाटनादेशि" इत्येव पाठोऽङ्गीकृतः। एष पाठो मल्लिनाथेन न स्वीकृत इत्याश्चर्यकरम्।

---

१. भृशं विलाप एव साम्प्रतिकपञ्चापदेश्यभाषायां 'स्यापा' इत्यभिधीयते।

२. "जूर्नाल आजियातीक, भा० ६४, पृ० ३५२" इत्यत्र प्रकाशितः "दो क्यु मां हिस्तोरीक सुरल् तुकिउ" (तुर्कविषयक ऐतिहासिक उल्लेखः) इति शीर्षको निबन्धो द्रष्टव्यः।

चारित्रवर्द्धनेन सुमतिविजयेन च "पाटनादेशि" इति पाठ इत्थं [1]व्याख्यातः—हूण-योषितः कुचकपोलविदारणपूर्वं रुदन्तीति तद्देशाचारः" इति।

उपलब्धासु टीकासु वल्लभदेवविरचिता प्राचीनतमा। [2]तेन [3]पञ्जिकाकारेण बलदेवेन च "कपोलपाटनादेशि" इति पाठ इत्थं व्याख्यातः—"कपोलपाटनमादिशतीति पतिवधाद् नार्यो रुदत्यः कुचकपोल नखैर्विदारयन्ति" इति।

[4]दिनकरमिश्रेण रघुवंशटीकायामलेखि—"अवरोधशब्देन लक्षणया स्त्रिय उच्यन्ते। तत्र देशे। हूणा जनभेदाः। तदङ्गनाना कपोलयोः पाटनं नखैर्विदारणमादिशतीति तादृशं रघोश्चेष्टितं बभूव। कीदृश तत्? भर्तृषु हूणेषु प्रकटो विक्रमो यस्य तत्तादृशम्। हूणस्त्रियः कपोलपाटनपूर्वं रोरुदन्तीति तद्देशाचारः" इति।

[5]गुणविजयगणिना विशेषार्थबोधिकाटीकायामुक्तम्—"कपोलयोः पाटनं नखैर्विदारण-मादिशतीति तादृश कपोलपाटनोपदेशकं बभूव" इति।

[6]अज्ञातकर्तृकाया रघुवंशावचूरिनामकटीकायाम्—"कपोलयोः पाटनं नखोत्कर्षणमादि-शतीति" इत्यर्थो दृश्यते।

[7]रघुवंशप्रकाशिकाया हरिदासमिश्रेण व्याख्यातम्—"कपोलयोः पाटनं नखैर्विदारण-मादिशति कथयतीति यत् तत्" इति।

[8]विजयगणिनो रघुवंशटीकायाम्—"कपोलाना गल्लापाटनं (?) विदारणं कुट्टनं कपोलपाटनम्, कपोलपाटनमादिशतीति कथयति तत् कपोलपाटनादेशि" इति व्याख्यानं दृश्यते।

[9]उदयाकरकृतरघुवंशटीकाया च—"कपोलपाटनं नखविदारणमादिशतीति कथयतीति कपोलपाटनादेशि" इति दृश्यते व्याख्या।

---

१. नन्दारगीकरसंपादितस्य रघुवंशसंस्करणस्यात्रत्या पादटिप्पणी द्रष्टव्या।
२. भण्डारकरग्रन्थागारीया हस्तलेखसंख्या, ७५८।१८८६–९२
३. तत्रैव, ४४९।१८८७–९१, अत्र 'नार्यः' इत्यस्य स्थाने 'भार्या' इति पाठः।
४. तत्रैव, ४४४।१८८७–९१
५. तत्रैव, ४४८।१८८७–९१
६. तत्रैव, ४५१ १८८७–९१
७. तत्रैव, ४७१।१८९५–१९०२
८. तत्रैव, ४४७।१८८७–९१
९. तत्रैव, ७५६।१८८६–९२

## रघुवंशे हूणाचारस्य समुल्लेखः

रघुवंशस्य प्राचीनेषु हस्तलेखेषु बाहुल्येन 'पाटनादेशि' इत्येव पाठः समुपलभ्यते। जी०आर०नन्दारगीकरमहोदयेन १८९७ ई० वर्षे पुण्यपत्तनतः प्रकाशिते रघुवंशस्य संशोधिते संस्करणे उद्धृताः षट् प्रामाणिका हस्तलेखाः 'पाटनादेशि' इति पाठमेव समर्थयन्ति। एषु चारित्रवर्द्धन-वल्लभदेव सुमतिविजय-धर्मदेवटीकाना हस्तलेखा अपि सन्ति। मल्लिनाथीटीका संपादयता तेन महानुभावेन मूले यद्यपि मल्लिनाथसंमतः पाठ एव स्थापितः, तस्यैव तत्र युक्तत्वात्; तथापि तैः शनकैस्तत्र 'पाटनादेशि' इति पाठस्य समर्थनं कृतम्।

'पाटनादेशि' इति पाठस्य यथार्थतामन्वेषयद्भिरस्माभिर्भण्डारकरप्राच्यशोधसंस्थानस्य सुयोग्याः संग्रहाध्यक्षाः श्रीपी०के०गोडेमहोदयास्तत्र सुरक्षिताना प्राचीनहस्तलेखाना पाठान् परीक्षितुं प्रार्थिताः। षोडश हस्तलेखास्तैः परीक्षिताः। तत्रैकस्मिन् हस्तलेखे नास्ति श्लोकोऽयम्। शेषेषु पञ्चदश हस्तलेखेषु द्वादश 'पाटनादेशि' इति पाठं बिभ्रति। अवशिष्टास्त्रयो हस्तलेखा मल्लिनाथस्य संजीवन्याः सन्ति, तेष्वप्येकस्मिन् हस्तलेखे श्लोकपाठः 'पाटनादेशि' इत्येव।

कानपुरनगरस्थसनातनधर्ममहाविद्यालयाध्यापकेन मन्मित्रेण श्रीरामसुरेशत्रिपाठिना रघुवंशस्य द्वौ प्राचीनौ हस्तलेखावुपलब्धौ। तत्रोभयोः पाठः 'पाटनादेशि' इत्येव।

न चिरादेव मया जयपुरनगरस्थराजस्थानपुरातत्त्वमन्दिरे संगृहीताना हस्तलेखाना परीक्षणस्यावसरो लब्धः। तत्रत्येषु द्वादश हस्तलेखेष्वेकादश[1] 'पाटनादेशि' इति पाठमेव समर्थयन्ति। परीक्षितेष्वन्येष्वपि प्रामाणिकेषु प्राचीनेषु हस्तलेखेषु[2] 'पाटनादेशि' इत्येव पाठः समर्थितः स्यादिति दृढो नः प्रत्ययः। एष एव च महाकविनोपनिबद्धः पाठः॥

---

१. पुरातत्त्वमन्दिरहस्तलेखसंख्या – ४७, २६९, ५०९, १५२५, १५४४, १५५७, १९७०, २७७६, २९७५, ३३५७, ६२१२।

२. *सरस्वतीभवनग्रन्थालये रघुवंशस्य शताधिका हस्तलेखा वर्तन्ते। तत्रत्यः पाठभेदोऽग्रिमाङ्केषु प्रदास्यते—सम्पादकः।*

# वाक्यपदीयपाठविमर्शः

श्रीरामशङ्करभट्टाचार्यः, हिन्दूविश्वविद्यालयः, वाराणसी।

मुद्रिते वाक्यपदीयेऽनेकत्र सन्दिग्धाः पाठा उपलभ्यन्ते। ग्रन्थरत्नस्यास्यासाधारण-प्रामाण्यदर्शनात् सर्वेऽप्येवंविधाः पाठा विचारणीयाः, सम्यक् पाठास्तु निर्णेयाः। अत्र केचिदपपाठाः, सन्दिग्धपाठाश्च विदुषां विमर्शार्थमुपस्थाप्यन्ते—

१—"कालानुपाति यद्रूपं तदस्तीत्यनुगम्य" (३।८।१२) इति मुद्रितः पाठः। अत्र एकाक्षरलाघवदोषो दृश्यते। सम्यक् पाठस्तु 'तदस्तीत्यनुगम्यते' इत्येव स्यात्। कारिकेयं क्वचित् क्वचिदुद्धृता वर्तते, तत्रायमेव पाठ उपलभ्यते।

२—"अतो भाविकारेषु सत्तैका व्यवतिष्ठते" (३।६।२७)। अत्राप्येकाक्षरलाघवदोषः। स च पूर्ववदेव मुद्रणप्रमादजः। सम्यक् पाठस्तु—'अतो भावविकारेषु···' इत्येव।

३—"चिरक्षिप्रव्यवस्थानं कालादिकरणं तथा" (३।६।४७)। अत्र 'कालादिकरणम्' इति पाठो भ्रष्टः। सम्यक् पाठस्तु 'कालाधिकरणम्' इत्येव। श्लोकपूर्वार्द्धविचारणेन टीकादर्शनेन चायमेव पाठो युक्तः प्रतिभाति।

४—"समारम्भाच्च भावानामादिमद् ब्रह्म शाश्वतम्" (२।२३६) इति मुद्रितपाठः। परन्तु वैयाकरणभूषणसारादिषु बहुषु ग्रन्थेषु कारिकेयम्—"समारम्भाच्च भावानामनादि ब्रह्म शाश्वतम्" इत्येवंरूपेण पठिता। वाक्यपदीयटीकायां तु "आदिमद् ब्रह्म शाश्वतम्" इत्येव पाठो धृतः। अनेन पाठद्वयेन सिद्धान्तभेदोऽपि संभवति। अतो विद्वद्भिरत्र विचारः करणीय एव।

५—"नियमः प्रतिषेधश्च विधिशेषस्तथा सति" (२।३५४) श्लोकोऽयं कैयटेन स्मृतः। परन्तु तत्स्मृतः पाठस्तु—"नियमः प्रतिषेधश्च विशेषश्च तथा सति" इत्येव (द्रष्टव्य प्रदीपे ३।४।६७)। नागेशेन तु प्रदीपव्याख्यायां द्वयोरपि पाठयोर्न्याय्यता दर्शिता। कैयटस्तु पाठान्तरविषये न किमपि कथितवान्।

६—"तुल्यायामनुनिष्पत्तौ ज्ये-द्रा-द्या इत्यसाधवः" (२।३६६)। अयमपि श्लोकः कैयटेन स्मृतः, परन्तु तत्स्मृतपाठस्तु—"तुल्यायामनुनिष्पत्तौ दे-य-सो इत्यसाधवः" (प्रदीपे ५।३।८४) इति। अत्र न किमपि पाठान्तरं कैयटेन नागेशेन वा कथितम्।

७—"क्रमात् संभविना तेषामात्मानो न समूहिनाम्" ( ३।८।६ )। अस्य श्लोकस्य कैयटधृतपाठस्तु—'क्रमात् सदसता तेषाम्'...' ( प्रदीपे, ३।२।१०२ )। अत्र पाठभेदेऽर्थभेदोऽपि भवितुमर्हतीति प्रतीयते।

८—"सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः" ( ३।८।४६ )। अस्य श्लोकस्य कौण्डभट्टधृतपाठस्तु—"सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ( वैयाकरणभूषणसारे १०प्रक० )। परन्तु कैयटेन मूलपाठ एवोद्धृतः ( प्रदीपे, ३।३।१८ )। अतः प्राचीनतरव्यक्तिधृतत्वात् 'सत्त्वभावस्तु' इत्येव पाठः समीचीन इति प्रतीयते।

९—"परतो विद्यते सर्वमात्मा तु न विकम्पते" ( ३।९।८० )। वैयाकरणभूषणसारे 'न विकल्पते' इत्येव पाठ उद्धृतः ( लकारार्थप्रकरणे )। कैयटेन तु मूलपाठ एव रक्षितः ( प्रदीपे, ३।२।१२३ )॥

---

चापरिमितत्वम् । अपृथक्त्वं चैत(?) दवधिनिरूप्यपृथक्त्वाभाव-सम्बन्धित्वम् । दयादयस्त्विच्छाभेदा एव । निरिन्द्रियदेशसम्बन्ध एव हि मनसो निद्रेति । परत्वापरत्वसङ्कर एव च मध्यता । गुरुत्वादिवन्दीग्रहस्तु तत्र तत्रोन्मूलित इत्यलम् । इति गुणानियमः॥

इति श्रीन्यायलीलावत्यां गुणविचारः(२) ।

---

सत्त्वादिति भावः । एवमग्रेऽपि । परत्वापरत्वसंकर इति । परत्वाधिकरणत्वमेव मध्यत्वमित्यर्थः । गुणनियम इति । गुणानां न्यूनाधिकसंख्याव्यवच्छेदनियम इत्यर्थः ॥

इति श्रीमहामहोपाध्यायसन्मिश्रश्रीभवनाथात्मज महामहोपाध्यायसन्मिश्र श्रीशंकरकृते लीलावतीकण्ठाभरणे गुणपदार्थः समाप्तः ।

---

परत्वापरत्वसंकर इति । एतच्चोपलक्षणम् । तुल्यसंयुक्तसंयोगाधिकरणेऽपि मध्यव्यवहारदर्शनात् । गुणनियम शङ्कितगुणानामाधिक्यनिराकरणमित्यर्थः ॥

इति श्रीवर्धमानोपाध्यायविरचिते न्यायलीलावतीप्रकाशे गुणपदार्थः ॥

---

न्यायलीलावतीप्रकाशविवृतिः

च्यमाणमुत्तरापेक्षया उत्तरेण च निरूप्यमाणं दक्षिणापेक्षया मध्यम परमित्यपरद्वयसंकर एव मध्यतेति भावः । इदमप्युपलक्षणम्, भिन्नदिगवस्थितयार्यत्रैकस्मिन्परत्वद्वयमुत्पद्यते तत्रापि मध्यत्वव्यवहारात्, तदुक्तं गुणप्रकाशे—'परत्वमेव मध्यत्वमिति' ।

# चयनिका

## विविधपत्रिकाभ्यः संचिता संस्कृतवाङ्मयसंबद्धा लेखसूची

व्रजवल्लभद्विवेद, राजकीयसंस्कृतमहाविद्यालय, वाराणसी।

**इण्डियन हिस्टोरिकल कार्टर्ली, व० ३१, अ० १, मार्च १९५५**

श्रीरत्नचन्द्र अग्रवाल—कुरुक्षेत्र इन दी लेटर संस्कृत लिटरेचर (परवर्तिसंस्कृत-साहित्ये कुरुक्षेत्रस्योल्लेखः)।

श्रीआर०पी०चौधरी—इन्टरप्रिटेशन आफ दी 'अनत्त', डोक्ट्रिन आफ बुद्धिज्म: ए न्यू एप्रोच (बौद्धमतेऽनात्मवादस्य स्वरूपम्)

डा०पी०एस०शास्त्री—दी राइज एण्ड ग्रोथ आफ बुद्धिज्म इन आन्ध्र (आन्ध्र-प्रदेशे बौद्धधर्मस्याभ्युदयः संवर्द्धनं च)।

श्रीशिशिरकुमार मित्र—ए नोट ऑन सहजसुहृत् (क एष सहजसुहृत्-प्रबोध-चन्द्रोदयनाटके)।

श्रीगोपिकामोहन भट्टाचार्य—इज कणाद एन एथिस्ट (किं कणादो नास्तिकः?)।

**व० ३१, अ० ३, सितम्बर १९५५**

डा०पी०एस०शास्त्री—नागार्जुन एण्ड आर्यदेव (नागार्जुन आर्यदेवश्च)।

डा०मनोमोहन घोष—ऑन दी ओरिजिन आफ दी हिन्दू ड्रामा (भारतीयनाट्यस्य मौलिकत्वम्)।

डा०सुनीलचन्द्र राय—हिस्ट्री आफ संस्कृत लिटरेचर आफ काश्मीर (काश्मीर-संस्कृतसाहित्यस्येतिहासः)।

श्रीव्रतीन्द्रकुमार सेनगुप्त—ए स्टडी आफ नागार्जुन (नागार्जुनस्यैकमध्ययनम्)।

डा०यू०एन०घोषाल—ए कम्पेरीजन बिटवीन एंश्येन्ट इण्डियन एण्ड मिडीवल यूरोपियन थ्योरीज आफ दी डिवाइन ओरिजिन एण्ड नेचर आफ किंगशिप (राजसत्ताया देवात्मकत्वे प्राचीनभारतीयविचाराणां मध्यकालिकयूरोपीयसिद्धान्तैः साम्यत्वसमीक्षा)।

व० ३१, अ० ४, दिसम्बर १९५५

डा०यू०एन०घोषाल—ऑन सम रीसेन्ट इन्टरप्रिटेशन्स आफ दी महाभारत थ्योरीज आफ किंगशिप (महाभारतवर्णितशासनप्रणाल्या आधुनिक्यः काश्चन व्याख्याः ।

डा०मनोमोहन घोष—आन दी ओरिजिन आफ दी हिन्दू ड्रामा ( भारतीयनाट्यस्य मौलिकत्वम् ) ।

डा०वी०डब्ल्यू०करम्बेलकर—मत्स्येन्द्रनाथ एण्ड हिज योगिनी कल्ट ( मत्स्येन्द्रनाथस्तदीयो योगिनीसम्प्रदायश्च ) ।

श्रीदिलीपकुमार काजीलाल—दी पिक्चर आफ एंश्येन्ट इण्डिया एज रिविल्ड इन पतञ्जलि'ज महाभाष्य ( प्राचीनभारतस्य पतञ्जलिमहाभाष्यतोऽधिगम्यमानं स्वरूपम् ) ।

इण्डो-एशियन कल्चर, व० ३, अ० ३, जनवरी १९५५

डा०पी०वी०बापट—रिडक्शन आफ दी सेक्रेट पालि टेक्स्ट आफ बुद्धिज्म (बौद्धपवित्रपालिग्रन्थाना पुनः संस्करणम् ) ।

प्लेसेज आफ बुद्धिस्ट पिल्ग्रिमेज : अमरावती एण्ड नागार्जुनीकोण्डा ( अमरावती नागार्जुनीकोण्डा च, प्रसिद्धे बौद्धतीर्थे ) ।

श्रीब्रजेन्द्रकुमार सेनगुप्त—दी वेदान्तिक थ्योरी आफ नॉलेज ( वेदान्तिना ज्ञानस्वरूपविचारः ) ।

व० ३, अ० ४, अप्रैल १९५५

डा०डी०सी०सरकार—इण्डियन एपिग्रफी ( भारतीया शिलालेखविद्या ) ।

श्रीदेवव्रत सिन्हा—बुद्धिस्ट आउटलुक ऑन ह्यूमन परसनालिटी ( मानवव्यक्तित्वमभिलक्ष्य बौद्धविचारपद्धतिः ) ।

श्रीशिशिरकुमार मित्र—अशोका'ज ग्रैण्ड फादर चन्द्रगुप्त मौर्य ( चन्द्रगुप्तमौर्यः, अशोकस्य पितामहः ) ।

व० ४, अ० १, जुलाई १९५५

डा०एन०पी०चक्रवर्ती– सम प्रोब्लेम्स इन इण्डियन हिस्ट्री ( भारतीयेतिहासस्य काश्चन समस्याः ) ।

श्रीए०घोष—ए सर्वे आफ बुद्धिस्ट रिमेन्स इन इण्डिया ( भारते बौद्धध्वंसावशेषाणा पर्यवेक्षणम् ) ।

डा०डी०सी०सरकार—इण्डियन एपिग्राफी ( भारतीया शिलालेखविद्या ) ।

व० ४, अ० २, अक्टूबर १९५५

डा०एन०पी०चक्रवर्ती—सम प्रोब्लेम्स इन इण्डियन हिस्ट्री ( भारतीयेतिहासस्य काश्चन समस्याः )।

डा०एन-आर०राय—सम आउटसाइड एलिमेंट्स इन इण्डियन कल्चर ( भारतीयसंस्कृतौ कतिपयबाह्यतत्त्वानि )।

प्रो०एफ०टी०पारीख—कनिष्क, दी सेकेण्ड बुद्धिस्ट एम्परर आफ इण्डिया—( कनिष्कः, भारतस्य द्वितीयो बौद्धसम्राट् )।

ईस्ट एण्ड वेस्ट, व० ५, अ० ४, जनवरी १९५५

श्रीएफ०बेलोनी फिलिपि—दी क्रिटिकल एडीशन आफ दी महाभारत ( महाभारतस्यालोचनात्मक सस्करणम् )।

श्रीमस्सिमो स्कालिगेरो—दी तन्त्र एण्ड दी स्पिरिट आफ दी वेस्ट ( तन्त्रशास्त्रविषयिका पाश्चात्यमतसरणिः )।

व० ६, अ० १, अप्रैल १९५५

श्रीगीसेप्प मोरीकिनि—दी स्पिरीच्युअल स्ट्रगल आफ वसुबन्धु एण्ड हिज कर्मसिद्धिप्रकरण ( कर्मसिद्धिप्रकरणे वसुबन्धोराध्यात्मिकतत्त्वविवेचनम् )।

श्रीमस्सिमो स्कालिगेरो—एस्पेक्ट्स आफ माया इन मोडर्न साइन्स ( आधुनिकविज्ञानदृष्ट्या मायातत्त्वम् )।

व० ६, अ० २, जुलाई १९५५

श्रीजेएन्नि ओबोयर—सम गेम्स इन एन्शेन्ट इण्डिया ( प्राचीनभारते प्रचलितानां कासाञ्चन क्रीडानां वर्णनम् )।

श्रीकार्लो देल्ला कासा—दी फार्च्यून्स आफ कालिदास इन इतली ( इतलीदेशे कालिदासस्य वैभवम् )।

व० ६, अ० ३, अक्टूबर १९५५

श्रीआन्द्रे बारो—दी कन्सेप्ट आफ रिस्पोंसिबिलिटी इन एन्शेन्ट बुद्धिज्म (प्राचीनेषु बौद्धग्रन्थेषु कर्तव्यताविमर्शः)।

श्रीजुलियस एवोला—योग, इंमोर्टिलिटी एण्ड फ्रीडम (योगः, अमरत्वम्, स्वतन्त्रता च)।

श्रीपी०आर०रामचन्द्रराव—नागार्जुनीकोण्डा।

**एनल्स आफ ओरियन्टल रिसर्च, युनिवर्सिटी आफ मद्रास, व० १०, अ० २, १९५२-५३**

श्रीशङ्कराचार्यप्रणीत आत्मज्ञानोपदेशविधिः, आनन्दगिर्याचार्यरचितटीकासंवलितः।

श्रीएस०शङ्करराजु नायडु—तिरुक्कुरल् ( तमिलवेदस्य हिन्दीभाषाया परिचयः )।

**एनल्स आफ दी भण्डारकर ओरियन्टल रिसर्च इंस्टीट्यूट, व० ३५, सन् १९५४**

श्रीसूर्यकान्त—तान्त्रिक दीक्षा।

श्रीजे०सी०तवाडिया—दी मीनिंग आफ ऋत ( ऋतशब्दार्थः )।

श्रीपी०के०गोडे—वास्तुशिरोमणि, ए वर्क ऑन आर्चिटेक्चर बाई शङ्कर, दी गुरु आफ श्यामसाह, सन आफ माननरेन्द्र ( माननरेन्द्रसुतश्यामसाहस्य गुरुणा शङ्करेण प्रणीतो वास्तुशास्त्रग्रन्थः, वास्तुशिरोमणिः )।

श्रीए०एस०अल्तेकर—कल्चरल इंपोर्टेन्स आफ संस्कृत लिटरेचर प्रिजर्व्ड इन तिब्बत ( भोटदेशे संरक्षितस्य संस्कृतवाङ्मयस्य सास्कृतिकं महत्त्वम् )।

श्रीलोकेशचन्द्र—ब्राह्मणिका।

श्रीजी०के०भट्ट—दी प्रोब्लेम आफ दी महाभारत प्लेज आफ भास ( भासकृतमहाभारतीयनाटकाना समस्या )।

श्रीपी०नागराज राय—शङ्कर'स मिस्टिसिज्म ( शङ्करस्य मायावादः )।

श्रीआर०डी०करमरकर—दी ड्रामेटिक टर्म्स (नाट्यशास्त्रपारिभाषिकशब्दावलिः)।

स्वामी कुवलयानन्द एण्ड एस०के०शुक्ल—दी गोरक्षशतक : इट्स ओरिजिनल टेक्स्ट ( गोरक्षशतकस्य मूलपाठः )।

श्रीएन०बी०गद्रे—प्रेक्टिकल युटिलिटी आफ रिसर्च लिटरेचर लाइक वाल्यूम्स ६-७ आफ दी मानसार सिरीज ( मानसारग्रन्थावल्याः ६-७ भागसदृशग्रन्थानामनुसन्धानाय प्रायोगिक उपयोगः )।

श्रीडी०डी०कौसाम्बी—ह्वाट कान्स्टीटयूट्स इण्डियन हिस्ट्री (भारतीयेतिहासोपादानम्)।

श्रीजी०वी०तगारे—भावार्थबोधिनी : एन अनपब्लिश्ड कॉमेन्ट्री ऑन दी भगवद्गीता ( भावार्थबोधिनी-भगवद्गीताया एकाऽप्रकाशिता टीका )।

श्रीएस०एन०घोषाल—दी क्रोनोलोजी आफ दी प्राकृतपिङ्गल एण्ड दी छन्दःकोश ( प्राकृतपिङ्गलछन्दःकोशयोः पौर्वापर्यम् )।

श्रीलूदो जे०रोशे०—दी टेक्नीकल टर्म 'अनुबन्ध' इन संस्कृत लीगल लिटरेचर ( संस्कृतधर्मशास्त्रग्रन्थेष्वनुबन्धशब्दस्यार्थः ) ।

श्रीआर०एन०दाडेकर—दी ट्वन्टीथर्ड इन्टरनेशनल कांग्रेस आफ ओरियन्टलिस्ट, कैम्ब्रिज ( केम्बिजनगरे संजातस्य त्रयोविंशतितमस्य आन्तरराष्ट्रियपुरातत्त्वज्ञाना संमेलनस्य विवरणम् ) ।

**कार्टर्ली जर्नल आफ दी माइथिक सोसाइटी वर्ष ४५, अ० ३, जनवरी १९५५**

श्रीजे०रुद्रप्पा—काश्मीर शैविज्म ( काश्मीरं शैवमतम् ) ।

**वर्ष० ४५, अ० ४, अप्रैल १९५५**

श्रीजे०रुद्रप्पा—काश्मीर शैविज्म ( काश्मीरं शैवमतम् ) ।

श्रीके०वी०सुब्रह्मण्य अय्यर—लार्जेस्ट प्रोविंशियल आर्गनाइजेशन्स इन एंश्येन्ट इण्डिया ( प्राचीनभारते बृहत्तमाः प्रादेशिकसंघाः ) ।

**वर्ष० ४६, अ० १, जुलाई १९५५**

श्रीके०वी०सुब्रह्मण्य अय्यर—लार्जेस्ट प्रोविंशियल आर्गनाइजेशन्स इन एंश्येन्ट इण्डिया ( प्राचीनभारते बृहत्तमाः प्रादेशिकसंघाः ) ।

श्रीएस०श्रीकान्तय्या—श्रीशङ्कराचार्य एण्ड हिज मिशन ( श्रीशङ्कराचार्यस्तेषा सम्प्रदायश्च ) ।

डा०बी०एम०आप्टे—व्रत इन दी ऋग्वेद ( ऋग्वेदे व्रतचर्चा ) ।

श्रीएम०बी०नरसिंह आयंगार—न्यायभास्कर आफ अनन्तार्य ( अनन्तार्यकृतन्यायभास्करस्यानुवादः ) ।

**व० ४६, अ० २, अक्टूबर १९५५**

श्रीएस०श्रीकान्तय्या—श्रीशङ्कराचार्य एण्ड हिज मिशन ( श्रीशङ्कराचार्यस्तेषा सम्प्रदायश्च ) ।

श्रीडा०बी०एम०आप्टे—व्रत इन दी ऋग्वेद ( ऋग्वेदे व्रतचर्चा ) ।

श्रीएम०बी०नरसिंह आयंगार—न्यायभास्कर आफ अनन्तार्य ( अनन्तार्यकृतन्यायभास्करस्यानुवादः ) ।

**जर्नल आफ दी अमेरिकन ओरियन्टल सोसाइटी, व० ७५, अ० १, मार्च १९५५**

श्रीडी०डी०कौसाम्बी—दी बेसिस आफ एंश्येन्ट इण्डियन हिस्ट्री—१ (प्राचीनभारतीयेतिहासस्याऽऽधारशिला ) ।

**व० ७५, अ० ३, सितम्बर १९५५**

श्रीएम०बी० एमेनो—इण्डिया एण्ड लिग्विस्टिक्स ( भारतवर्षः शब्दानुशासनं च )।

**व० ७५, अं० ४, दिसम्बर १९५५**

श्रीडी०डी०कौसाम्बी—दी बेसिस आफ एंश्येन्ट इण्डियन हिस्ट्री—२ ( प्राचीन-भारतीयेतिहासस्याऽऽधारशिला )।

श्रीवेमैन एलेक्स—नोट्स आन दी संस्कृत टर्म ज्ञान ( संस्कृतज्ञानपदार्थविमर्शः )।

**जर्नल आफ दी ओरियन्टल इंस्टीट्यूट, बड़ोदा व० ४, अ० २-३, मार्च, १९५५**

डा०एस०एन०व्यास—दी सिविलाइजेशन आफ राक्षसाज इन दी रामायण ( रामायणे वर्णितो राक्षसानामाचारः )।

डा०सी०हूयकास—संस्कृत काव्य एण्ड ओल्ड जावानीज ककविन ( जावाद्वीपीयं प्राचीनं रामायणं संस्कृतकाव्यानि च )।

आर्य रामचन्द्र जी० तिवारी—दी टाइम आफ उत्तरकाण्ड ( वाल्मीकिरामायणस्यो-त्तरकाण्डस्य रचनाकालः )।

श्रीपी०सी०दीवानजी—नेच्युरलिज्म इन ग्रीक एण्ड इण्डियन फिलासफीज (यवन-भारतीयदर्शनयोः प्रकृतिवादः )।

प्रो०एस०एन०घोषाल—डा०एच०याकोबी'ज इन्ट्रोडक्शन टू दी भविसत्तकहा ( डा०एच० याकोबीविरचिता भविसत्तकहाभूमिका—जर्मनभाषातोऽनूदिता )।

डा०बी०जे०साडेसरा—गङ्गादासप्रतापविलास बाई गङ्गाधर ( गङ्गाधरप्रणीतं गङ्गादास-प्रतापविलासनाटकम् )।

डा०जे०एस०जेतली—दी विवरणपञ्जिका आफ अनिरुद्ध ( अनिरुद्धप्रणीता विवरण-पञ्जिका न्यायभाष्यवार्त्तिकादिव्याख्या )।

श्रीशिवदास चौधरी—ए कंकोर्डेन्स टू दी धम्मपद ( धम्मपदवचनानुक्रमकोशः )।

श्रीजे०पी०ठाकर—दी इम्पोर्टेंस आफ हेमचन्द्राचार्या'ज त्रिषष्टिशलाकापुरुषचरित ( हेमचन्द्राचार्यप्रणीतत्रिषष्टिशलाकापुरुषचरितस्य महत्त्वम् )।

**व० ५, अ० १, सितम्बर १९५५**

डा०एस०एन०व्यास—दी पिपुल आफ दी रामायण एज ( रामायणकालिको मानवः )।

श्रीरामशङ्कर भट्टाचार्य—सम चीफ करेक्टरेस्टिक्स आफ पाणिनि इन कम्परीजन टू हिज प्रेडीसेसर्स ( प्राचीनेभ्यो व्याकरणाचार्येभ्यः पाणिनेर्वैशिष्ट्यम् )।

श्रीव्रतीन्द्रकुमार सेनगुप्त—इज शङ्कर ए क्रप्टो बुद्धिस्ट ? ( कि शङ्कराचार्यः प्रच्छन्नबौद्धः ? )।

डा०एस०एन०घोषाल—डा०एच०याकोबी'ज इन्ट्रोडक्शन टू दी भविसत्तकहा ( डा०एच०याकोबीप्रणीता भविसत्तकहाभूमिका )।

श्रीहजरत इनायतखाँ — दी म्यूजिक आफ इण्डिया ( भारतीयं संगीतम् )।

डा०सी०बुल्के—दी जेनेसिस आफ दी वाल्मीकि रामायण रिसेन्शन्स ( वाल्मीकीय-रामायणस्य पाठभेदप्रादुर्भूतिः।

डा०सी०हूयकास —दी बुद्धिस्ट लीजेन्ड आफ कुञ्जरकर्ण एण्ड पूर्णविजय (बौद्धग्रन्थेषु कुञ्जरकर्णपूर्णविजययोरुपाख्यानम् )

डा०वी०एस०अग्रवाल—नाट्य इन अपभ्रंश लिटरेचर (अपभ्रंशवाङ्मये नाट्यशब्दः)।

## जर्नल आफ ओरियन्टल रिसर्च मद्रास, व० २३, अ० १-४, जून १९५४

श्रीएन०रघुनाथ अय्यर—दी वर्ल्ड आफ वाल्मीकि ( वाल्मीकिनोपवर्णितं जगत् )।

श्रीटी०वी०महालिङ्गम्—संस्कृत स्टडीज इन साउथ इण्डिया ( दक्षिणभारते संस्कृताध्ययनम् )।

श्रीएम०सोमशेखर शर्मा—शैव डिवोनेशनल लिटरेचर रेफर्ड टू इन दी पण्डिता-राध्यचरित आफ पालकुरिकि सोमनाथ ( पालकुरिकिसोमनाथविरचिते पण्डिता-राध्यचरिते उद्धृतः शिवभक्तिसाम्प्रदायिको वाङ्मयः )।

श्रीके०ए०सुब्रह्मण्य अय्यर—आन दी कन्सेप्ट आफ उपग्रह अमोंग दी वैयाकर-णाज ( वैयाकरणानामुपग्रहविवेचनम् )।

म०म०पी०वी० काणे—किंग भोज एण्ड हिज वर्क्स ऑन धर्मशास्त्र एण्ड एस्ट्रो-लॉजी ( भोजराजस्य धर्मशास्त्रीयाः फलितज्यौतिषसंबन्धिनश्च ग्रन्थाः )।

अर्थशास्त्रव्याख्या जयमङ्गला ( ग्रन्थः )।

ग्रहाचारनिबन्धनं हरिदत्तप्रणीतम् ( ग्रन्थः )।

**जर्नल आफ दी त्रिवेन्द्रम् युनिवर्सिटी ओरियन्टल मैन्युस्क्रिप्ट लाइब्रेरी, व० ८, अ० १**

अरुणस्तम्बाद्रिनाथास्तोत्रम्, अज्ञातकर्तृकम् ।

अभिज्ञानशकुन्तलचर्चा ।

त्रिपुरदहनं यमककाव्यं वासुदेवप्रणीतम्, पङ्कजाक्षविरचितव्याख्यासहितम् ।

शिवविलासकाव्यं दामोदरप्रणीतम् ।

सीताराघवं रामपाणिवादप्रणीतम् ।

**व० ८, अ० ३, सन् १९५५**

मुक्तिपुरस्थदेवीस्तोत्रम्, अज्ञानकर्तृकम् ।

त्रिपुरदहनं यमककाव्यं वासुदेवप्रणीतम्, पङ्कजाक्षविरचितव्याख्यासहितम् ।

शिवविलासकाव्यं दामोदरप्रणीतम् ।

होराभिप्रायनिर्णयः ।

भ्रमरकाहली प्रभाकराचार्यप्रणीता ( रूपकम् ) ।

शिवस्तुतिः, अज्ञातकर्तृका ।

उषापरिणयप्रबन्धः ।

अभिज्ञानशकुन्तलचर्चा ।

सीताराघवं रामपाणिवादप्रणीतम् ।

**दी जर्नल आफ दी बिहार रिसर्च सोसाइटी व० ४१, अ० १, मार्च १९५५**

डा०टी०पी०भट्टाचार्य—दी कल्ट आफ ब्रह्मा ( परमेष्ठिपूजासंप्रदायः ) ।

श्रीबलभद्र झा—विलेज इन एंश्येन्ट इण्डिया ( प्राचीनभारतीया ग्रामाः ) ।

श्रीचन्द्रनारायण मिश्र – अद्वैत वेदान्त की अविद्या के लक्षण में आरोपित अव्याप्ति दोष और उसका परिहार ।

**व० ४१, अ० २, जून १९५५**

आचार्य परमानन्दन शास्त्री—प्राचीन तिब्बत में आयुर्वेद का प्रचार ।

श्रीएस०वी०सोहानी—कालिदास, हाल सातवाहन एण्ड चन्द्रगुप्त–२ ( कालिदासः, हालसातवाहनः, द्वितीयश्चन्द्रगुप्तश्च ) ।

**व० ४१, अ० ३, सितम्बर १९५५**

प्रो०राधाकृष्ण चौधरी—बिहार इन कालिदासा'ज वर्क्स ( कालिदासरचनासु बिहार-प्रदेशस्य समुल्लेखः ) ।

श्रीएस०वी०सोहानी—रेफरेन्स टू सातवाहन कोइनेज इन गाथासप्तशती ( गाथासप्तशत्यां सातवाहननाणकाना समुल्लेखः ) ।

**जर्नल आफ दी म्यूजिक एकेडमी, मद्रास व० २४, अ० १-४, सन् १९५३**

श्रीआलेन दानिलु—रिसर्च ऑन इण्डियन म्यूजिक ( भारतीयसंगीतशास्त्रेऽनुसन्धानम् ) ।

श्रीरवीन्द्रलाल राय—ऑन ट्रांसफोर्मेशन आफ स्थायाज ( स्थायाना रूपपरिवर्तनम् ) ।

श्रीएस०वेङ्कट सुब्रह्मण्य अय्यर—दी रागमालिकाज आफ स्वाति तिरुनल ( स्वाति-तिरुनलप्रणीता रागमालिकाः ) ।

श्रीएस०पार्थसारथि—ए स्टडी ऑफ श्रीत्यागराज ( श्रीत्यागराजस्याध्ययनम् ) ।

श्रीरवीन्द्रलाल राय—फिलासफी आफ म्यूजिक ( संगीतशास्त्रस्य दर्शनम् ) ।

स्वरार्णवः, त्यागराजप्रणीतः ( ग्रन्थः ) ।

हस्तमुक्तावली, शुभङ्करविरचिता ( ग्रन्थः ) ।

**जर्नल आफ दी युनिवर्सिटी आफ बोम्बे, व० २४, अ० २, सितम्बर १९५५**

श्रीएच०डी०वेलणकर—हिम्स टू अग्नि इन मण्डल-६ ( ऋग्वेदषष्ठमण्डलस्थानि अग्निसूक्तानि ) ।

श्रीपी०एस०सेन—प्रेक्टिकल यूज आफ मीमांसा रूल्स इन दी फील्ड आफ धर्मशास्त्र (धर्मशास्त्रप्रकरणेषु मीमांसानियमाना प्रायोगिक उपयोगः) ।

श्रीवी०एम०कुलकर्णी—दी प्रोब्लेम आफ पताकास्थानक ( पताकास्थानकस्य समस्या ) ।

श्रीएच०आर०कापडिया—इलस्ट्रेशन्स आफ लेटर-डायग्राम्स ( खड्गमुरजादिशब्द-बन्धाना सचित्रोपपत्तिः ) ।

**जर्नल आफ दी यू० पी० हिस्टोरिकल सोसाइटी, व० २४-२५, सन् १९५१-५२**

डा०मोतीचन्द्र—टेक्नीकल आर्ट्स इन एंश्येन्ट इण्डिया ( प्राचीनभारतीयं शिल्पशास्त्रम् ) ।

श्रीविश्वम्भरशरण पाठक—दी अर्ली वैष्णव पेन्थोन ( प्राचीनो वैष्णवसिद्धान्तः ) ।

श्रीनीलकण्ठ पुरुषोत्तम जोशी—विनयपिटक के आधार पर भारतीय भौतिक जीवन की झलक।

श्रीफतेहचंद बेलाणी—प्राकृत साहित्य।

डा०वासुदेवशरण अग्रवाल—सामन्त।

डा०वासुदेवशरण अग्रवाल—धातूत्पत्ति ( ठक्कुर फेरू रचित प्राकृत ग्रन्थ )।

**जर्नल आफ दी रॉयल एशियाटिक सोसाइटी, लंदन, अ० १-२, सन् १९५५**

श्रीएच०डब्ल्यू०बेली—बुद्धिस्ट संस्कृत ( बौद्धसंस्कृतम् )।

श्रीडी०आर०शाकलेटन बेली—दी टेक्स्ट आफ दी धर्मसमुच्चय ( धर्मसमुच्चयस्य सद्धर्मस्मृत्युपस्थानसूत्रत: संकलितस्य मूलग्रन्थ: )।

**जर्नल आफ श्रीवेङ्कटेश्वर ओरियन्टल इंस्टीट्यूट, व० १५, अ० १, जून १९५४**

श्रीडी०टी०ताताचार्य—मैथड्स आफ वेदिक इन्टरप्रिटेशन ( वेदवाक्यानामर्थावधारणस्य विभिन्ना: पद्धतय: )।

श्रीरामशङ्कर भट्टाचार्य—दी महाभाष्य वर्सस दी काशिका ( महाभाष्यविरोधिनी काशिका )।

पण्डितकें०के०नरसिंहाचार्य:—श्रीपद्मावतीविजय:।

श्रीटी०के०वी०एन०सुदर्शनाचार्य:—व्यातितत्त्वरहस्यम्।

**व० १५, अ० २, दिसम्बर १९५४**

श्रीके०एस०एन०ब्रह्मन्—दण्डिन् एण्ड हिज स्कूल (आचार्यो दण्डी, तत्संप्रदायश्च)।

श्रीरामशङ्कर भट्टाचार्य—सम करेक्टरेस्टिक्स आफ दी एक्सप्रेशन आफ पतञ्जलि ( पतञ्जलिवाक्याना कानिचन वैशिष्ट्यानि )।

श्रीआर्य रामचन्द्र तिवारी—जैनिज्म इन प्री-हिस्टोरिक इण्डस वेली सिविलाइजेशन ( प्रागैतिहासिक: सिन्धुसभ्यताकालिको जैनसंप्रदाय: )।

श्रीएन०सुब्रह्मण्य शास्त्री—सम करेक्टरेस्टिक्स आफ संस्कृत लिटरेचर ( संस्कृतवाङ्मयस्य कानिचन वैशिष्ट्यानि )।

श्रीटी०वेङ्कटाचार्य:—कादम्बरीमधुरिमा।

प०के०के०नरसिंहाचार्य:—श्रीपद्मावतीविजय:।

श्रीटी०के०वी०एन०सुदर्शनाचार्य:—श्रीशैलाधीशस्तुति:।

**जैन-सिद्धान्त भास्कर,व०२१,अ०१ जून १९५४,जैन एन्टिक्वेरी,अ०२०,न०१,जून१९५४**

श्रीरत्नचन्द्र अग्रवाल—मध्यकालीन जैन साहित्य मे मुद्रा संबन्धी सामग्री।

श्रीकालिपद मित्र—सम टेल्स आफ दी बृहत्कथाकोश, देयर ओरिजिनल्स एण्ड पेरेलल्स (बृहत्कथाकोषस्य काश्चन कथाः, तत्समाना अन्याः कथाः, तासा मूल च)।

प्रो०रामजीसिह—स्याद्वाद ऑन एपिस्टोमोलॉजिकल सोल्यूशन आफ वर्ल्ड टेंशन (स्याद्वादमतं वर्तमानाया जगति प्रसृताया अशान्तेर्शानात्मकः शमनोपायः)।

**जैन-सिद्धान्त भास्कर, व० २१, अ० २, दिसम्बर १९५४, जैन एन्टिक्वेरी, व० २०, अ० २, दिसम्बर १९५४**

श्रीअगरचन्द्र नाहटा—ज्योतिष संबन्धी कतिपय अज्ञात जैन ग्रन्थ।

डा०एस०श्रीकण्ठशास्त्री—विद्यानन्द।

श्रीकालिपद मित्र—सम टेल्स फ्रोम दी नन्दीसूत्र एण्ड देयर पेरेलल्स (नन्दीसूत्रस्य काश्चन कथाः, तत्समाना अन्याः कथाश्च)।

**नागरीप्रचारिणी पत्रिका, व० ६०, अ० १, संवत् २०१२**

डा०राजबली पाण्डेय—भारत में जातीय मिश्रण की समस्या।

श्रीरामसुरेश त्रिपाठी—संस्कृत व्याकरण दर्शन मे परावाक् का स्थान।

श्रीअगरचंद नाहटा—वास्तुविद्या-संबन्धी साहित्य-सूची।

**फिलासफिकल कार्टर्ली, व० २७, अ० ४, जनवरी १९५५**

श्रीआर०वी०डे सूमेत—दी करेक्ट इण्टरप्रिटेशन आफ दी डिफिनिशन्स आफ दी ऐब्सोल्यूट, एकोर्डिंग टू शंकराचार्य एण्ड सेन्ट थामस एक्विनस (शङ्कराचार्यसेन्टथामस-एक्विनसमतयोः परमतत्त्वस्य परिभाषायाः सुस्पष्टं व्याख्यानम्)।

श्रीआर०दास—इंमोर्टिलिटी आफ दी सेल्फ (आत्मनोऽमरत्वम्)।

श्रीविलियम एफ० गुदविन—थ्योरीज आफ कॉंससनेस एण्ड लिबरेशन इन दी साख्य फिलासफी एण्ड दी फिलासफी आफ जार्ज सेन्तायन (जार्जसेन्तायनमते साख्यदर्शने च मुक्तेश्चेतनायाश्च स्वरूपम्)।

श्रीएस०ऊकरजी—दी नेचर आफ लॉजिकल लाज (तर्कशास्त्रनियमाना स्वरूपम्)।

श्रीए०के०सरकार—चेंजिग फेजेज आफ बुद्धिस्ट थोट (बौद्धविचाराणा परिवर्तिताः स्थितयः)।

श्रीजे०एन०छब्ब—दी लॉजिक आफ दी इनफिनिट ( अनन्ततासमर्थिका युक्तयः )।

व० २८, अ० १, अप्रैल १९५५

श्रीप्रवासजीवन चौधरी—मीनिग एण्ड वेरिफिकेशन आफ नॉलेज ( ज्ञानपदार्थस्तस्य परीक्षणं च )।

व० २८, अ० २, जुलाई, १९५५

श्रीए०आर०वाडिया—दी कन्सेप्ट आफ एशियन कल्चर ( एशियामहादेशीयसंस्कृति-विचारः )।

श्रीमती अलोकदेवी चट्टोपाध्याय—इज शङ्कर ए रियलिस्ट ( कि शङ्कराचार्यो याथातथ्यवादी )।

व० २८, अ० ३, अक्टूबर १९५५

श्रीजी०आर०मलकानी—वेलिडिटी एण्ड इन्वेलिडिटी इन नॉलेज ( ज्ञानस्य प्रामाण्या-प्रामाण्यविचारः )।

श्रीएम०यामुनाचार्य—एस्पेक्ट्स आफ डाइटी इन विशिष्टाद्वैत फिलॉसफी ( विशिष्टा-द्वैतदर्शने देवतातत्त्वविचारः )।

श्रीहरिमोहन झा—दी फंक्शन आफ अवच्छेदकता इन इण्डियन लॉजिक ( भारतीय-न्यायशास्त्रेऽवच्छेदकताया व्यवहारः )।

बुलेटिन आफ दी डेक्कन कालेज रिसर्च इंस्टीट्यूट, व० १५, अ० १-२, सितम्बर १९५३

श्रीजी०बी०पलसुले—ए कंकोर्डेन्स आफ संस्कृत धातुपाठाज ( संस्कृतधातुपाठा-नुक्रमकोशः—द्वादशधातुपाठानवलम्ब्य संगृहीतः सार्थः )।

ब्रह्मविद्या, व० १९, अ० १-२, मई १९५५

श्रीएफ०ऑत्तो श्रादर—साङ्ख्य, ओरिजिनल एण्ड क्लासिकल ( प्राचीनमभिनवं च साङ्ख्यशास्त्रम् )।

श्रीजे०ए०बी वान ब्युतनन—दी शुभाश्रयप्रकरण ( विष्णुपुराण ६,७ ) एण्ड दी मीनिग आफ भावना ( शुभाश्रयप्रकरणे विष्णुपुराणीये भावनाशब्दार्थः )।

श्रीअंजलि मुखोपाध्याय—ट्रेडीशनल लोर रिगार्डिंग मंजुश्री (मञ्जुश्रीसंबन्धिजनश्रुतयः)।

डा०वी०राघवन्—कोटेशन्स इन भावप्रकाशन आफ शारदातनय ( शारदातनयस्य भावप्रकाशने उद्धृतानि वाक्यानि )।

श्रीशिवप्रसाद भट्टाचार्य—दी योगवासिष्ठ कन्सेप्शन आफ दी एसेन्स आफ डिवाइन वर्शिप ( योगवासिष्ठीयं देवपूजातत्त्वम् )।

श्रीरोनाल्ड एम०स्मिथ—दी स्टोरी आफ अम्बा इन दी महाभारत ( महाभारतीयम् अम्बोपाख्यानम् )।

**व० १६, अ० ३-४, दिसम्बर १६५५**

डा०के०कुंजुन्नी राजा—इण्डियन थ्योरीज ऑन होमोफोन्स एण्ड होमोनीम्स ( नानार्थकशब्दाना भारतीयं विवेचनम् )।

श्रीए०एन०कृष्ण आयङ्गार—दी थ्री सेक्रेट्स ( रहस्यत्रय ) आफ विशिष्टाद्वैत (विशिष्टाद्वैतदर्शने रहस्यत्रयम् )।

श्रीके०वी०शर्मा—दी सिद्धान्तदर्पण आफ गार्ग्य-केरल नीलकण्ठ सोमयाजिन् ( गार्ग्य-केरलनीलकण्ठसोमयाजिना प्रणीतं सिद्धान्तदर्पणम्—ज्यौतिषग्रन्थः )।

**भारती, व० ६, अ० १, कार्तिकः, संवत् २०१२**

श्रीरामप्रपन्नशर्मा—श्रीरामस्य राज्याभिषेकसमयः।

**व० ६, अ० २, मार्गशीर्षः, संवत् २०१२**

श्रीप्रेमशङ्करमिश्रः—कालिदासाभिमतं राजतन्त्रम्।

**व० ६, अ० ३, पौषः, संवत् २०१२**

श्रीसाधुराम एम०ए०—धर्मशास्त्राणां परमाश्रयिणी उपादेयता।

**व० ६, अ० ४, माघः, संवत् २०१२**

डा०शङ्करलाल शर्मा—संस्कृतपत्राणां विहङ्गमावलोकनमुपयोगित्वं च।

**व० ६, अ० ५, फाल्गुनः, संवत् २०१२**

श्रीवासुदेवशास्त्री वागेवाडीकर—अनङ्गप्रभा।

**भारतीय विद्या, व० १५, अ० १, सन् १६५४**

श्रीसदाशिव एल०कात्रे—काशी-विश्वनाथ टेम्पुल : ए ब्रीफ सर्वे (काशीविश्वनाथमन्दिरस्य संक्षिप्तमितिवृत्तम्)।

श्रीएन०देवराज शर्मा—गणेश एण्ड दी एन्टिक्विटी आफ सम शैव मिथ्स ( प्राचीनेषु शैवोपाख्यानेषु गणेशचर्चा )।

श्रीरामशङ्कर भट्टाचार्य—इम्पोर्टेन्स आफ दी फर्स्ट वर्ड्स आफ दी गणपाठाज ( गणपाठीयाऽऽद्यशब्दाना महत्त्वम् ) ।

श्रीएच०डी०वेलणकर—माण्डलिक महाकाव्य आफ गङ्गाधर कवि ( गङ्गाधरकविविरचितं माण्डलिकमहाकाव्यम्—पञ्चमसर्गपर्यन्तम् ) ।

**मञ्जूषा, व० १०, अ० १, सितम्बर, १९५५**

श्रीक्षितीशचन्द्रचट्टोपाध्यायः—अष्टाध्याय्या निपातानुबन्धाः ।

श्रीपुरुषोत्तमदेवविरचिता भाषावृत्तिः ( ग्रन्थः ) ।

**व० १०, अ० २, अक्टूबर १९५५**

प०क्षमारावलिखितं होलिकोत्सवम् ( नाटकम् ) ।

श्रीक्षितीशचन्द्रचट्टोपाध्यायः—वैदिकसूत्रपाठविमर्शः ।

श्रीक्षितीशचन्द्रचट्टोपाध्यायः—अपेक्षा ।

श्रीकृष्णस्वामी अय्यरः—गुरुश्चिन्ताविषयः ।

**व० १०, अ० ३, नवम्बर, १९५५**

श्रीजीवन्यायतीर्थरचितं क्षुत्क्षेमीयम् ( प्रहसनम् ) ।

**व० १०, अ० ४, दिसम्बर १९५५**

प०क्षमारावलिखितः कटुविपाकः ( नाटकम् ) ।

श्रीगजाननलक्ष्मणरेगे—गीतोपदिष्टकर्मयोगस्वरूपम् ।

**राजस्थान भारती, व० ४, अ० ४, अगस्त १९५५**

श्रीरत्नचन्द्र अग्रवाल—राजस्थान मे विष्णुपूजा ।

**वाक्, नं० ४, अक्टूबर १९५४**

श्रीक्षितीशचन्द्र चटर्जी—क्रिटिकल आब्जर्वेशन्स ऑन दी नानार्थसंग्रह आफ अजयपाल ( अजयपालप्रणीतनानार्थसंग्रहस्य समालोचनात्मिका समीक्षा ) ।

श्रीक्षितीशचन्द्र चटर्जी—संप्रसारणम् ।

श्रीक्षितीशचन्द्र चटर्जी—ऑन दी टेक्स्ट आफ दी अथर्ववेद ( अथर्ववेदपाठविमर्शः ) ।

श्रीलुइस रेनो—रिमार्केबुल वर्ड्स ( एण्ड मीनिंग्स ) फ्रोम दी बृहत्कथाश्लोकसंग्रह ( बृहत्कथाश्लोकसंग्रहस्य विशिष्टानि पदानि तेषामर्थाश्च ) ।

श्रीलुइस रेनो—रिमार्केबुल वर्ड्स फ्रोम दी काव्यमीमांसा ( काव्यमीमांसाया विशिष्टानि पदानि ) ।

श्रीलुइस रेनो—वर्ड्स एण्ड वर्ड-फोर्म्स पर्टीक्युलर टू दी काण्वसंहिता ( काण्वसंहिताया विशिष्टानि पदानि पदरूपाणि च ) ।

**विश्वभारती क्वार्टर्ली, व० २०, अ० ३, सन् १९५५**

श्रीवाल्तर लीबेन्थाल—ऑन वर्ल्ड-इन्टरप्रिटेशन–२ ( संसारस्वरूपमीमांसा ) ।

श्रीजे०बी० एस० हालदान—नान-वायलेन्ट बायोलोजी ( अहिंसात्मिका प्राणिविद्या ) ।

**शोधपत्रिका, व० ६, अ० ४, आषाढ़, संवत् २०१२**

महापण्डित राहुल सांकृत्यायन—महापरिनिर्वाणसूत्रम् ( ग्रन्थः ) ।

**व० ७, अ० १, आश्विन, संवत् २०१२**

डा०पी०के०गोडे—भारत मे प्रतिमाला या अन्त्याक्षरिका अथवा भरणी का इतिवृत्त ।

डा०कन्हैयालाल सहल—कहावत और लौकिक न्याय ।

श्रीरामशङ्कर भट्टाचार्य—मत्स्यपुराण के कुछ द्रष्टव्य स्थल ।

**संमेलनपत्रिका, व० ४१, अ० २, चैत्र, संवत् २०१२**

डा०शान्तिकुमार नानूराम व्यास—रामायणकालीन वर्ण-व्यवस्था ।

श्रीपरशुराम चतुर्वेदी—चौरासी सिद्ध ।

**व० ४१, अ० ३, आषाढ़, संवत् २०१२**

डा०सूर्यकान्त—वैदिक सरस् तथा सोम ।

श्रीरत्नचन्द्र अग्रवाल—प्राचीन भारतीय साहित्य एवं शिलालेखो में विदेशी शासकवर्ग के मुद्रा-संबन्धी कुछ शब्द ।

श्रीभरतसिंह उपाध्याय—ध्यान बौद्धधर्म : एक परिचय ।

श्रीरामशङ्कर भट्टाचार्य—भारतीय न्यायशास्त्र में प्रतीकाश्रित चिन्ता का अभाव ।

**व० ४१, अ० ४, आश्विन, संवत् २०१२**

महापण्डित राहुल सांकृत्यायन—बौद्धधर्म की देन ।

डा०कन्हैयालाल सहल—कहावतों का उद्भव और विकास ।

श्रीमधुसूदन मिश्र—शब्द-सन्तति ।

व० ४२, अ० १ पौष, संवत् २०१२

डा०बुद्धप्रकाश—कालिदास और हूण।

श्रीरत्नचन्द्र अग्रवाल—भारतीय संस्कृति के उपासक विदेशी यवन, शक तथा हूण।

श्रीरामशङ्कर भट्टाचार्य—मासतत्त्वविवेक।

डा०सरला शुक्ल—संत अकबरशाह एवं शृङ्गार-मञ्जरी।

श्रीकान्ति द्विवेदी—वैष्णव साहित्य और संप्रदाय में राधा।

संस्कृतरत्नाकरः, व० १७, अ० १, चैत्रः, संवत् २०१२

म०म०गिरिधरशर्मा चतुर्वेदी—संस्कृतसाहित्यसंमेलनस्यात्मकथा।

डा०बहादुरचन्द्रः छावडा—घोषितारामगन्धकुटीप्रदीपः।

श्रीदेवीनारायणो विद्यासागरः—मुसलमानविदुषां संस्कृतवाङ्मयसेवा।

श्रीजनार्दनभट्टः—बृहत्तरभारते भारतसंस्कृतिसाम्राज्यम्।

व० १७, अ० २-३, वैशाखज्येष्ठौ, संवत् २०१२

डा०इलाचन्द्रः शास्त्री—सौन्दरनन्द महाकाव्यम्।

श्रीकेदारनाथ ओझा—अनुभववादः।

प्रो०साधुराम एम०ए०—कालिदाससमये चित्रकला।

श्रीगणेशरामशर्मा—भारतीयं सगीतशास्त्रम्।

व० १७, अ० ४, आषाढः, सवत् २०१२

श्रीगणेशरामशर्मा—भारतीयं संगीतशास्त्रम्।

श्रीगुण्डेराव हरकारे—लक्ष्यार्थस्य व्यञ्जकता।

श्रीकेदारनाथ ओझा—अनुभववादः।

व० १७, अ० ५, श्रावणः, संवत् २०१२

श्रीगणेशरामशर्मा—भारतीयं संगीतशास्त्रम्।

श्रीसुरजनदासशास्त्री – वेदेषु इतिहासः।

व० १७, अ० ६, भाद्रपदः, संवत् २०१२

श्रीगणेशरामशर्मा—भारतीयं संगीतशास्त्रम्।

श्रीलीलाधरशर्मा—आचार्यगोवर्द्धनः।

श्रीरतनलालमिश्रः—गणतन्त्रस्य सफलतमः प्रयोक्ता वीरविक्रमादित्यः।

व० १७, अ० ७, आश्विनः, संवत् २०१२

श्रीगणेशरामशर्मा—भारतीयं संगीतशास्त्रम् ।

व० १७, अ० ८, कार्तिकः, संवत् २०१२

श्रीकृष्णलाल बी०ए०—विश्वसाहित्ये संस्कृतप्रभावः ।

श्रीगणेशरामशर्मा—भारतीयं संगीतशास्त्रम् ।

श्रीरामशङ्करभट्टाचार्यः—स्कन्दपुराणस्याध्ययनम् ।

व, १७, अ० ६, मार्गशीषः, संवन् २०१२

श्रीनारायणशास्त्री काङ्करः—संस्कृतभाषाया अन्ताराष्ट्रियं महत्त्वम् ।

श्रीवेङ्कटरमण-अय्यरः—कालिदासविषये ।

व० १७, अ० १०, पौषः, सवन् २०१२

श्रीकेदारनाथशर्मा सारस्वतः—आर्यकौटिल्यः, अर्थशास्त्रं च ।

श्रीनारायणशास्त्री काङ्करः—संस्कृतभाषाया अन्ताराष्ट्रियं महत्त्वम् ।

श्रीरामशङ्करभट्टाचार्यः—स्कन्दपुराणस्याध्ययनम् ।

व० १७, अ० ११, माघः, संवत् २०१२

श्रीबलदेव उपाध्यायः—प्राचीनभारते मृत्तैलम् ।

श्रीरामशङ्करभट्टाचार्यः—स्कन्दपुराणस्याध्ययनम् ।

व० १७, अ० १२, फाल्गुनः, संवन् २०१२

श्रीयुधिष्ठिरमीमांसकः—काशकृत्स्नीयो धातुपाठः ।

रामकीर्त्तिकुमुदमाला, अप्रकाशितं मुक्तककाव्यम् ।

समाज, व० १, अ० १, अप्रैल १६५५

डा०इरावती कर्वे—संस्कृति और आधुनिक जगत् ।

डा०राधाकमल मुखर्जी—भाषा का सामाजिक महत्त्व ।

व० १, अ० २-३, जुलाई-अक्टूबर १६५५

डा०जे०डी०एन०वमुलें—अन्तर-सांस्कृतिक और अन्तर-वैज्ञानिक सामाजिक अनुसन्धान ।

प्रो०राजाराम शास्त्री—संयुक्त हिन्दू परिवार ।

---

# सम्पादकीयम्

## उत्तरप्रदेशीया द्वितीया पाञ्चवर्षिकी योजना, संस्कृत च

संस्कृतविश्वपरिषदश्चतुर्थाधिवेशनावसरे महामान्यश्रीक०मा०मुंशीमहोदयैरुक्तम्—

"अस्त्येक एवोपायः संस्कृतस्य स्थैर्यसम्पादने। स च पाञ्चवर्षिकयोजनाया तदर्थं द्रव्यपरिकल्पनम्। येन केन्द्रीयप्रान्तीयशासनानि देशेऽस्मिन् त्रिचतुरान् संस्कृतमेवावलम्ब्य पाठयतः संयोजितपाठशालान् संस्कृतविश्वविद्यालयान् स्थापयितुं शक्नुयुः, सर्वेषु विश्वविद्यालयेषु संस्कृतविद्यापीठानि स्थापयेयुः, पाठशालाभ्यः पर्याप्तं द्रव्यं वितरेयुः, अप्रकाशिताना संस्कृतग्रन्थाना संग्रहार्थं प्रकाशनार्थं च द्रव्यं प्रयच्छेयुः, राष्ट्रीयप्राचीनेतिहासप्रमाणसंग्रहालये तादृश संस्कृतग्रन्थालयमपि स्थापयेयुर्यत्र सर्वेषा हस्तलिखितग्रन्थाना चित्राणि संगृह्येरन्" इति।

उत्तरप्रदेशीया द्वितीया पाञ्चवर्षिकी योजना सत्यं मुंशीमहोदयनिर्दिष्टाः सर्वा आशाः परिपूरयति। सर्वप्रथममत्र संस्कृतविश्वविद्यालयस्थापनायाशीतिसहस्रोत्तरद्वात्रिंशल्लक्षरूप्यकपरिमितो धनराशिः कल्पितः, येन हि साम्प्रतिको राजकीयसंस्कृतमहाविद्यालयो विश्वविद्यालयरूपेण परिणमयिष्यते। अनेन धनराशिना विश्वविद्यालयकार्यालयादिभवननिर्माणादिकमनेकेषु विषयेषु प्राध्यापकनियोजनादिकं कार्यजातं संपत्स्यते। राजकीयसंस्कृतमहाविद्यालयपरीक्षाभिरुत्तरप्रदेशस्था बहिस्थाश्च सहस्राधिकाः पाठशालाः संबद्धाः सन्ति। उत्तरप्रदेशस्थानां पाठशालाना साहाय्यार्थमत्र पञ्चविंशतिसहस्राधिकद्वादशलक्षरूप्यकाणि निर्धारितानि सन्ति। साम्प्रतमुत्तरप्रदेशे ४१८ पाठशाला राजकीयं साहाय्यं लभन्ते, आसु ६८ पाठशाला आदर्शपाठशालात्वेन व्यवस्थापिताः। अनेन निर्धारितेन धनराशिनाऽन्यासा ६८ विशिष्टपाठशालानामादर्शपाठशालात्वेन परिणतिर्भविता। द्विशतपाठशालाभ्यः प्रत्येकं सहस्ररूप्यकाणा वार्षिकं साहाय्यम्, पञ्चाशत् पाठशालाभ्यश्च प्रत्येकं पञ्चसहस्ररूप्यकाणि भवननिर्माणार्थं प्रदास्यन्ते। पाठशालाना निरीक्षणस्य सुव्यवस्थायै द्वावन्यौ सहायकनिरीक्षकौ नियोक्ष्येते। एतदर्थं ६५६५२ रूप्यकाणा व्ययो निर्धारितः। साम्प्रतं एकः प्रधाननिरीक्षकः, त्रयश्च सहायकनिरीक्षका वर्तन्ते। द्वयोरन्ययोरपि सहायकनिरीक्षकयोर्नियोजने संजाते पञ्चधा विभक्तस्योत्तरप्रदेशस्य प्रत्येकभागस्य निरीक्षणायैकैकः सहायकनिरीक्षकस्तत्र तत्र विभागे स्वकार्यालयेन सह वर्तिष्यते।

## सम्पादकीयम्

राजकीयसंस्कृतमहाविद्यालयस्य पुस्तकालये सरस्वतीभवने हस्तलेखाना षष्टिसहस्रपरिमिताना महान् संग्रहो वर्तते। एषा ग्रन्थाना न चिरात् सूचीनिर्माणाय, विशिष्टाना ग्रन्थानां प्रकाशनाय, हस्तलेखाना संग्रहाय, विशालस्य पुस्तकालयभवनस्य च निर्माणायाख्या योजनाया ६०५७७७ रूप्यकाणि निर्धारितानि सन्ति। तत्र प्रतिवर्षं ग्रन्थाना प्रकाशनाय पञ्चाशत्सहस्ररूप्यकाणि, हस्तलेखाना संग्रहाय संरक्षणाय च विंशतिसहस्ररूप्यकाणि निर्धारितानि वर्तन्ते। सरस्वतीभवनाय हस्तलेखाना छायाचित्रग्राहकाणि यन्त्राणि क्रीतानि। एवं चात्र हस्तलेखाना संग्रहप्रकाशनयोः, तेषा छायाचित्रसंग्रहस्य च शोभना व्यवस्थाऽनया योजनया संपादिता। आशास्यते द्वितीयाऽऽयोजनगृहीतशम्बलोऽयं महाविद्यालयो विश्वविद्यालयरूपेण परिणंस्यते, सरस्वतीभवनं च संस्कृतवाङ्मयानुशीलनस्य विशालं केन्द्रं संपत्स्यते ॥

### संस्कृतविश्वपरिषदश्चतुर्थमधिवेशनम्

दक्षिणभारतस्यान्ध्रप्रदेशस्य सुप्रथिते तिरुपतिनामके तीर्थस्थले राष्ट्रपतीना महामान्यश्रीराजेन्द्रप्रसादमहाभागानामाध्यक्ष्ये कार्तिककृष्णद्वादशीशुक्रवासरतः कार्तिककृष्णचतुर्दशीरविवासरं यावत् ( ११-१३ नवम्बर, १९५५ ई० ) संस्कृतविश्वपरिषदश्चतुर्थमधिवेशनं संपन्नमिति जानन्त्येव विद्वच्चणाः। अत्र सार्द्धैकसहस्रं प्रतिनिधयो विद्वत्तल्लजाः, संस्कृतप्रिया बहवो भारतीयशासकाश्च समुपस्थिता आसन्। इदमेवास्याधिवेशनस्य किमुत संस्कृतविश्वपरिषदो वैशिष्ट्यं यदत्र प्राचीनामध्ययनप्रणालीमनुसरन्तः पण्डिताः, नूतनामालोचनात्मिका सरणि क्षुन्दन्तः प्राध्यापकाः, संस्कृतप्रियाः शासकाश्च समवेत्य देववाण्याः समुन्नत्यर्थं प्रयतन्ते।

सन्ति संस्था अन्या अपि या भागशः सर्वांशेन वा सुरभारती सेवन्ते। तत्राऽऽन्तरराष्ट्रिया प्राच्यविद्यापरिषत्—यस्यास्त्रयोविंशतितममधिवेशनं १९५४ ई०वर्षे इङ्गलैण्डदेशीये केम्ब्रिजनगरे संपन्नम्—मिस्र-मेसोपोटामिया-ईरान-चीनप्रभृतिदेशाना विद्याभिः सह भारतीविद्यामपि संस्कृतवाङ्मयसहकृतामालोचयति। अत्र भवन्ति समवेताः प्रत्येकं देशाना विशिष्टतमा विचारकाः। अपरा च वर्ततेऽखिलभारतीया प्राच्यविद्यापरिषत्, या संस्कृतेन सह पालिप्राकृतयोरितिहासस्य, पुरातत्त्वस्य च, आरब्यपारसीकसाहित्ययोरन्येषा च भारतसंबद्धविद्याकलातत्त्वानां विचारमातनुते। अस्याश्चैषमो मार्गशीर्षमासे (२६-२८ दिसम्बर ५५ ई०) अष्टादशतममधिवेशनमुपराष्ट्रपतीनां डा०राधाकृष्णन्महोदयानामाध्यक्ष्येऽन्नमलाइनगरे चिदम्बरतीर्थे निकषा संपन्नम्। अत्र प्रायशो नोपतिष्ठन्ते प्राचीनामध्ययनप्रणालीमनुसरन्तः पण्डिताः। इतरा च भवति

संस्कृतसाहित्यसंमेलनं नाम। अस्य द्वाविंशतितममधिवेशनं विगते चैत्रमासे ( २६-२८ मार्च, ५५ ई० ) महामान्यश्रीचिन्तामणिद्वारकानाथदेशमुखमहोदयानामध्यक्षताया संजातम्। इदं हि देववाणीसमुपासकाना प्राधान्येन पण्डिताना संघटनम्। अस्य संस्थापनं १९७० वैक्रमेऽब्दे समजायत। साम्प्रतमनेकेषु प्रदेशेष्वस्य शाखा वर्तन्ते, प्रकाश्यते च संस्कृतरत्नाकरनामकं मुखपत्रम्।

एवं सतीष्वप्यन्यास्वेवंविधासु संस्थासु केनाप्यनितरसाधारणेन वैशिष्ट्येन संस्कृतविश्वपरिषदियं राजतेतमाम्। भारतस्य पारतन्त्र्यवेलाया यदैकतो यूरोपीया अन्ये च मनीषिणः सुरगवीचरणेषु नतमस्तका आसन्, यदा च यूरोपद्वीपे १८७३ ई० वर्षे, भारते च १९१९ ई० वर्षे प्राच्यविद्यासमुपासकानामान्तरराष्ट्रियाऽखिलभारतीया च परिषत् समस्थाप्यत, तदैवान्यतो विदेशीयेन शासनेनात्र सा नितरामुपेक्षिता। विदेशीयशासनदुष्प्रचारनिबन्धनेयं दुःस्थितिः स्वतन्त्रे भारते शासनाधिकारिभिरेव झटिति परावर्तितुं शक्यते। "पण्डिताः प्राध्यापका इति विधाद्वयरूपः परस्परविरोध एव संस्कृतस्योपेक्षाया मुख्यो हेतुः" इति हि ब्रुवन्ति स्म स्वीये प्रारम्भिके भाषणेऽत्र श्रीमुंशीमहोदयाः। नूनमेषा परिषत् शासनाधिकारिणः पण्डितान् प्राध्यापकांश्चैकत्र योजयित्वा किमपि वैशिष्ट्यमात्मनः ख्यापयति।

पण्डितेष्वभिनवपद्धत्याऽनुशीलनप्रवृत्तिर्नैव प्राधान्येनावलोक्यते, गुरुपरम्पराप्राप्तस्य शास्त्रस्य संरक्षणमेव तेषा परमं तपः। एतद्विपरीता च प्रवृत्तिः परिदृश्यते प्राध्यापकेषु। शासनाधिकारिणा सहयोगेन परिहृते संस्कृतविरोधिप्रचारवात्याचक्रे सोऽयं विधाद्वयरूपः परस्परविरोधोऽपि परिहरणीय एव संस्कृतविश्वपरिषदा। उभयगुणान्वितपाठ्यक्रमनिर्धारणेनायं विरोधः परिहृतः स्यादिति बाढं सत्यम्, तथाप्येतदर्थं पण्डितप्राध्यापकसंगमस्थल्यामस्या परिषदि कोऽपि कार्यक्रमो निवेशनीयः। स च संस्कृतवाङ्मयस्य विभिन्नासु शाखासु विचारविनिमयार्थमखिलभारतीयप्राच्यविद्यासंमेलनवदस्याः परिषदो विभिन्नासु शाखागोष्ठीषु प्रविभाग एव। अत्र च निबन्धादीना भाषणादीना चाधिकारिकी भाषा संस्कृतमेव स्वीक्रियेत॥

## दर्शनपरिषदः संस्थापनम्

ऐषमो राजकीयसंस्कृतमहाविद्यालयेऽत्रत्याना दर्शनविभागीयाध्यापकाना छात्राणा चोत्साहेन दर्शनपरिषदेका संस्थापिता। अस्या उद्घाटनं कार्तिकशुक्लचतुर्दश्या सोमवासरे (२८-११-५५) उत्तरप्रदेशस्य मुख्यमन्त्रिभिर्मनीषिप्रवरैः श्रीसम्पूर्णानन्दमहाभागैरकारि। आर्षदर्शनाना

तत्त्वानुशीलनम्, नव्यानां दार्शनिकराद्धान्तानां समुद्भावनम्, सामाजिकजीवनस्योपयोगिनां दार्शनिकतथ्यानां संकलनम्, प्राच्यप्रतीच्योभयदार्शनिकपद्धत्या छात्राणां परिचायनं चास्याः परिषदो मुख्यमुद्देश्यम् । गवेषणात्मकानां परिचयात्मकानां च निबन्धानां पाठः, दर्शनेषु व्यवहृतानां परिभाषिकशब्दानां कोशनिर्माणम्, पाश्चात्त्यानामितरेषां च दर्शनानां सिद्धान्तानवगमयितुं तत्तद्ग्रन्थानां तात्पर्यसंकलनात्मकः प्रामाणिकोऽनुवाद इत्येष कार्यक्रमो वर्ततेऽस्याः ।

अस्य कार्यक्रमस्य पूर्त्यै साम्प्रतमध्ययनाध्यापनादिषु विरलप्रचाराणामागम-वैष्णव-वेदान्त-बौद्ध-जैन-मीमांसाप्रभृतिदर्शनानां पुनरुज्जीवनाय, हिन्दीभाषानिबद्धस्य 'सन्त'-मतस्य पाश्चात्त्यदर्शनस्यान्येषां दर्शनानां च परिचयमापादयितुं च तत्तद्विषयनिष्णातैः सुधीभिर्निर्दिष्टेषु विषयेषु गवेषणात्मकाः परिचयापादकाश्च निबन्धा ग्रन्थाश्च निबद्धाः स्युरिति प्रयतिष्यते, वादगोष्ठीनां विद्वद्गोष्ठीनां संमेलनानां चायोजनं करिष्यते; यत्र आधुनिकप्रश्नानां दार्शनिकं समाधानं नूतनानामरविन्दादिभारतीयदर्शनानां पाश्चात्त्यदर्शनानां च विवेचनापुरःसरं समुप-स्थापयिष्यते । तत्र दार्शनिकपरिभाषाव्यूहाज्जिज्ञासूनुद्धर्तुं प्रथमं शैवशाक्तोभयभेदभिन्नस्यागमस्य, पाञ्चरात्रसहितस्य वैष्णववेदान्तस्य, बौद्ध-जैनदर्शनयोः, व्याकरणदर्शनस्य, सांख्ययोगयोश्च विशिष्टपदानां विवरणात्मका विभिन्नाः कोशाः संग्रहीष्यन्ते, प्रकाशयिष्यन्ते च । परिचयात्मकाना-मनुवादात्मकानामन्येषां च ग्रन्थानां प्रकाशनाय ग्रन्थमाला, निबन्धानां प्रकाशनाय चैका षाण्मासिकी पत्रिका प्रकाशयिष्यते ।

विगतासु कासुचिच्छताब्दीषु भारतीयदर्शनानां मौलिको विकासः प्रायोऽवरुद्ध इव दृश्यते । पुरा यवनदेशे सुकरातसदृशा महामनीषिणो दार्शनिका अभूवन् । दार्शनिकजगति सापेक्षतासिद्धान्तस्य प्रादुर्भावको विश्वमान्यो वैज्ञानिको दार्शनिकश्च आइन्स्टाइनमहोदयो न चिरादेव पञ्चत्वं गतः । वर्तत एवं महती पाश्चात्त्या दर्शनपरम्परा । चीनप्रभृतिपुरातनदेशेष्वपि दर्शनविकासः समजनि । दर्शनानामेतेषां तुलनात्मकेनाध्ययनेन भवितव्यम् । दर्शनपरिषद-मुद्घाटयन्तः श्रीसम्पूर्णानन्दमहोदया अवोचन्—

"तदेव दर्शनं यथार्थं यद्धि प्रेक्षावतां जिज्ञासूनां जिज्ञासाः समादधीत । नहि केवलं दर्शनमध्ययनस्य विषयः, तद्धि जगतो रूपपरिवर्तनेऽपि क्षमम् । साम्प्रतिक आक्षेपको नहि बौद्धो जैनो वा, अपि तु वर्तते प्रत्यक्षप्रयोगवादी वैज्ञानिकः । नहि स प्रत्यक्षविरोधिना तर्केण, केनचिद् ग्रन्थोद्धृतेन सिद्धान्तेन वा समाधातुं शक्यः । भारतीयदर्शनसिद्धान्तस्त्रिकालाबाधित

इति सत्यम्, तथापि तस्य केनाप्यभिनवेन कालानुवर्तिना व्याख्यानेन भवितव्यम्, यद्धि ईर्ष्याद्वेषकलुषितस्य युद्धज्वालाग्निभीषिकाभीतस्य विश्वस्य परित्राणक्षमं स्यात्" इति ।

अपि नाम सेयं दर्शनपरिषद् मनीषिप्रवरस्य मुख्यमन्त्रिणः, दर्शनानुरागिमनीषिणां च आशाः सफलयेत् ॥

## स्वर्गीयाः श्रीरामचन्द्रपाठकमहोदयाः

राजकीयसंस्कृतमहाविद्यालयस्याङ्गलविभागस्य लब्धावकाशा अध्यापकाः श्रीआर० सी०पाठकमहोदया माघकृष्णद्वितीयायां रविवासरे ( २६-१-५६ ) त्रिसप्ततिवर्षे वयसि ब्रह्मसायुज्यतां गता इति निवेदयता नितान्तं चेखिद्यते नश्चेतः । एते महानुभावा आश्विनकृष्णपञ्चम्यां १८४० वैक्रमे संवत्सरे ( २१ ६-१८८३ ई० ) स्वजनुषा वाराणसीवास्तव्यानां प०गोकुलचन्द्रपाठकमहोदयानां गेहमलङ्कृतवन्तः । स्थानीये 'क्वींस कालेज'-नाम्नः शिक्षासंस्थानाद् बी०ए०परीक्षामुत्तीर्य महानुभावा इमे तत्र संस्कृतविषये सर्वातिशायित्वेन मित्रस्वर्णपदकमधिगतवन्तः । अत्र आचार्यनरेन्द्रदेवमहोदयाः, राज्यपुनःसङ्घटनायोगस्याध्यक्षाः श्रीफजले-अलीमहानुभावाश्चैषां सहपाठिन आसन् । ततः प्रयागनगरत एल०टी०प्रशिक्षणमधिगत्य १६१५ ई० वर्षे राजकीयसंस्कृतमहाविद्यालये आङ्गलाध्यापकपदे नियुक्ता एते पञ्चविंशतिवर्षपर्यन्तमनेकशः संस्कृतच्छात्रानाङ्गलभाषाभिज्ञानकार्षुः । महाविद्यालयतोऽवकाशं लब्ध्वा लेखनकार्यायार्पितं स्वीयं जीवनम्, पञ्चाशत्सहस्रपृष्ठपरिमितं च साहित्यमारचि । आङ्गल-हिन्दीकोशः, हिन्दी-आङ्गलकोश इत्यादिकाः कोशग्रन्था अन्ये च महत्त्वाधायका ग्रन्था रचिता एभिर्महानुभावैर्येषां लक्षाधिकाः प्रतयोऽधुनावधिः प्रकाशिताः । एषामाङ्गल-संस्कृतकोशोऽन्तिमा रचना, या च साम्प्रतमप्रकाशितैव वर्तते । उदारचरितानां निरभिमानिनां प्रतिभाजुषां शिक्षाशास्त्रिणामेतेषां चरणयोरेष शब्दप्रसूनाञ्जलिरर्प्यते ॥

---



स्व० प० रामचन्द्रपाठकमहोदयाः

# समालोचनम्

व्रात्यकाण्डं श्रुतिप्रभभाष्यभाषानुवादसहितम्। भाष्यकारो डा०श्रीसम्पूर्णानन्दः। प्रकाशकः—मोतीलाल बनारसीदास, पो० बा० ७५, नेपालीखपरा, वाराणसी। मूल्यम् ३) रूप्यकाणि। २०१२ वि० संवत्सरे प्रकाशितम्। पृष्ठ संख्या—६३

अथर्ववेदस्य पञ्चदशं काण्ड 'व्रात्यकाण्डम्' इति नाम्नाभिधीयते। काण्डमेतद्वैदिक-विदुषां कृते प्रवह्लिकारूपेण समुपस्थितं विद्यते। प्रथितस्य वेदभाष्यकारस्य सायणाचार्यस्येतर-संहितावदथर्ववेदीयशौनकशाखीयसंहितायाः संपूर्णं भाष्यं नोपलभ्यते। अद्यावधि प्रकाशिते प०शङ्करपाण्डुरङ्गसंपादिते भाष्यपुस्तके द्वादशकाण्डानाम् (१-४, ६-८, ११, १७-२०) एव सायणभाष्यं दृश्यते। तत्राप्यष्टमकाण्डीयाद्यानुवाकत्रयस्य विंशकाण्डीयानुवाकचतुष्टयस्यैव च भाष्यमुपलब्धम्। अवशिष्टेष्वनुवाकेषु काण्डेषु च काण्डारम्भे सूक्तारम्भे वा कौशिकसूत्रं तट्टीकामन्याश्च ग्रन्थानाधारीकृत्य सायणभाष्यपद्धतिमवलम्ब्य संपादककृत उपोद्घातोऽवलोक्यते (द्वितीयभागभूमिका द्रष्टव्या)। व्रात्यकाण्डारम्भे—"अत्र काण्डे व्रात्यमहिमा प्रपञ्च्यते" इत्यादिक उपोद्घातोऽपि संपादककृत एव न सायणकृतः। एवं च म०म०पी०वी०काणेमहोदयेनापि "हिस्ट्री ऑफ धर्मशास्त्र" नामकग्रन्थस्य द्वितीये खण्डे ३८६ पृष्ठे तस्य सायणकृतित्वेन मान्यता चिन्तनीयैव। श्रूयतेऽथर्ववेदीयस्य संपूर्णस्य सायणभाष्यस्य हस्तलेखो लश्कर (ग्वालियर)-नगरे कस्यचिच्छ्रोत्रियस्य गृहे सुरक्षितस्तिष्ठतीति।

सायणातिरिक्तोऽथर्ववेदस्य व्रात्यकाण्डस्य वा न कोऽप्यन्यो भाष्यकारः प्राचीनः समुपलभ्यते। साम्प्रतिके काले भारतीयमनीषिभिः संस्कृते भारतीयभाषासु चाथर्ववेदस्य व्याख्यानं विहितम्। तथैव ब्लूमफील्ड-रुडाल्फराथ-ह्विटनी-लैन्मानप्रभृतिभिः पाश्चात्यविद्वद्भि-स्तत्र प्रयतितम्। व्रात्यकाण्डविषये सर्वेषामेषां विभिन्ना विचाराः समुपलभ्यन्ते।

स्मृत्यादिषु व्रात्यपदस्य यो ह्यर्थो गृह्यते, नास्ति सोऽर्थः संहिताब्राह्मणश्रौतसूत्रसंमत इति निश्चप्रचम्। संहिताब्राह्मणश्रौतसूत्रस्थितव्रात्यपदस्य प्रवृत्तिनिमित्तमन्यत्, अन्यच्च स्मृत्या-दिस्थितस्य व्रात्यशब्दस्य। व्रात्यपदप्रवृत्तिनिमित्तमाश्रित्य यूरोपीयैर्भारतीयैश्च मनीषिभिः बहु प्रयतितम्। अत्र प्रशस्यतमः प्रयत्नः शर्मण्यदेशीयस्य डा०जे०डब्ल्यू०हावरमहोदय-

स्यावगन्तव्यः। अनेन महानुभावेन १९२७ ई० वर्षे प्रकाशिते "देर व्रात्य उंटरशुखुंगन विबर डी निख्ट व्राह्मणिश रेलीगिश्रान आल्टइण्डिएन्स" नामकेन विस्तृतेन ग्रन्थेन व्रात्यचर्चाया गाम्भीर्यमाहितम्, "डी आनफैंग देर योग प्राक्सिस इम आल्टन इण्डिअन" नामकेन ग्रन्थेन च साधितं योगविद्याया उपलभ्यमानग्रन्थेषु प्राचीनतमं व्रात्यकाण्डमेवेति। योगसांख्यदर्शनयो-राविर्भावो व्रात्यकाण्डादेवेति तस्य सुनिश्चितं मतम्। श्रुतिप्रभकारा अपि—"एषु मन्त्रेषु गम्भीरमाध्यात्मिकं रहस्य निगूढं वर्तते यद्योगिभिरेव ज्ञातु शक्यते" [ पृ० ८ ] इत्यनेन संद-र्भेण योगचर्चामत्र स्वीकुर्वन्ति।

श्रुतिप्रभभाष्यकाराः श्रीसम्पूर्णानन्दमहोदया उत्तरप्रदेशस्य मुख्यमन्त्रिणोऽनेकेषा राजनीतिज्यौतिषादिग्रन्थाना भारतीयसृष्टिक्रमविचार-चिद्विलास-ऋग्वेदीयपुरुषसूक्तश्रुतिप्रभ-भाष्यप्रभृतीना दार्शनिकग्रन्थाना च रचयितारो मान्या मनीषिणः सन्ति। व्रात्यकाण्डश्रुतिप्रभभाष्यं विरचय्यैभिर्महानुभावैर्व्रात्यकाण्डविषयिणी नूतना विचारसरणिराविष्कृता। उत्तरप्रदेशसदृशस्य महतो राज्यस्य गुर्वीं मुख्यमन्त्रित्वधुरा साफल्येन धारयतैकान्तसापेक्षं गभीराध्यात्मिकचिन्तनफल-मेतत् कदा लब्धमिति महदाश्चर्यकरम्।

प्रस्तुतेऽस्मिन् व्रात्यकाण्डे द्वावनुवाकौ स्तः। तत्र प्रथमेऽनुवाके सप्त सूक्तानि सन्ति, द्वितीये चैकादश। एवं च संपूर्णे व्रात्यकाण्डेऽष्टादश सूक्तानि पर्याया वा सन्ति। प्रथम-सूक्तस्याष्टममन्त्रव्याख्याने भाष्यकारेण व्रात्यशब्दस्यानेकेऽर्थाः प्रदर्शिताः। तेषु मायाशबलं ब्रह्म ( परमात्मा = ईश्वरः ) इत्यर्थोऽभिप्रेतो भाष्यकारस्य। तत्र प्रथमे सूत्रे व्रात्यापरनामधेयात् परमात्मनो हिरण्यगर्भादिक्रमेण जगत आविर्भाव उक्तः। ततोऽन्येषु सर्वेषु सूक्तेषु च परमात्मनः परमयोगिनश्च विभूतयो वर्णिताः। तृतीये सूक्ते विशेषतः परमात्मनो व्रात्यस्याऽऽसन्द्याः, द्वितीयानुवाकस्य तृतीयचतुर्थपञ्चमषष्ठसूक्तेषु च महायोगिनो व्रात्यस्यातिथिरूपेण वर्णनं विद्यते। अत्र भाष्यकारेणानेकेषु प्रसङ्गेषु योगस्य चर्चा पुरस्कृता, प्रसक्तानुप्रसक्त्या च दित्यदिति-सोम-गन्धर्व-बृहद्रथन्तर-वाक्-प्राणशब्दाना किमप्यभिनवं व्याख्यानं प्रस्तुतम्, पशुबलि-ग्रहगती च चर्चिते। भाष्ये स्वमतप्रतिष्ठायै संहिताब्राह्मणोपनिषदागमेभ्य उद्धृतानि नैकानि वाक्यानि भाष्यकारस्य निगमागमविषयकं प्रगाढं पाण्डित्यं विज्ञापयन्ति। संपूर्णस्य भाष्यस्य विहगा-वलोकनेन भाष्यकारस्य व्रात्यसंबन्धिनी विचारसरणिरागमयोगवेदान्ताध्ययनसमष्टेः परिणतिरिति वक्तुं शक्यते।

अथर्ववेदीयव्रात्यकाण्डमपहायान्यत्र वेदेषु व्रात्यसंबन्धीनि वाक्यानि स्वल्पतमान्येवोपलभ्यन्ते। अथर्ववेदे—"व्रात्याभ्या स्वाहा" [१६।२३।२५] इत्यत्र द्विवचनं व्रात्यकाण्डप्रतिपादितयोरेकव्रात्यलौकिकव्रात्ययोः सूचकम्। सामवेदे न दृश्यते व्रात्यशब्दस्तदर्थप्रतिपादको व्रातशब्दो वा। ऋग्वेदे [३।२६।६; ५।५३।११] यजुर्वेदे [तै० सं० ४।५।४।१; का० स० १७।१३, मै० सं० २।६।४; मा०सं० १६।२५] च समूहवाचिना गणशब्देन सह व्रातशब्दोपलब्धिर्भवति, एष च व्रातशब्दो व्रात्यार्थस्यैव प्रतिपादकः। निरुक्तमतेन [५।३]—"मृगं न व्रा मृगयन्ते" [ऋग्० ८।२।६] इत्यत्र ऋग्वेदे व्राशब्देन व्रात्यस्यैव ग्रहणं भवति, सोऽयं व्राशब्द ऋग्वेदे पञ्चवारं पठितः। यजुर्वेदे च व्रातव्रातपतिपदाभ्या रुद्रस्य स्तवो विधीयते, अन्यत्र च पुरुषमेधप्रकरणे [मा०स०३०।८; तै०ब्रा०३।४।५।१] गन्धर्वाप्सरोभ्यो व्रात्यबलिर्दीयते। "नमो व्रात्याय च" इति पाठस्त्ववैदिकः। "नमो व्रात्याय" इति च व्रात्यकाण्डसमाप्तिस्थं वाक्यम्।

सामवेदे यद्यपि नास्ति व्रात्यशब्दोपलब्धिस्तथापि तदीयब्राह्मणेषु जैमिनीयोपनिषत्-जैमिनीय-ताण्ड्यमहाब्राह्मणाख्येषु व्रात्यसंबन्धीन्यनेकानि प्रकरणान्यवलोक्यन्ते। अन्यवेदीयब्राह्मणेषु तु न किमपि। तत्र जैमिनीयोपनिषद्ब्राह्मणे [१।२।३।६–१०; १।११।२।६–११; १।४।४।१–२], जैमिनीयब्राह्मणे [१।२७७] च पृथुर्वैन्यो दिव्यान् व्रात्यान् कांश्चित् प्रश्नान् पृच्छति, ते च तदुत्तरं ददति। वेदवदत्र व्रात्यमहिमा सुरक्षितस्तिष्ठति। एवमेव ताण्ड्यमहाब्राह्मणे एकषष्टिरात्रसत्रप्रकरणे [२४।१८] व्रात्याना तद्गृहपतेर्बुधस्य च माहात्म्यमवलोक्यते, प्रश्नोपनिषदि [२।११] च व्रात्यमहिमा श्रूयते। किन्तु जैमिनीयब्राह्मणे [२।२२१-२२३], ताण्ड्यमहाब्राह्मणे [१७।१–४] च व्रात्यस्तोमप्रकरणे तद्विपरीतमेव सर्वमवलोक्यते। ताण्ड्यमहाब्राह्मणे व्रात्यानाम्—हीनाचाराः, निन्दिताः, कनीयांसः, ज्येष्ठा इति चत्वारो भेदा विहिताः, सप्तदशाध्यायस्य चतसृषु कण्डिकासु च तेषां पृथक् पृथक् प्रायश्चित्त्यै चत्वारो व्रात्यस्तोमाः प्रतिपादिताः। अत्रैव प्रसङ्गवशाद् व्रात्याचार-वेषभूषादिकं व्रात्यधनं च चर्चितम्। लाट्यायनकात्यायनापस्तम्बप्रभृति-श्रौतसूत्रेषु व्रात्यस्तोमप्रकरणे ताण्ड्यब्राह्मणमेवोपजीवितं व्याख्यातं च। गृह्यसूत्रेषु, धर्मसूत्रेषु, मन्वादिस्मृतिषु, संन्यासोपनिषदि च पुनः सावित्रीपतिता व्रात्यपदेन संबोधिताः। मन्त्रिकोपनिषच्चूलिकोपनिषच्च नाममात्रेण भिन्ने, पाठभेदातिरिक्तं नास्ति तयोर्भेदः। तत्र [११] च व्रात्यशब्दे न किमपि वैशिष्ट्यमवलोक्यते। अतिरिक्तासूपनिषत्सु नास्ति व्रात्यशब्दोपलब्धिः। मनुस्मृतौ [ १०।२१-२३ ] पुनर्व्रात्याना वर्णभेदेन द्वादश भेदा विहिताः। आपस्तम्बधर्मसूत्रेऽतिथिप्रकरणे [ २।७।१३-१७ ] तु व्रात्यकाण्डीयद्वितीयानुवाकस्य ३-६ सूक्तानामभिप्राय

एव संक्षेपेण समुट्टङ्कितः, बौधायनधर्मसूत्रे च—"वर्णसंकरादुत्पन्नान् व्रात्यानाहुर्मनीषिण इति व्रात्यानाहुर्मनीषिणः" [ १।९।१५ ] इति नवीन एव कश्चिदर्थः प्रतिपादितः ।

सोऽयमत्र सङ्क्षेपेण व्रात्यपदप्रवृत्तिनिमित्तेतिहासः प्रदर्शितः । अनेन स्पष्टं भवति व्रात्यपदस्य पतितसावित्रीके प्रवृत्तिरभिनवेति । न सोऽर्थो व्रात्यकाण्डे ग्रहीतुं शक्यः । स्वयं श्रुतिप्रभकारेणापि न स भाष्ये गृहीतः, किन्तु लक्षणया परमात्मनि परमयोगिनि वा तस्य प्रवृत्तिर्दर्शिता । वस्तुतस्तु व्रात्यकाण्डे ब्रह्मस्थानीयैकव्रात्यपदाभिधेयः प्रथमानुवाकीये पञ्चमे सूक्ते भव-शर्व-पशुपत्यादिनामभिः प्रतिपादितो महादेवो मुख्यार्थत्वेन ग्राह्यः, द्वितीयानुवाकीय ३-६ सूक्तेषु चापस्तम्बधर्मसूत्रेऽतिथिप्रकरणे [ २।७।१३-१६ ] प्रतिपादितो लौकिको व्रात्यः । "अन्योऽप्यर्थः कैश्चिद्विद्वद्भिः संसूच्यते" इत्यादिना प्राक्कथने सोऽयमर्थ उद्धृतो भाष्यकारेणापि । सत्यप्येवं लाक्षणिकार्थपरकतया व्रात्यकाण्डव्याख्यानं चिद्विलासादिषु पूर्वमुपस्थापितानां स्वसिद्धान्तानां प्रतिपादनायैव कृतं भवेत् । अस्मिन्ननुष्ठाने च भाष्यकाराः प्रशंसनीयं साफल्यमवापुरिति भाष्यावलोकनतः प्रतीयते । भाष्यदर्शनेनात्रेयमपि मनीषा प्रादुर्भवति—मुख्यमन्त्रिणाऽऽगमीयाध्यात्मचिन्तनरहस्यखनेः सतशत्याः कृतं किमप्यभिनवं व्याख्यानं पूर्वं स्थापितानां स्वकीयसिद्धान्तानामपूर्वं प्रतिष्ठाधायकं भवेदिति ॥

श्रीकुबेरनाथशुक्लः, एम० ए०
व्याकरणाचार्यः ।

---

**भारतीय आर्यभाषा और हिन्दी । ग्रन्थकारः**– डा०सुनीतिकुमार चाटुर्ज्या । प्रकाशकः—राजकमल प्रकाशन, नई दिल्ली । मूल्यम् ६) रूप्यकाणि । १९५४ ई० वत्सरे प्रकाशितः । पृष्ठसंख्या–२५१

ग्रन्थस्यास्य महत्त्वं सुप्रसिद्धभाषाविदो मनीषिणो लेखकस्य नाम एव प्रख्यापयति । १९४० तमे ई० वर्षेऽक्टूबरमासेऽहमदाबादनगरस्थगुजरातविद्यासभयाऽऽहूतश्चाटुर्ज्यामहोदयस्तत्र भारते आर्यभाषाया विकासं राष्ट्रभाषाया हिन्द्या विकासं चावलम्ब्य प्रत्येकं निबन्धचतुष्टयस्य द्वे व्याख्यानमाले आङ्गलभाषाया प्रदत्ते । ग्रन्थ एष तेषामेव व्याख्यानानां पुनर्निरीक्षणस्य परिवर्द्धनस्य च परिणतिः । गुजरातविद्यासभया ग्रन्थस्यास्य गुर्जरभाषानुवादः १९५२ ई० वर्षे प्रकाशितः । सोऽयं ग्रन्थः साम्प्रतं हिन्दीभाषायाः सुप्रथितया "राजकमल प्रकाशन, नई दिल्ली" इत्याख्यया संस्थया राष्ट्रभाषापाठकानां पुरतः समुपस्थापितः ।

## समालोचनम्

प्रस्तुतोऽयं ग्रन्थः खण्डद्वये विभक्तः। तत्र प्रथमे खण्डे भाषाविज्ञानसिद्धान्तानवलम्ब्य भारतस्य सांस्कृतिक इतिहास आरचितः। भारतस्य प्राचीनतमा जातयः, तासां भारतीय-संस्कृतिनिर्माणे योगः, 'विरोस्' इत्याख्यानामार्यपूर्वजानामुत्पत्तिस्थानम्, आर्याणां भारते आगमनम्, अत्र चार्यभाषाणां सहस्राब्दीयावदविच्छिन्नो विकासक्रमो ललितया गम्भीरया च पद्धत्याऽऽलिखितः। वेदसंकलनकालविषये विद्वत्सु जागरूकेऽपि मतद्वैधे लेखकेन तत्र स्वकीयं सुदृढं सुनिश्चितं च मतमुद्घोषि। आर्यभाषाणां विकासकालो विदुषा लेखकेन त्रिधा विभक्तः—आद्यभारतीयार्यभाषा ( आ भा आ ), मध्यकालीनभारतीयार्यभाषा ( म भा आ ), नव्यभारतीयार्यभाषा ( न भा आ) इति। अत्र प्रथमे विभागे वैदिकभाषाया लौकिकसंस्कृतस्य च, द्वितीये पालिप्राकृतापभ्रंशानाम्, तृतीये चाधुनिकभारतीयार्यभाषाणां समावेशः। प्रसङ्गवशादत्र संस्कृतपालिभाषाभ्यां सह भारतीयसंस्कृतेर्विश्वविजयनमाख्यानम्, आर्यलिपीनां विकासक्रमः, साम्प्रतिके च काले संस्कृताध्ययनस्य पुनर्जागर्तेरितिहासो वैशद्येन सुनिपुणं वर्णितः, आङ्गलभाषा च विश्वसंस्कृतेरद्वितीयमाध्यमत्वेनाङ्गीकृता।

द्वितीये खण्डे हिन्दीभाषाया विकासस्य सिंहावलोकनात्मक इतिहासः, तस्या हिन्दुस्तानी-उर्दूरूपयोर्विकासक्रमश्च प्रदर्शितः। विदुषा लेखकेन हिन्दुस्तानी-उर्दूभाषापोषकानां तर्कजालान् विच्छिद्य संस्कृतनिष्ठा सरलीकृतव्याकरणा हिन्दीभाषैव राष्ट्रभाषात्वमेति साधितम्। अन्ते च हिन्दीभाषायाः समक्षमागतानां प्रश्नानां समाधानदिक्, राष्ट्रलिपेः प्रश्नस्य च समाधानं लेखकेन समुपस्थापितम्।

समासेनैष एवास्य ग्रन्थस्य प्रतिपाद्यो विषयः। आर्यभाषायाः परिवर्तमानेषु रूपेषु वर्णविकारादीन्युच्चारणसम्बन्धीनि च सूक्ष्मतमानि परिवर्तनानि वैशद्येन विवृतानि भाषा-विज्ञानशास्त्रस्य महाविदुषोऽस्यानुरूपाण्येव। ग्रन्थे यत्र तत्र द्विरुक्तिदोषो विषयगाम्भीर्यमनु-लक्ष्यानाख्येय एव। अस्यैकस्यैव ग्रन्थस्य साहाय्येन वयं भारतस्य, संस्कृतेः, साहित्यस्य, भाषायाः, लिपेः, जातीनां चेतिहासस्य सारमवबोद्धुं समर्था इति कथनं नैवात्युक्तिरुच्येत।

ग्रन्थस्यास्य रचना १९४० तमे ई० वर्षे सजाता; यदा हि भारतो वर्षः परतन्त्रः, जगती च द्वितीयविश्वयुद्धज्वालाततासीत्। भारतस्य जगतश्च वात्याचक्रेणेव विश्वयुद्ध-समाप्तिगतावस्थाभिरनेकविधं परिवर्तनमापादितम्। तदानीन्तनानामाधुनिकानां च प्रश्नानां स्वरूप-मपि तेन सहैव परिवर्तितम्। हिन्दीभाषा राष्ट्रभाषापदमध्यासीना वर्तते साम्प्रतम्। अतो

ग्रन्थस्यास्य द्वितीयः खण्डो बाहुल्येनानावश्यक इवाधुनिकपाठकानाम्, केवलं तदानीन्तनभाषागतविवादस्वरूपमुपस्थापयति।

द्वितीयविश्वयुद्धतः पूर्वं तन्द्रानिमीलिता इवैशियाफ्रिकामहाखण्डस्था देशाः साम्प्रतं प्रबुद्धा अवलोक्यन्ते। सर्वत्र स्वस्वदेशभाषाप्रेम प्रवर्द्धमानमवलोक्यते। इतरदेशभाषाव्यामोहस्तिरस्क्रियते सर्वत्र। एतस्यामवस्थायामाङ्गलभाषाया विश्वसंस्कृतिवाहकत्वेन कल्पना दूरापास्तेव दृश्यते। एवमेव लेखकस्य भारते देवनागरीलिपिमपहाय रोमनलिपिग्रहणसमर्थनं केवलं मुद्रणसौकर्यदृष्ट्यैव यथाकथञ्चित् समर्थनमाप्नुयात्। साम्प्रतं देवनागरीलिप्या सह वर्तते हिन्दी राष्ट्रभाषा। अन्यभारतीयभाषाव्यवहारेऽपि प्रवर्द्धते देवनागर्या व्यवहारः। अस्या स्थितौ देवनागर्याः स्थाने रोमनलिपेरत्र प्रचारं को नामानुमन्येत। किञ्च, स्वीकृताया रोमनलिपौ सहस्राब्दीर्यावत् सञ्चिताय विभिन्नासु भारतीयलिपिषु ग्रथिताय ज्ञानराशये दत्तो जलाञ्जलिः स्यात्। नूतनाया रोमनलिपौ तस्य प्रकाशने समयधनश्रमादीना महान् कल्पनातीतोऽपव्ययो गले पतितः स्यात्। अपि च, रोमनलिपेः सर्वाधिको विशेषो लेखने नैरन्तर्यापादनमिति। तच्च वैशिष्ट्यं भारतीकृताया रोमनलिप्या नश्यत्येव, भारतीयध्वनीना प्रकटनाय तत्रोर्ध्वभागेऽधोभागे वा विशिष्टाना चिह्नानामावश्यकत्वात्।

अस्तु, साम्प्रतमस्मद्देशस्य हिन्दी राष्ट्रभाषा। ईदृशा मननसापेक्षा गभीरविषयभरिता विचारोत्तेजकाश्च ग्रन्थास्तदुन्नतयेऽत्यावश्यकाः। हिन्दीभाषासंबन्धिभिर्लेखकस्य १९४० ई० वर्षेऽभिव्यक्तैर्विचारैः साम्प्रतं सर्वे भारतीया मतैक्यमातन्वन्ति। मनीषी लेखकः स्वकीयैर्महार्हविचारैः पूरयिष्यति राष्ट्रभाषाभाण्डागारमित्याशास्यते। राजकमलप्रकाशनसंस्थानं चाभिनन्दनार्हं ग्रन्थस्येदृशस्य प्रकाशनसंपदा॥

अ० व० द्वि०

---

**चतुर्दण्डीप्रकाशिका**—श्रीमद्वेङ्कटमखिविरचिता। मद्रपुरीसंगीतविद्वत्सभया प्रकाशिता। मूल्यं रूप्यकपञ्चकम्। पृष्ठसंख्या—११६

भारतीयं संगीतं साम्प्रतं धाराद्वयमुखेन प्रवहमानं दृश्यते—उत्तरभारतीयं संगीतम्, कर्णाटकसंगीतं चेति। निःशङ्कशार्ङ्गदेवस्य कृतिः संगीतरत्नाकरः प्राचीनार्वाचीनसंगीतसरितोः सेतुबन्ध इवावलोक्यते। अलङ्कारशास्त्रे मम्मटस्येव मध्यकालीने संगीतशास्त्रे शार्ङ्गदेवस्याक्षुण्णः प्रभावोऽवलोक्यते। यथा भरतप्रणीतं नाट्यशास्त्रं प्राचीनभारतीयसंगीतस्य विश्वकोशस्तद्वदेव

## समालोचनम्

मध्यकालिकसंगीतस्य विपुलः सङ्ग्रहोऽत्रैव सुरक्षितस्तिष्ठति। शार्ङ्गदेवकालतः शनैः शनैरेतच्छास्त्रं द्वयोः शाखयोर्विभक्तम्। उत्तरभारतीयं संगीतं प्रायो मुस्लिमाद्यसंगीताचार्यस्य 'अमीर खुशरो' नामकस्य कालादेव विकासमापद्यते। स्वामिहरिदास-नायकबैजूबावरा-तानसेन-प्रभृतय उत्तरभारतीयसंगीतस्य प्रथिता आचार्याः, एवमेव विद्यारण्य-रामामात्य-सोमनाथ-गोविन्द-दीक्षितप्रभृतयः कर्णाटकसंगीतस्य।

संगीतमार्तण्डाः श्रीओङ्कारनाथठाकरमहोदया भारतीयसंगीतस्येन विभागद्वयं नोररीकुर्वन्ति। प्रणवभारतीनामके हिन्दीभाषामये ग्रन्थे–यस्य हि संस्कृतभाषीयं संस्करणं शीघ्रमेव प्रकाशमेष्यति–भारतीयं संगीतं भरतनाट्यशास्त्रप्रतिपादितमेकविधमेवेति प्रतिपादितं तैः। साम्प्रतमुत्तरभारतीयं कर्णाटकं चेति नामद्वयेन प्रथिते उभयविधेऽपि संगीते मौलिकाः सिद्धान्ता भरतप्रतिपादिता एव। कालक्रमेण विभिन्नैराचार्यैः स्वबुद्धिवैभवेन तेषां व्याख्यावैविध्यं कृतम्। तदेव व्याख्यावैविध्यं देशभेदेन विभागद्वये परिणतम्। तदेतद्भ्रमस्य परिहृत्य शुद्धस्य भारतीयस्यैकविधस्य संगीतस्य स्वरूपनिदर्शनं विधेयमिति तेषामाग्रहः। वस्तुतस्तु मुस्लिमाक्रमणानन्तरमुत्तरभारतस्य यथा मुस्लिमसमाजेन संस्कृत्या च संपर्कः समजायत न तथा दक्षिणभारतस्य। अतो धाराद्वयेन भारतीयसंगीतसरितो गतिशीलता नामद्वयेनाभिधीयते। तत्र दक्षिणभारतीया गानपद्धतिः कर्णाटकसंगीतनाम्ना, उत्तरभारतीया चोत्तरभारतीयसंगीतनाम्नाऽभिधीयत इत्यत्र न किमप्यनौचित्यं वर्तते।

आधुनिककर्णाटकसंगीतशास्त्रस्य पाणिनिः श्रीमद्वेङ्कटमखी सप्तदशशताब्द्याः (ई०) आरम्भे समजायत। तेन स्वकीयया चतुर्दण्डीप्रकाशिकया कर्णाटक संगीतं वैज्ञानिकीं पद्धतिमवलम्बितम्। अत्र तेन मेलानां द्विसप्ततिमिता भेदाः सुविशदं व्याख्याताः। तानेवाधारीकृत्य तत्क्षुण्णवर्त्मना साम्प्रतिकी कर्णाटकसंगीतसरिदप्रतिहता प्रवहति। मद्रपुर्यां स्थापितया मद्रपुरीसंगीतसभयाऽन्यान्यसंगीतग्रन्थवदेष ग्रन्थोऽप्येकमेवादर्शग्रन्थमधिगत्यापि प्रकटितः। अत्र वीणा-श्रुति-स्वरमेल-राग-आलाप-ठाय-गीत-प्रबन्ध-तालाख्यानि दश प्रकरणानि सन्ति। खण्डितस्यैकस्यैवादर्शग्रन्थस्योपलब्धत्वादत्र तालप्रकरणं न दृश्यते, प्रबन्धप्रकरणं चाप्यपूर्णमेव वर्तते।

भारतीयस्य संगीतशास्त्रस्य संस्कृतभाषायामन्यासु च भारतीयभाषासु परश्शता ग्रन्था अवलोक्यन्ते। इतरवाङ्मयशाखाप्रकाशनव्यापृतेष्वन्येषु प्रकाशकेषु संस्थासु च केवलमपेक्षितस्य संगीतवाङ्मयस्य प्रकाशनपरायणैषा संगीतपरिषदतीवाभिनन्दनार्हा। साम्प्रतमेषा

परिषत् सुप्रथितमनीषिणा डा०वे०राघवमहोदयानां संयोजकत्वे ग्रन्थानां प्रकाशनाय संगीत-ग्रन्थमालाम्, गवेषणात्मकनिबन्धानां प्रकाशनाय चाङ्गलभाषामयी पत्रिका प्रकाशयतीति प्रीणयति प्रकाम नश्चेतः ॥

ब्र० व० द्वि०

---

**आनन्दरङ्गविजयचम्पूः**—श्रीनिवासकविविरचिता। डा०वे०राघवेण स्वोपज्ञव्याख्यया आङ्गलोपोद्घातेन च संयोज्य संपादिता। "पलनियप्प् ब्रदर्स, तेप्पक्कुलम्, तिरुच्चिराप्पल्लि" इत्येतैः १९४८ ई० वर्षे प्रकाशिता। मूल्यं रूप्यकचतुष्टयम्। पृष्ठसंख्या—२००

संस्कृतभाषायाः स्वल्पतमेष्वैतिहासिकेषु काव्येष्वेकतमा सेयमानन्दरङ्गविजयचम्पूः श्रीनिवासकविविरचिताऽऽनन्दरङ्गपिल्लइमहोदयस्य, दक्षिणभारतस्य, कर्णाटकप्रान्तस्य चेशवीया-ष्टादशशताब्द्याः पूर्वार्द्धगतमितिहासं वैशद्येन प्रतिपादयति। पिल्लइमहोदयः फ्रेंचशासना-धिष्ठितपाण्डिचेरीस्थानस्य राज्यपालस्य डूप्लेक्सनामकस्य प्रधानलेखकः परामर्शदाता चासीत्। श्रीवत्सकुलतिलकः पार्वतीगर्भसम्भवः श्रीगङ्गाधराध्वरीन्द्रतनुजन्मा श्रीनिवासकविश्च १७५२ ई० वर्षे चम्पूमेतां विरचितवान्। अस्यां चम्प्वामष्टौ स्तवकाः सन्ति। चतुर्थस्तबकदर्शनेन (पृ० ६७, ६६) ज्ञायते साम्प्रतिकमद्रासनगरस्य तदा चेन्नकेशवपुरमिति नाम आसीदिति। चेन्नपट्टनमिति संक्षिप्तयाऽभिधयाऽपि तत्परिचीयते स्म। सैषा चम्पूर्मद्रासविश्वविद्यालये संस्कृतविभागाध्यक्षेण शृङ्गेरीपीठाधीशशङ्कराचार्यपादैः 'कविकोकिल' इति लब्धविरुदेन डा०वे० राघवशर्मणा स्वोपज्ञया संस्कृतटीकया, आङ्गलोपोद्घातेन, स्तबकानां संक्षेपेण, मुख्यानां घटना-वलीनां तालिकया, विशिष्टशब्दानुक्रमणिकया चालङ्कृत्य प्रकाशिताऽवश्यमितिहासज्ञाना-मुपकाराय भवेदिति ॥

ब्र० व० द्वि०

---

[1]उदाहरणम्—

अष्टाहता यस्य कृतिः सरूपा स्यान्मूलदा ब्रूहि सखे तमाशु।
एकादशघ्ना यदि वा कृतिः का वर्गत्वमेत्येकयुता विचिन्त्य ॥३६॥

न्यासः—प्रकृतिः ८ क्षेपकः १, अत्राभीष्टं ह्रस्वं मूलं कल्पितम् १, अस्य वर्गः १ प्रकृतिगुणः ८ रूपयुतः ९ मूलं ३ एतज्ज्येष्ठमूलं ३ क्रमेण न्यासः—क १ ज्ये ३ क्षे १ एषामधस्तान्न्यसेदिति भावनार्थं न्यासः—

| प्र ८ क १ ज्ये ३ क्षे १ |
|---|
| क १ ज्ये ३ क्षे १ |

वज्राभ्यासो ह्रस्वज्येष्ठयोः संयुतिर्भवेद्ध्रस्वमिति प्रथमकनिष्ठद्वितीयज्येष्ठयोरभ्यासः ३, प्रथमज्येष्ठद्वितीयकनिष्ठयोरभ्यासः ३, अनयोर्युतिः ६ ह्रस्वं भवेत्। लघुघातः १ प्रकृतिहतः ८ ज्येष्ठघातेन ९ अन्वितः १७ ज्येष्ठपदं भवेत्।

क्षिप्त्योर्घातः क्षेपः १ क्रमेण न्यासः—

| प्र ८ क १ ज्ये ३ क्षे १ |
|---|
| क ६ ज्ये १७ क्षे १ |

समासभाव-

---

1. उदाहरणम्— प्र ८ क्षे १ अत्रेष्टं ह्रस्वं मूलं कल्पितम् १, अस्य वर्गः प्रकृत्या क्षुण्णो रूपयुतो मूलम् ३, एतज्ज्येष्ठमूलम् ३

$(1)^2 = 1,\ 1 \times 8 = 8,\ 8 + 1 = 9$ अस्य पदम् ३ = ज्येष्ठमूलम्

भावनार्थं न्यासः— प्र ८ क १ ज्ये ३ क्षे १
क १ ज्ये ३ क्षे १

"वज्राभ्यासो ह्रस्वज्येष्ठयोरित्यादिना" क ६ ज्ये १७ क्षे १

पुनर्न्यासः— प्र ८ क १ ज्ये ३ क्षे १
क ६ ज्ये १७ क्षे १

अत्रापि "वज्राभ्यासो ह्रस्वज्येष्ठयोरित्यादिना" क ३५ ज्ये ९९ क्षे १

एवमनन्तमूलानि।
अथवा कनिष्ठमूलं २ कल्पितम्।
पूर्वोक्तक्रियाकरणेनात्रापि क २ ज्ये ६ क्षे ४
"ईप्सितवर्गविहृतः क्षेपः" इत्यादिना रूपक्षेपार्थं कल्पितमिष्टम् २, अस्य वर्गेण हृते क्षेपे तथानेन हृते मूले क १ ज्ये ३ क्षे १
आभिर्भावनाभिस्तान्येव मूलानि भवन्ति।

नया जाते मूले क ३५ ज्ये ६६ क्षे १ पुनर्भावनार्थं न्यास :—| प्र ८ क १ ज्ये ३ क्षे १ | क ३५ ज्ये ६६ क्षे १ |

अत्र तुल्यभावनया जाते मूले क २०४ ज्ये ५७७ क्षे १ एवमनन्तमूलानि ।

अथवा कनिष्ठमूलं रूपद्वयं कल्पितम् २, अस्य वर्गः ४ प्रकृतिः ८ हतः ३२ चतुःक्षेपः ४ युतः ३६ मूलं ज्येष्ठं ६ क्रमेण न्यासः—क २ ज्ये ६ क्षे ४, ईप्सितवर्गविहृतः क्षेप इति रूपक्षेपार्थं कल्पितमिष्टं रूपद्वयं २, अस्य वर्गः ४ हृतः क्षेपः ४ लब्धः क्षेपः १, इष्टद्वयेन हृते मूले जाते रूपक्षेपमूले क १ ज्ये ३ क्षे १, आभिर्भावनाभिस्तान्येव मूलानि भवन्ति ।

[1]द्वितीयोदाहरणे न्यासः—प्रकृतिः ११ क्षेपः क १, अत्र रूपमिष्टं कनिष्ठं तद्वर्गः १ प्रकृतिगुणो द्विरूपोनो मूलं ज्येष्ठं ३ यथाक्रमं समासभावनार्थं न्यासः—| प्र० ११ क १ क १ ज्ये ३ क्षे २ ज्ये ३ क्षे २ | ससमासभावनया जाते मूले क ६ ज्ये २० क्षे ४, ईप्सितवर्गविहृत इति रूपक्षेपे क ३ ज्ये १० क्षे १, अतः समासभावनया जाते मूले क ६० ज्ये १६६ क्षे १, अथवा रूपपञ्चकक्षेपमूले क १ ज्ये ५ क्षे ५, समासभावनया जाते पञ्चविंशतिक्षेपमूले क ८ ज्ये २७ क्षे २५, अतो रूपमूले क $\frac{८}{५}$ ज्ये $\frac{२७}{५}$ अनयोः पूर्वमूलाभ्यामाभ्यां ३।१० सहभावनार्थं न्यासः—| प्र ११ क ३ ज्ये १० क्षे १ | क $\frac{८}{५}$ ज्ये $\frac{२७}{५}$ क्षे १ | समासभावनया जाते मूले $\frac{१६१}{५}$ | $\frac{५३४}{५}$ एवमनन्तमूलानि । अथवा वज्राभ्यासविशेष इति भावनार्थं न्यासः—| प्र ११ क ३ ज्ये १० क्षे १ | क $\frac{८}{५}$ ज्ये $\frac{२७}{५}$ क्षे १ | अन्तरभावनया जाते मूले $\frac{१}{५}$ | $\frac{६}{५}$ अनयोः पूर्वमूलाभ्यामाभ्यां ३।१० विशेषभावनया जाते मूले $\frac{८}{५}$ | $\frac{२७}{५}$ एवमनन्तमूलानि । इष्टप्रकृतिगुणकशेषोद्धृतमिति रूपक्षेप-

---

1. द्वितीयोदाहरणमपि तथैव ।

पदाभ्यां पुनः पुनः समासविशेषभावनाभिर्बहूनि मूलानि भवन्ति। तद्यथा—

प्रथमोदाहरणे रूपत्रयमिष्टं प्रकल्प्य यथोक्तकरणेन जातं कनिष्ठं ६, अस्य वर्गात्प्रकृतिगुणाद्रूपयुतान्मूलं ज्येष्ठं १७ रूपपञ्चकेष्टे च जातं कनिष्ठं $\frac{१०}{१७}$ अतो ज्येष्ठं $\frac{३३}{१७}$ अनयोः पूर्वमूलाभ्यामाभ्यां ६।१७ समासभावनया जाते मूले $\frac{३६८}{१७} \mid \frac{१०४१}{१७}$ अथवा विशेषभावनया जाते मूले $\frac{२८}{१७} \mid \frac{८१}{१७}$

एवं द्वितीयोदाहरणे रूपत्रयेणेष्टेन जाते मूले ३।१० पञ्चकेष्टेन जाते $\frac{५}{७} \mid \frac{१८}{७}$ अनयोः पूर्वमूलाभ्यामाभ्यां ३।१० समासभावनया जाते मूले $\frac{१०४}{७} \mid \frac{३४५}{७}$ अन्तर-भावनया जाते मूले $\frac{४}{७} \mid \frac{१५}{७}$ एवमनन्तमूलानि।

इति वर्गप्रकृतिः॥

---

एकद्वित्रिचतुःक्षेपसाधनाय चक्रवाले करणसूत्रमार्या [ द्वयम् ? चतुष्टयम् ]—

[1]ह्रस्वज्येष्ठक्षेपान्भाज्यप्रक्षेपभाजकान्कृत्वा।
कल्प्यो गुणो यथा तद्वर्गात्संशोधयेत्प्रकृतिम्॥७९॥
प्रकृतिगुणवर्गौ वा विशोधिते जायते तु यच्छेषम्।
तत्क्षेपहृतं क्षेपो गुणवर्गविशोधिते व्यस्तम्॥८०॥

---

१. ह्रस्वज्येष्ठक्षेपानिति। यदि प्रकृतिः = प्र। कनिष्ठः = क। ज्येष्ठः = ज्ये। क्षेपः = क्षे।
तदा तस्यामेव प्रकृतौ १ कनिष्ठकल्पनायां ज्येष्ठम् = इ
"ह्रस्वमभीष्टं मूलमित्यादिना $\text{प्र} + \text{क्षे} = \text{इ}^2$
$\therefore \text{क्षे} = \text{इ}^2 - \text{प्र}$
अतो भावनया क ज्ये क्षे

लब्धिः कनिष्ठमूलं तन्निजगुणकाहतं वियुक्तं च ।
पूर्वाल्पपदपरक्षिप्त्योघातेन जायते ज्येष्ठम् ॥८१॥
प्रक्षेपशोधनेष्वप्येकद्वित्रिचतुष्काभिन्नमूले स्तः ।
द्विचतुःप्रक्षेपाभ्यां रूपक्षेपाय भावना त्रिशुद्धा या ॥८२॥

[1]उदाहरणम्—

कस्त्र्युत्तरेण गुणितोऽत्र शतेन वर्गः सैकः कृतित्वमुपयाति वदाशु तं मे ।
को वा त्रिवर्जितशतेन हतस्तु वर्गो रूपान्वितः प्रकृतिगतो भवति प्रचक्ष्व ॥ ३७ ॥

न्यासः—प्रकृतिः १०३ क्षेपकः १ प्राग्वद्रूपत्रयशुद्धौ मूले क१ ज्ये १० क्षे ३̇, अत्र ह्रस्वपदं भाज्यं ज्येष्ठपदं क्षेपं हरं क्षेपं प्रकल्प्य कुट्टकार्थं न्यासः— $\left|\begin{array}{l}\text{भा १ क्षे १०}\\ \text{ह ३̇}\end{array}\right|$ कुट्टक-

---

$\frac{\text{१ इ इ}^{२}-\text{प्र}}{}$

"वज्राभ्यासो ह्रस्वज्येष्ठयोरित्यादिना"

$\text{क}' = \text{इ क} + \text{ज्ये} \;\Big|\; \text{ज्ये}' = \text{क प्र} + \text{इ ज्ये} \;\Big|\; \text{क्षे}' = \text{क्षे}(\text{इ}^{२} - \text{प्र})$

"ईप्सितवर्गविहृतः क्षेपः" इत्यादिना क्षेपमिष्टं प्रकल्प्य जाताः कनिष्ठज्येष्ठक्षेपाः—

$\text{क}' = \frac{\text{इ क} + \text{ज्ये}}{\text{क्षे}} \;\Big|\; \text{ज्ये}' = \frac{\text{क प्र} + \text{इ ज्ये}}{\text{क्षे}} \;\Big|\; \text{क्षे}' = \frac{\text{क्षे}(\text{इ}^{२} - \text{प्र})}{\text{क्षे}^{२}} = \frac{\text{इ}^{२} - \text{प्र}}{\text{क्षे}}$

यद्यत्र कनिष्ठमभिन्नमभीष्टं तदा प्रथमकनिष्ठं केनचिदिष्टेन गुणनीयं ज्येष्ठयुक्तं यथा विशुद्धयेत् तदर्थमेवात्र कुट्टक आवश्यकः । तेनोपपन्नम्—ह्रस्वज्येष्ठक्षेपान्भाज्यप्रक्षेपभाजकानित्यादि। इत्थं यदागतमभिन्नकनिष्ठं तत्र क्षेपः $= \frac{\text{इ}^{२} - \text{प्र}}{\text{क्षे}}$ । अत्र भाज्यसंख्याया विपरीतशोधनेन

सिद्धौ सत्यां लब्धिः क्षेपहृता ज्ञेया, सा च क्षेपविजातीया । अतः—"गुणवर्गविशोधिते व्यस्तम्"इति कथनमपि युक्तमेव ।

१. उदाहरणमिति । प्र १०३ क्षे १

ह्रस्वमभीष्टमूलमित्यादिना—

| क | ज्ये | क्षे |
|---|---|---|
| १ | १० | -३ |

अत्र ह्रस्वपदं भाज्यम्, ज्येष्ठपदं क्षेपम्, क्षेपं हरं प्रकल्प्य कुट्टकार्थं न्यासः—

$$\frac{\text{१} + \text{१०}}{-\text{३}}$$

करणेन लब्धो गुणः सक्षेपः क्षे ३̇ गु २ क्षेपे क्रमेण त्रयेण गुणिते जातोऽपरः गुणः ११, अस्य वर्गात्प्रकृतिमपास्य शेषं १८ क्षेपं हृतं ६̇ जातः क्षेपः ६̇ लब्धिः कनिष्ठमूलं ७̇ एतन्निजगुणकेन ११ हतं ७७̇ पूर्वह्रस्वं पदं १ परक्षेप ६̇ घातेन ६̇ त्रियुक्तं ज्येष्ठं ७१̇ ऋणधनमूलयोरुत्तरे कर्मणि क्रियमाणे न विशेष.। तस्माद्दणमूलयोर्धनत्वं प्रकल्प्य षट्-शोधने मूले प्रकृतिः १०३ क ७ ज्ये ७१̇ क्षे ६̇ कुट्टकार्थं न्यासः—| भा ७ क्षे ७१ | जातो
ह ६̇ |

---

हरतष्टे धनक्षेपे लब्धिस्तक्षणफलेन संयुक्तेत्यादिप्रकारमनुसृत्य—

$$\frac{१ + १}{३}$$

प्राग्वज्जाता वल्ली ०
१
०

एवमागते गुणाप्ती १ | ०

अत्र विषमा वल्ल्यः, तेन स्वतक्षणाभ्यां शोधिते धनक्षेपे जाते गुणाप्ती २ | १

क्षेपतक्षणफलेन संयुक्ता लब्धिः = १ + ३ = ४

अत्र हरस्य ऋणत्वाल्लब्धिऋ्र्णात्मिका ज्ञेया।

एवमागते गुणाप्ती २ | − ४, गुणवर्गः = $(२)^२$ = ४, प्रकृतेः शोधिते शेषम् = १०३ − ४ = १०९, शेषमल्पकं न जातम्। अतोऽत्र ऋणत्रयमिष्टं प्रकल्प्य "इष्टघ्नतक्षणयुते बहुधा भवतो गुणाप्तो' इत्यादिना − ३ × १ = − ३ = इष्ट-घ्नतक्षणः।

∴ ( − ३ ) + ( − ४ ) = − ७ = लब्धिः।

( − ३ ) × ( − ३ ) = ९ = इष्टघ्नतक्षणः।

९ + २ = ११ = गुणकः।

गुणवर्गात्प्रकृतिमपास्य शेषे क्षेपेण हृते जातः क्षेपः = $(११)^२$ = १२१

१२१ − १०३ = १८

१८ − − ३ = − ६ = क्षेपः

लब्धिः = − ७ = कनिष्ठमूलम्।

कनिष्ठमूलमागते सति "ह्रस्वमभीष्टमूलमित्यादिना"

$(−७)^२$ = ४९

४९ × १०३ = ५०४७ = ह्रस्व$^२$ × प्रकृतिः

५०४७ − ६ = ५०४१ = ज्ये$^२$ ∴ ज्येष्ठम् = ७१

गुणः सक्षेपः क्षे ६ गु १ क्षेपे ऋणमिति जातमृणं ५४ क्षेपेण ६ हृतः क्षेपः ६ लब्धिः कनिष्ठं मूलं २० एतन्निजगुणकाहतं १४० पूर्वह्रस्वपदपरप्रक्षेपघातः ६३, अनेन वियुक्तं जातं ज्येष्ठं २०३ पुनः प्रकृतिः १०३ क २० ज्ये २०३ क्षे ६ कुट्टकार्थं न्यासः—

| भा २० क्षे २०३ | हृ ६ | जातो गुणः सक्षेपः ६ गु २ एकेनेष्टेन जातोऽपरो गुणः ११, अस्य वर्गात्प्रकृतिमपास्य शेषं १८ क्षेपेण ६ हृतः क्षेपः २ लब्धिः कनिष्ठपदं ४७, एतन्निजगुणकाहतं ५१७ पूर्वाल्पपदं २० परक्षेपः २, अनयोर्घातेनानेन ४० वियुक्तं जातं ज्येष्ठं ४७७ पुनः प्रकृतिः १०३ क ४७ ज्ये ४७७ क्षे २ प्रक्षेपशोधनेष्वप्येकद्विचतुर्ष्वभिन्नमूलेषु भाव-

---

अत्र ऋणत्वे धनत्वे चोत्तरे कर्मणि न विशेषोऽस्ति। तस्मादृणमूलयोर्धनत्वं प्रकल्प्य षट्शोधने मूले प्रकृतिः १०३ | कनिष्ठः ७ | ज्येष्ठः ७१

क्षेपः–६

पुनः कुट्टकार्थं न्यासः—

$$\frac{७ + ७१}{-६}$$

अत्रापि पूर्ववत्क्रियाकरणेन जाता वल्ली—

१ ५

५

०

आगते गुणाप्ती ५ | ५

त्रिषमा वल्लयः, तेन स्वतक्षणाभ्यां शोधिते जाते धनक्षेपे गुणाप्ती १ | २

क्षेपतक्षणलाभाढ्या लब्धिः = ११ + २ = १३ वास्तविकी लब्धिः।

हरस्यात्र ऋणत्वाल्लब्धिरृणात्मिका ज्ञेया। गुणाप्ती १ | १३

ऋणात्मकं रूपमिष्टं प्रकल्प्य "इष्टघ्नतक्षणयुतः" इत्यादिना जाते गुणाप्ती ७।–२०

प्रकृतेर्गुणवर्गं विशोध्य शेषे क्षेपेण हृते जातः क्षेपः–

$( ७ )^२ = ४९ । १०३ - ४९ = ५४ | \frac{५४}{-६} = -९ =$ क्षेपः। लब्धिः = कनिष्ठं पदम्

$= -२०$। प्रकृतितश्च्युते व्यस्तः स्यात्तेन क्षेपं धनात्मकम् क २० क्षे ६

नयेति समासभावनार्थं न्यासः— | प्र १०३ क ४७ ज्ये ४७७ क्षे २ | जाते चतुःक्षेपमूले
क ४७ ज्ये ४७७ क्षे २ |

४४८३८ ज्ये ४५५०५६ क्षे ४, अतो रूपक्षेपमूले क २२४१[४१९] ज्ये [२]२७५२८ क्षे १

---

ह्रस्वमभीष्टमूलमित्यादिनाऽऽगतं ज्येष्ठमूलम् २०३

| प्र | क | ज्ये | क्षे |
|---|---|---|---|
| १०३ | २० | २०३ | ९ |

कुट्टकार्थं पुनर्न्यासः— $\frac{२० + २०३}{९}$

"हरतष्टे धनक्षेपे" इत्यादिना— $\frac{२० + ५}{९}$

जाता वल्ली २ ४५
४ २०
५
०

जाते गुणाप्ती २ | ५

२२ + ५ = २७ = लब्धिः ( क्षेपतक्षणलाभाढ्या )।

एकमिष्टं प्रकल्प्य "इष्टघ्नतक्षणयुतः" इत्यादिप्रकारेण जाते गुणाप्ती ११।४७

गुणवर्गात्प्रकृतिमपास्य शेषे क्षेपेण हृते जातः क्षेपः २ | लब्धिः ४७ = कनिष्ठपदम्

| क | क्षे |
|---|---|
| ४७ | २ |

इत्यत्र "ह्रस्वमभीष्टमूलम्" इत्यादिना ज्येष्ठमूलमानीयते, अथवा "तन्निजगुणकाहतं वियुक्तं च । पूर्वाल्पपदप्रक्षिप्त्योर्घातेन जायते ज्येष्ठम्" इत्यादिनापि ज्येष्ठानयनं सुगमम् । तस्मादत्र ४७ × ११ = ५१७ = क × गुणकः

५१७ − ४० = ४७७ = ज्येष्ठम् ।

समासभावनार्थं न्यासः—

| प्र १०३ | क | ज्ये | क्षे |
|---|---|---|---|
| | ४७ | ४७७ | २ |
| | ४७ | ४७७ | २ |

वज्राभ्यासो ह्रस्वज्येष्ठयोरित्यादिना

४४८३८ , ४५५०५६ , ४

अतो रूपक्षेपमूले क २२४१९, ज्ये २२७५२८ , क्षे १

[1]द्वितीयोदाहरणे प्रकृतिः९७ क १ ज्ये १० क्षे ३ प्राग्वत्कुट्टकन्यासः— | भा १ क्षे १० / ह ३ | जातो गुणः सक्षेप क्षे ३ गु २ धनरूपत्रयेण जातोऽपरो गुणः ११, अस्य वर्गात्प्रकृतिमपास्य शेषं २४ क्षेपहृतं क्षेपः ८ लब्धिः कनिष्ठमूल ७, अतो ज्येष्ठं ६९ प्र ९७ क ७ ज्ये ६९ क्षे ८ पुनः कुट्टकः— | भा ७ क्षे ६९ / ह ८ | अतो गुणः सक्षेपः क्षे ८ गु ५ धनरूपेणैकेन जातोऽपरो गुणः १३, वर्गादस्य १६९ प्रकृतिमपास्य शेषं ७२ क्षेपहृतं क्षेपः ९ लब्धिः कनिष्ठमूलं २० अतो ज्येष्ठं १९७ प्रकृतिः ९७ क २० ज्ये १९७ क्षे ९ कुट्टककरणेन लब्धो गुणः सक्षेपः क्षे९ गु ५ धनरूपेण जातोऽपरो गुणः१४, अस्य वर्गात्प्रकृतिमपास्य शेषं ९९ क्षेपः ९ हृतः क्षेपः ११ लब्धिः कनिष्ठमूलं ५३ अतो ज्येष्ठं ५२२ पुनः प्रकृति ९७ क ५३ ज्ये ५२२ क्षे ११ कुट्टकेन जातो गुणः सक्षेपः क्षे ११ गु ८ शून्येन जातोऽपरो गुणः ८, अस्य वर्गं प्रकृतेरपास्य शेषं ३३ गुणवर्गविशोधिते व्यस्तमिति जातमृणां ३३̇ क्षेपहृतं क्षेपः ३̇ लब्धिः कनिष्ठं ८६, अतो ज्येष्ठं ८४७ पुनः प्रकृतिः ९७ क ८६ ज्ये ८४७ क्षे ३̇, कुट्टकेन जातो गुणः सक्षेपः ३ गु १ ऋणरूपत्रयेण जातोऽपरो गुणः १००, अस्य वर्गात्प्रकृतिमपास्य शेषं ३ क्षेपहृतं क्षेपः १̇ लब्धिः कनिष्ठं ५६९̇ अतोज्येष्ठं ५६०४̇ प्राग्वदृणत्वे धनत्वमिति जाते धनात्मके रूपशुद्धिमूले क ५६९ ज्ये ५६०४ क्षे १̇, समासभावनया जाते रूपक्षेपमूले क ६३७७३५२ ज्ये ६२८०९९३३

सूत्रमार्या—

[2]रूपविशुद्धौ प्रकृतिः कृतियोगः स्यान्न चेत्खिलं तु तदा ।
अखिलप्रकृतौ प्राग्वत्साध्ये मूलेऽल्पकानल्पे ॥८३॥

---

१. द्वितीयोदाहरणमपि तथैव ।

२. रूपविशुद्धाविति । ऋणात्मके रूपक्षेपे प्रकृतिस्तु खण्डद्वयवर्गयोगो भवेत् । यदि रूपशुद्धौ कस्यापि खण्डद्वयस्य वर्गयोगतुल्यो गुणको न भवेत्तदा प्रश्नमशुद्धं ज्ञेयम् । यतः—

$$\text{प्र क}^2 \pm \text{क्षे} = \text{ज्ये}^2$$

$$\text{यदि क्षे} = -1$$

$$\text{तदा ज्ये}^2 = \text{प्र क}^2 - 1$$

$$\text{प्र क}^2 = \text{ज्ये}^2 + 1$$

$$\text{प्र} = \frac{\text{ज्ये}^2}{\text{क}^2} + \frac{1}{\text{क}^2}$$

$$\text{प्र} = \left(\frac{\text{ज्ये}}{\text{क}}\right)^2 + \left(\frac{1}{\text{क}}\right)^2$$

उपपन्नमनेन रूपशुद्धावित्यादि ।

[1]उदाहरणम्—

कस्त्रयोदशनिघ्नश्च वर्गो व्येकः पदप्रदः ।
को वर्ग एकषष्टिघ्नो निरेको मूलदो वद ॥३८॥

प्रथमोदाहरणे द्विकत्रिकयोर्वर्गयोगः प्रकृतिः १३ प्राग्वच्चतुःशुद्धौ मूले क १ ज्ये ३ चे ४, अतो रूपशुद्धौ मूले $\frac{1}{2} \Big| \frac{3}{2}$ अथवा नवशुद्धौ मूले क १ ज्ये २ चे ९, अतो रूपशुद्धौ मूले $\frac{1}{3} \Big| \frac{2}{3}$ चक्रवालकरणेनाभिन्ने ५ | १८

---

१. उदाहरण —

| प्र | क्षे |
|---|---|
| १३ | −१ |

अत्र द्विकत्रिकयोर्वर्गयोगः १३ प्रकृतिरस्ति । अतो ह्रस्वमभीष्टं मूलमित्यादिना प्रागवत् ४ शुद्धौ

| क | ज्ये | क्षे |
|---|---|---|
| १ | ३ | −४ |

अतो रूपशुद्धौ मूले

| क | ज्ये | क्षे |
|---|---|---|
| $\frac{1}{2}$ | $\frac{3}{2}$ | −१ |

('ईप्सितवर्गविहृतः क्षेपः' इत्यादिना इष्टः = २ प्रकल्प्यः)

अथवा नवशुद्धौ

| क | ज्ये | क्षे |
|---|---|---|
| १ | २ | −९ |

अत्रेष्टत्रयं प्रकल्प्य 'ईप्सितवर्गविहृतः क्षेपः' इत्यादिना

| | क | ज्ये | क्षे |
|---|---|---|---|
| रूपशुद्धौ | $\frac{1}{3}$ | $\frac{2}{3}$ | −१ |

अथवा ययोर्द्वयोः खण्डयोर्वर्गयोगेन प्रकृतिः सिद्ध्यति ताभ्यां खण्डाभ्यां पृथक् पृथग् रूपे विभक्ते रूपशुद्धौ कनिष्ठज्येष्ठमूले भवतः, अथवा ह्रस्वमभीष्टमूलमित्यादिप्रागुक्तनियमेनापि कनिष्ठज्येष्ठानयनं सुगमम् ।

| अतोऽत्र रूपशुद्धौ | प्र १३ | क | ज्ये | क्षे |
|---|---|---|---|---|
| | | $\frac{1}{2}$ | $\frac{3}{2}$ | −१ |

द्वितीयोदाहरणे षट्त्रिंशच्छुद्धौ मूले क १ ज्ये ५ क्षे ३६, अतो रूपशुद्धौ मूले $\frac{1}{6}$ | $\frac{5}{6}$ अथवा पञ्चविंशतिशुद्धौ मूले क १ ज्ये ६ क्षे २५, अतो रूपशुद्धौ मूले $\frac{1}{5}$ | $\frac{6}{5}$ चक्रवालेनाभिन्ने वा ३८०५।२९७१८ एवमनन्तमूलानि।

अपि च—

वर्गः पञ्चगुणः कश्चिच्चतुर्भिः संयुतः कृतिः।
षट्त्रिंशताऽथवा युक्तः शतयुक्तोऽथवा भवेत् ॥३९॥

प्रकृतिः ५ क १ ज्ये ३ क्षे ४ क्षेपो येन गुणितस्तन्मूले गुणकनिष्ठज्येष्ठे तद्गुणगुणक्षेपे मूले भवतः। अतस्त्रिगुणिते षट्त्रिंशत्क्षेपमूले ३। ९ पञ्चगुणिते शतक्षेपमूले ५। १५, एवं बुद्धिमता विशोधने मूले ज्ञेये।

---

ह्रस्वज्येष्ठक्षेपान् भाज्यप्रक्षेपभाजकान् कृत्वा कुट्टकार्थं न्यासः—

$$\frac{\frac{1}{2} + \frac{3}{2}}{-1}$$

अत्र भाज्यभाजकक्षेपानर्द्धेनापवर्त्य जाताः भा १। हा–२। क्षे ३

$$\frac{1+3}{-2}$$

जाता वल्ली ०
१
०

जाते गुणाप्ती १ | ०

दल्लयोऽत्र विषमाः। तेन स्वतक्षणाभ्यां शोधिते जाते गुणाप्ती १। १

क्षेपतक्षणलाभाढ्या लब्धिरत्र वास्तविकी लब्धिः २। गुणकः १

अत्रेष्टमृणरूपं प्रकल्प्य "इष्टघ्नतक्षणयुतः" इत्यादिप्रकारेण जातोऽन्यो गुणः ३। लब्धिः ३

लब्धिरेव कनिष्ठपदमतः कनिष्ठम् ३ क्षे ४

आभ्यां ज्येष्ठः ११

| क | ज्ये | क्षे |
|---|---|---|
| ३ | ११ | ४ |

अतोऽपि पुनर्भाज्यप्रक्षेपभाजकानित्यादिना चक्रवालेन लब्धो गुणः ३

गुणवर्गे इत्यादिना रूपशुद्धावभिन्नपदे क ५ ज्ये १८

इह सर्वत्र पदानां रूपक्षेपपदाभ्यां भावनयानन्त्यम्।

एवं द्वितीयोदाहरणमपि ज्ञेयम्।

सूत्रम्—

[1]प्रकृतिरभीप्सितवर्गोद्धृता यथा शुद्धिमेति यल्लब्धम्।
कल्प्यो गुणः कनिष्ठं छेदेन मूलोद्धृतं भवति ॥८४॥

उदाहरणम्—

द्वासप्ततिप्रगुणिता कृतिरेकयुक्ता मूलप्रदा भवति मे वद मित्र शीघ्रम्।
पञ्चाशकेन गुणितोऽप्यथवा सरूपो वर्गः कृतित्वमुपयाति सखे विचिन्त्य ॥४०॥

प्रथमोदाहरणे प्रकृतिः ७२ ईप्सितवर्गेण ९ हृता विशुद्धं लब्धं ८ इयं प्रकृतिः ८ क १ ज्ये ३ क्षे १, अत्र कनिष्ठं छेदमूलेनानेन ३ हृतं जातं कनिष्ठं $\frac{1}{3}$ एवं जाते ह्रस्वज्येष्ठे $\frac{1}{3} \mid \frac{3}{1}$

द्वितीयोदाहरणे प्रकृतिः $\frac{1}{5}$ इयं पञ्चमांशवर्गेण $\frac{1}{25}$ हृता विशुद्धं लब्धं ५ प्राग्वद्रूपक्षेपमूले क ४ ज्ये ९ क्षे १ कनिष्ठच्छेदमूलेनानेन $\frac{1}{5}$ हृतं जातं कनिष्ठं २०, एवं जाते ह्रस्वज्येष्ठे २० । ९, तुल्यातुल्यपदानां भावनयानन्तमूलानि ।

---

१. **प्रकृतिरभीप्सितवर्गोद्धृतेति** । प्रश्नोद्दिष्टा प्रकृतिः केनचिदभीष्टवर्गेण विभाजिता, यल्लब्धं तदेव नूतना प्रकृतिः प्रकल्प्या । अस्यामेव प्रकृतौ प्राग्वत् कनिष्ठज्येष्ठमूले साधनीये । ततो येन वर्गेण प्रकृतिश्छिन्ना तस्यैव पदेनागते कनिष्ठज्येष्ठमूले विभाजिते सति प्रश्नोद्दिष्टप्रकृतौ कनिष्ठज्येष्ठपदे भवतः ।

**अत्रोपपत्तिः** । केनचिद्वर्गेणापवर्तितायां प्रकृतौ ज्येष्ठवर्गोऽपि तेनैव वर्गेणापवर्तितः स्यात्, यतः प्र क+क्षे=ज्ये$^2$ । अतो ज्येष्ठं तन्मूलेनैवापवर्तितं स्यात् । परन्तु कनिष्ठं नापवर्तनीयम् । यतो नह्यस्ति विशेषता काचित्प्रकृतिकृता कनिष्ठे, येन प्रकृतेर्गुणने भजने वा कनिष्ठमपि गुणितमपवर्तितं वा भवेत् । अतः केवलं तन्मूलेन कनिष्ठमेव भाज्यम् । ज्येष्ठं तु भाजितमेव । अनयैव रीत्या प्रकृतिं केनचिद्वर्गेण संगुण्य तादृश्या प्रकृत्या कनिष्ठज्येष्ठे प्रसाध्य तत्पदेन कनिष्ठं गुणयेदित्यूहनीयम् । उपपन्नमनेन प्रकृतिरभीप्सितवर्गोद्धृतेत्यादि ।

**उदाहरणम्** । प्र ७२ इयमीप्सितवर्गेण हृता लब्धम् ८
∴ प्र ८ क ज्ये क्षे
१ ३ १

अत्र कनिष्ठमीप्सितवर्गमूलेन विहृतं जातं कनिष्ठं $\frac{1}{3}$, ज्येष्ठं तु तदेव ३ ।

द्वितीयोदाहरणमपि तथैव ।

वर्गगतायां प्रकृतौ सूत्रम्—

[1]क्षिप्तिरभीष्टविभक्ता द्विधा तदिष्टोनसंयुता दलिता ।
आद्या प्रकृतिपदाप्ता क्रमशोऽल्पानल्पमूले ते ॥८५॥

1. क्षिप्तिरभीष्टविभक्तेति । उद्दिष्टक्षेप इष्टेन भक्तो द्विधा स्थाप्यः । एकत्रेष्टेन युक्तोऽपरत्रेष्टेनोनित उभयत्राप्यर्द्धितः । आद्यस्तु प्रकृतिमूलेन विभाजितः । क्रमाद्ध्रस्वज्येष्ठपदे भवतः ।

उपपत्तिरत्र ह्रस्वमभीष्टमूलमित्यादिना $ज्ये^{2} = प्र \times क^{2} + क्षे$

अत्र प्रकृतिः = राश्यन्तर$^{2}$ = ख यदि कल्प्यते, तदा $ज्ये^{2} = क^{2}\,ख^{2} + क्षे$

$\therefore क्षे = ज्ये^{2} - क^{2}\,ख^{2}$ = वर्गान्तरम् ।

पक्षौ यदि ( ज्ये − क ख ) अनेन भाजितौ

तदा $\frac{क्षे}{ज्ये - क\ ख} = \frac{ज्ये^{2} - क^{2}\,ख^{2}}{ज्ये - क\ ख}$

वर्गान्तरं राशिवियोगभक्तं योगः स्यादिति प्रसिद्धनियमात् ।

$\frac{क्षे}{ज्ये - क\ ख} = ज्ये + क\ ख =$ योगः ।

अतो योगोऽन्तरेणोनयुतोऽर्द्धितस्तौ राशीस्मृताविति युक्त्या

$(ज्ये + क\ ख) + (ज्ये - क\ ख) = \frac{क्षे}{ज्ये - क\ ख} + (ज्ये - क\ ख)$

तथा $(ज्ये + क\ ख) - (ज्ये - क\ ख) = \frac{क्षे}{ज्ये - क\ ख} - (ज्ये - क\ ख)$

$\therefore २\ ज्ये = \frac{क्षे}{ज्ये - क\ ख} + \left(ज्ये - क\ ख\right)$

तथा $२\ क\ ख = \frac{क्षे}{ज्ये - क\ ख} - \left(ज्ये - क\ ख\right)$

अत्र यदि ( ज्ये − क ख ) = इ कल्प्यते

तदा $२\ ज्ये = \frac{क्षे}{इ} + इ$

$२\ क\ ख = \frac{क्षे}{इ} - इ$

$\therefore ज्ये = \left(\frac{क्षे}{इ} + इ\right)\frac{१}{२}$

तथा $क = \left(\frac{क्षे}{इ} - इ\right)\frac{१}{२}\ ख$

उपपन्नमनेन क्षिप्तिरभीष्टविभक्तेत्यादि ।

[1]उदाहरणम्—

वर्गो नवहतः कश्चिद्दशाढ्यो वा दशोनितः ।
मूलप्रदो जायते तन्मे गणितज्ञ वदाशु तम् ॥४१॥

प्रकृतिः ९ क्षे १० अत्र क्षितिः १० द्विधैकेनेष्टेन हृता $\frac{१०}{१}$ | $\frac{१०}{१}$ इष्टोनेन युता दलिता $\frac{९}{२}$ | $\frac{११}{२}$ अनयोराद्या प्रकृतिपदेनानेन ३ हृता जाते मूले $\frac{३}{२}$ | $\frac{११}{२}$ द्विकेनेष्टेन मूले $\frac{१}{२}$ | $\frac{७}{२}$ पञ्चकेन $\frac{१}{२}$ $\frac{७}{२}$ द्वितीयोदाहरणे प्रकृतिः ९ क्षे १० प्राग्वदेकेनेष्टेन जाते मूले $\frac{११}{६}$ | $\frac{९}{२}$ द्विकेन जाते मूले $\frac{७}{६}$ $\frac{१}{२}$ एते धने मूले एव भवतः । ऋणत्वे धनत्वे न विशेषः । एवमनन्तमूलानि ।

रूपक्षेपपदाभ्यां समासान्तरभावनाभिर्बहूनि मूलान्युत्पद्यन्ते ।

---

1. उदाहरणम् प्र–९ क्षे १०

अत्र क्षिप्तिरभीष्टविभक्तेत्यादिना रूपमिष्टं प्रकल्प्य द्विधैकेन हृता

१० १०

इष्टोनेन युता दलिता $\frac{१०+१}{२} = \frac{११}{२}, \frac{९}{२}$

प्रकृतिपदाप्ता आद्या $\frac{३}{२}$

$\therefore$ क $\frac{३}{२}$, ज्ये $\frac{११}{२}$

अथवा द्वयमिष्टं प्रकल्प्य पूर्ववत् क्रियाकरणेन जाते मूले $\frac{१}{२}$, $\frac{७}{२}$

अथवा

ह्रस्वमभीष्टं मूलमित्यादिप्रकारेणैव कनिष्ठज्येष्ठमूले भवतः ।

यथा इष्टं ह्रस्वम् = १

प्रकृतिसमक्षेपविशुद्धावुदाहरणम्—

का कृतिर्दशभिः क्षुण्णा दशाढ्या वा दशोनिता ।
मूलदा जायते विद्वन् तादृशं वद चेत्सि चेत् ॥४२॥

प्रकृतिः १० क्षेपः १०, अत्र दशशुद्धौ मूले १ | ०, ह्रस्वमभीष्टमूलमित्यादिना रूपशुद्धौ मूले १ | ३ क्षे १, पूर्वदशशुद्धौ मूले १ | ० क्षे १०, भावनया जाते दशक्षेपमूले ३ | १०

द्वितीयोदाहरणे प्राग्वद्दशशुद्धौ मूले १ | ०, इष्टकृतिगुणकशेषोद्धृतमिति रूपक्षेपमूले ६ | १९ पूर्वमूलाभ्यामाभ्यां १ | ० सह भावनया जाते दशशुद्धौ मूले १९ | ६०, अन्तरभावनया च ते एव मूले १९।६०

अपि च—

क्षयगैकादशघ्नः को वर्गः षष्टिसमन्वितः ।
मूलदो जायते तं मे वद कोविद सत्वरम् ॥४३॥

न्यासः—प्र ११ क्षे ६०, अत्र ह्रस्वमभीष्टं मूलमित्यादिना षष्टिक्षेपमूले १ | ७

---

अस्य वर्गः प्रकृतिगुणितः ४० योजनेन मूलं ज्येष्ठम्

| | | | |
|---|---|---|---|
| ∴ क | ज्ये | क्षे | अत्र १० क्षेपार्थमिष्टं द्वयं प्रकल्प्य 'ईप्सितवर्ग- |
| १ | ७ | ४० | विहृतः क्षेपः' इत्यादिना जाते मूले |

$\frac{१}{२}$, $\frac{७}{२}$, १०

अथवा त्रयमिष्टं ह्रस्वं प्रकल्प्य पूर्ववत् करणेन—

| | | | |
|---|---|---|---|
| क | ज्ये | क्षे | १० क्षेपार्थमिष्टं द्वयं प्रकल्प्येप्सितवर्ग- |
| ३ | ११ | ४० | विहृतः क्षेप इत्यादिना जाते मूले |

$\frac{३}{२}$, $\frac{११}{२}$, १०

एवमन्योदाहरणान्यपि सुगमानि ।

प्रकृत्यामृणात्मिकायां विलोमायां न किमपि चित्रम् ।

अधुना द्वादशक्षेपमूले १ | १ समासभावनया जाते चतुश्चत्वारिंशच्छतक्षेपमूले २ | १०
अतो रूपक्षेपमूले १/६ | ५/६ ज्येष्ठमूले धनर्णयोर्न विशेषः। धनस्य मूलं धनमृणं वा भवति।

परिकर्मसूक्तवदत्र धनर्णयोरविशेष उच्यते—

इष्टकृतिगुणकशेषोद्धृतमितीष्टं रूपं १, अस्य कृतिः १ प्रकृतेर्विशोधिता शेषं १२ अनेन द्विगुणमिष्टं हृतं जातं कनिष्ठं १/६ अतो ज्येष्ठं ५/६ अत्र कनिष्ठे ऋणत्वे न विशेषः।

तथा हि—रूपमिष्टं १, अस्मात्प्रकृति विशोध्य शेषं १२ अनेन द्विगुणमिष्टं २ हृतं जातं कनिष्ठ ३ वा ज्येष्ठं ३ एवमिष्टवशादानन्त्यम्। प्रक्षेपेषु बहुत्वाच्छुद्धेषु निजधिया पदे ज्ञेये। रूपक्षेपाय तयोर्भावनयाऽनन्तमूलानि ॥८६॥

यस्य न बुद्धिः स्वतेन गणितं कलशोऽपि [?] तस्य स्यात्।
तस्मान्निजधिया तु बुध्वा समूह्यमखिलं तु गणितमिदम् ॥८६॥

उदाहरणम्—

कस्त्रयोदशनिघ्नो वर्गः सप्तदशाधिकः।
वर्जितो वा पृथङ्मूलप्रदः स्याद्वद मे [द्रु]तम् ॥४४॥

न्यासः—प्रकृतिः १३ क्षे १७, अत्र रूपत्रयक्षेपमूले १।४ क्षे ३, अत्र बुद्धिः क्षेपगुणं क्षेपं प्रक्षिप्य प्र १३ क ५२, अत्रैकपञ्चाशत् क्षेपमूले १।८ क्षे ५१ अनयोः पूर्वमूलाभ्यां सह भावनार्थं न्यासः— | प्र १३ क १ ज्ये ८ क्षे ५१ | क १ ज्ये ४ क्षे ३ | समासभावनया त्रिपञ्चाशत् क्षेपमूले १२।४५ क्षे १५३, ईप्सितवर्गोविहृतः क्षेप इति सप्तदशसंख्यः क्षेपो यथा भवति तथा कल्पित इष्टत्रयरूपत्रयं वर्गः ९, अनेन हृतः क्षेपः १७, पदं तदिष्टाप्तमिति त्रिहृतमूले सप्तदशक्षेपे क ४ ज्ये १५ क्षे १७, अन्तरभावनया प्राग्वज्जाते सप्तदशक्षेपमूले क ४/३ ज्ये १९/३ क्षे १७

द्वितीयोदाहरणे न्यासः—प्र १३ क्षे १७ प्राग्वज्जाते सप्तदश क्षेपमूले ४५।५३० अन्तरभावनया जाते ३।१०

अत्र मूलराशेरासन्नमूलानयने सूत्रम्—

[1]मूलं ग्राह्यं यस्य च रूपक्षेपजे पदे तत्र ।
ज्येष्ठं ह्रस्वपदेनोद्धरेन्मूलमासन्नम् ॥८७॥

उदाहरणम्—

दशानामपि रूपाणां पञ्चमांशस्य वा वद ।
आसन्नमूलं जानासि यदीमां प्रकृतिक्रियाम् ॥ ४५ ॥

न्यासः—अत्र रूपक्षेपमूले ६।१९ वा २२८।७२१ वा ८६५८।२७३७९ अल्पेनाल्पमुद्धरेदिति दशानामासन्नमूलम् $\frac{१९}{६}$ वा $\frac{७२१}{२२८}$ वा $\frac{२७३७९}{८६५८}$

द्वितीयस्य न्यासः—$\frac{१}{५}$ अत्रेष्टेनानेन $\frac{१}{२}$ प्राग्वद्रूपक्षेपमूले ९।२० वा १६०।३६१ वा ६४६०।२८८९, अत आसन्नपञ्चमांशस्य मूलं $\frac{९}{२०}$ वा $\frac{१६०}{३६१}$ वा $\frac{२८८९}{६४६०}$

इति सकलकलानिधिनरसिंहनन्दनगणितविद्याचतुराननारायणपण्डित-विरचिते बीजगणितावतंसे वर्गप्रकृतिः समाप्ता ॥

---

१. अत्र प्रकृतिरूपस्यावर्गाङ्कस्य रूपक्षेपीयकनिष्ठज्येष्ठाभ्यासाभ्यामासन्नपदानयनस्य दर्शनेन ग्रन्थकृत्पाटवं स्फुटं भवति । तद्यथा—रूपक्षेपे कनिष्ठज्येष्ठपदयोर्ज्ञाने प्रकृतेश्चाज्ञाने सत्यव्यक्तप्रकृतिनिस्सारणार्थं कनिष्ठमूलेन ज्येष्ठमूले भाजितेऽथवाल्पेनानल्पे भाजिते आसन्नं प्रकृतिमूलं लभ्यते । समीकरणरीत्या सुस्पष्टेयं रीतिः ।

$\text{प्र} \times \text{क}^2 \pm \text{क्षे} = \text{ज्ये}^2$ ( सिद्धं पूर्वम् )

$\therefore \text{प्र} \times \text{क}^2 \pm १ = \text{ज्ये}^2$ यदि क्षे० = १

$= \text{प्र} \times \text{क}^2 = \text{ज्ये}^2 \mp १$

$$\text{प्र} = \frac{\text{ज्ये}^2}{\text{क}^2} \pm \frac{१}{\text{क}^2}$$

अत्र $\frac{१}{\text{क}^2}$ अयं स्वल्पान्तरत्वात् त्याज्यः ।

$$\therefore \text{प्र} = \frac{\text{ज्ये}^2}{\text{क}^2}$$

$$\therefore \sqrt{\text{प्र}} = \frac{\text{ज्ये}}{\text{क}}$$

उपपन्नमनेन मूलं ग्राह्यं यस्य च रूपक्षेपजे पदे तत्रेत्यादि ।

| उदाहरणम् | क | ज्ये | क्षे |
|---|---|---|---|
| | ६ | १९ | १ |

अत्र प्रकृतिज्ञानार्थमल्पेन ६ अनेन, अनल्पे १९ भाजिते सति $\frac{१९}{६}$ = प्रकृतिमूलम् ।

मूलमिदं दशानामासन्नमूलतुल्यम् । एवमन्यत्रापि भवितुमर्हति ।

अनयैव रीत्या द्वितीयोदाहरणमपि सुगमम् ।

इति वर्गप्रकृतिः ॥

## [ अथ त्रिप्रश्नाधिकारः ]

### [ तत्रादौ निरक्षोदयादीन्याह ]—

लङ्कोदयाः सिन्धुरभानि[२७८] नन्दनन्दाश्विनो[२९९] रामयमाग्नयः[३२३] स्युः ॥

पलात्मकास्ते चरखण्डकैः स्वैः क्रमोत्क्रमस्थैः क्रमगोत्क्रमस्थाः ।

[१]विहीनयुक्ता उदयाः स्वदेशे क्रियादिगणणां तुलतो विलोमाः ॥१॥

मे २७८ मी । वृ २९९ कुं । मि ३२३ म । क ३२३ ध । सिं २९९ वृ ।

कं २७८ तु ।

[२]अयनांशयुक्तार्कभोग्यभागैर्गुणयेत्तत्तु निजोदयप्रमाणम् ।

खगुणैर्हृतमर्कभोग्यमिष्ट[३०] [१० ख] विघटीभ्यस्तु विशोधयेत्तदग्रे ॥२॥

संशोधयेद्राश्युदयांश्च शिष्टमशुद्धहृत् खाग्निहतं[३०] लवाद्यम् ।

मेषादु गृहैर्युक्तमशुद्धपूर्वैर्लग्नं तदूनायनभागकं स्यात् ॥३॥

रात्रौ सषड्भात्तरणेः[६] प्रसाध्यं सूर्यस्य भोग्यं वहु चेष्टकालात् ।

तदा रविः खाग्निगुणेष्टकालात्स्वीयोदयाप्तांशयुतो[३०] विलग्नम् ॥४॥

अङ्गोदितांशैरुदयप्रमाणं निघ्नं विधेयं खगुणैर्हृतं[३०] तत् ।

अङ्गस्य भुक्तं रविभोग्ययुक्तं मध्योदयाढ्यं भवतीष्टकालः ॥५॥

---

१. अत्र श्लोकक्रमोऽव्यवस्थितः । अग्रेऽपि तथैवास्ति ।

२. विषमवृत्तमेतत् । इतोऽग्रे तु वृत्ताभावः । अत एतच्छन्दोबद्ध यथा—

तात्कालिकोऽर्कोऽयनभागयुक्तस्तद्भोग्यभागैस्त्वुदयो हतः स्वः ॥२॥

खाग्न्युद्धृतस्तं रविभोग्यकालं विशोधयेदिष्टघटीगणेभ्यः ।

तदग्रतो राश्युदयाश्च शोधयेदशुद्धहृत्खाग्निगुणं लवाद्यम् ॥३॥ इति । अग्रे तु शुद्धमेव ।

[1]लग्नार्कावेकभे स्यातां यदा तल्लवजान्तरात् ।

भोग्यघ्नात्खरामाप्तमिष्टकालो बुधैः स्मृतः ॥६॥

[ इदानीं पलभादिसाधनमाह ]—

अक्षप्रभा(५)त्तांशकृतियुताऽर्कैः(१२) स्यादक्षकर्णोऽथ[2] खनन्द(९०)निघ्नी ।

अक्षप्रभा तेऽक्षलवा[3] भवेयुर्याम्याश्च तज्ज्यादलवर्ज्यका स्यात् ॥७॥

पलांशाः ससप्ता(७)क्षकर्णेन भक्ताः[4] खनन्द(९०)च्युता लम्बभागा भवेयुः ।

ततांशाः पलक्रान्तिसंस्कार उक्तास्तदूनाः खनन्दा(९०) दिनार्द्धोन्नतांशाः ॥८॥

[ इदानीं क्रान्तिसाधनमाह ]—

रामाब्धिनेत्राणि(२४३) नवाद्रिवेदा(४७९) रामाभ्रशैला(७०३) गजपूर्णनन्दाः(९०८) ।

अष्टाष्टकाष्ठा(१०८८) ऋषिरामसूर्याः(१२३७) सताब्धिविश्वे(१३४७) रससोमशक्राः(१४१६) ॥९॥

---

१. एतेषा श्लोकाना वासना सिद्धान्तोक्तप्रकारेण स्पष्टा ।

२. अक्षकर्णसाधनं ग्रहलाघवोक्तमतिस्पष्टम् ।

३. आचार्योक्ताक्षांशसाधनमरमणीय तद्विभावनीय बुधैः । करणकुतूहलेऽक्षांशसाधनं यथा—

दशाब्ध्यन्विताऽक्षप्रभाषष्टिभागोऽक्षकर्णान्वितस्तेन भक्ताक्षभा सा ।
खनन्दाहता दक्षिणाः स्युः पलाशाः पलाः संस्कृताः क्रान्तिभागैर्नताशाः ॥

तदनुसारि पलाशस्वरूपम् $= \dfrac{६० \text{ पभा}}{\text{पक} + \dfrac{४१० + \text{पभा}}{६०}}$ । अत्र रूपे हरत्यागेनाचार्योक्तमुपपद्यते ।

४. अत्राचार्यस्य भ्रम इवाभाति ।

[1]पूर्णाब्धिवेदशशिन[१४४०]स्त्वयनांशयुक्तखेटस्य दोर्लवदिगंश[१०]मितो गताङ्कः ।
यातैष्यक्रान्तरकशेषहतेर्दिगंश[१०]युक्तः कलादिरपमः खगगोलदिक् स्यात् ॥१०॥

[ इदानीं द्युज्यादिसाधनमाह ]—

क्रान्त्युत्क्रमज्या वियुता त्रिभज्या[१२०] द्युज्याऽथ कुज्यार्क[१२०]हृताऽयमज्या ।
पलप्रभा संगुणिताऽथ कुज्या [११क] [द्युज्या]हृता खार्क[१२०]हृता चरज्या ॥११॥

चरज्यकायाश्च धनुश्चरं स्याद् घटा[७]ऽज[१]षड्भे किल याम्यसौम्यौ ।
गोलौ भवेतां मृगकर्कषड्भे ग्रहेऽयने सौम्यकदक्षिणे स्तः ॥१२॥

[2]चरेण युक्ता वियुताश्च नाड्यः पञ्चेन्दुरलपा दिनरात्रिखण्डे ।
[3]आद्येऽन्यगोले विपरीतमेते स्यातां द्विनिघ्ने दिनरात्रिमाने ॥१३॥

[4]द्विभू[१२]चरज्याभिहतिस्त्रिभज्या[१२०]हृतातवर्गः पलभाख्यकृत्या ।
युक्तोऽस्य मूलेन हृता चरज्या द्विभू[१२]गुणा क्रान्तिगुणस्तनोऽर्कः ॥१४॥

द्युज्यकाकृतिविवर्जिताः खखाब्ध्यब्धिशीतकिरणा[१४४००]श्च तत्पदम् ।
स्यादपक्रमगुणस्तनो रविस्त्वेवमेव कमलाकरो जगौ ॥१५॥

---

१. करणकुतूहलवद्वासना बोध्या ।

२. "चरेण युक्ता वियुता भवेतां पञ्चेन्दुनाड्यो दिनरात्रिखण्डे ॥" इति पाठान्तरम् ।

३. एतेषां सिद्धान्तोक्तरीत्या वासना स्पष्टा ।

४. सिद्धान्तोक्तक्रमोऽयम् ।

[१]नीलकण्ठ[११]गुणिता चरज्यका भाजिता पलभयाऽपमज्यका ।
स्यात्सुखार्थमिति वाऽपमज्यका कार्मुकं हि यदि वाऽपमो भवेत् ॥१६॥

गोलयोर्युतवियुक्द्यु[सि?शि]ञ्जिनीकुज्यया हृतिरथो त्रिभज्यका ।
युग्वियुक्चरगुणेन सान्त्यका दृग्ज्यका नतलवज्यका भवेत् ॥१७॥

त्रिज्यया[१२०] परिहृता चरज्यया द्युज्यया तु विहृता हि कुज्यया ।
वा हृतिर्भवति सान्त्यकेति वा दैवविद्वरदिवाकरो जगौ ॥१८॥

दिवादलाभीष्टघटीवियोगो नतं दिनार्द्धोनितमुन्नतं स्यात् ।
कर्णार्क[१२, ८]वर्गान्तरजं पदं भा भासूर्य[१२]वर्गैक्यपदं श्रतिः स्यात् ॥१९॥

[ इदानीमिष्टशङ्क्वानयनमाह ]—

[२]नतोत्क्रमज्ययोनिता द्युमध्यजीवयान्त्यका ।
हतान्त्यया हृता हि तद्धनुर्लवास्तु यन्त्रजाः ॥२०॥

---

१. $\text{क्रा ज्या} = \dfrac{\text{१२} \times \text{कुज्या}}{\text{पभा}} = \dfrac{\text{१२} \times \text{चरज्या} \times \text{द्यु}}{\text{पभा} \times \text{त्रि}} = \dfrac{\text{चरज्या}}{\text{पभा}} \times \dfrac{\text{१२} \times \text{द्यु}}{\text{त्रि}}$

$= \dfrac{\text{चरज्या} \times \text{११}}{\text{पभा}}$ स्वल्पान्तरतः । अत उपपन्नम् ।

२. अत्र द्युमध्यजीवा मध्यशङ्कुः । यन्त्रजा लवा इष्टोन्नतांशाः । अत्रोपपत्तिः—इष्टशङ्कुः

$\dfrac{\text{मशं} \times \text{इहृति}}{\text{हृति}} = \dfrac{\text{मशं} \times \dfrac{\text{द्यु} \times \text{इअन्त्या}}{\text{त्रि}}}{\dfrac{\text{द्यु} \times \text{अन्त्या}}{\text{त्रि}}} = \dfrac{\text{मशं} \times \text{इअन्त्या}}{\text{अन्त्या}}$ । अन्त्या − नउज्या = इअन्त्या । अत उपपन्नं यथोक्तम् ।

[ इष्टशंकुतो नतघटिकामाह ]—

[१]यन्त्रांशजीवा गुणितान्त्यका सा द्यु मध्यजीवाविहृताऽप्तहीना[त्]।
अन्त्यात् तदीयोत्क्रमचापमङ्गै[६]र्भक्तं नतं त[११ ख]त् घटिकादिकं स्यात् ॥२१॥

[ इदानीमिष्टच्छायाकर्णमाह ]—

[२]अन्त्या विनिघ्नी द्यु दलोन्नतांशजीवाहृतैः पूर्णयुगाब्धिभूमिः[१४४०]।
नतोत्क्रमज्यारहितान्त्यया सा विभाजनीया भवतीष्टकर्णः ॥२२॥

[ इदानीं नतघटिकामाह ]—

[३]खाब्ध्यब्धिभूमि[१४४०]र्द्यु दलोन्नतांशगुणेन भक्तैर्गुणितान्त्यका तु।
कर्णेन भक्ता फलहीनितान्त्या विलोमचापं रसहृन्नतं स्यात् ॥२३॥

[ प्रकारान्तरेणेष्टच्छायाकर्णमाह ]—

[४]पूर्णाब्धिपाथोनिधिरात्रिनाथा[१४४०] यन्त्रांशजीवा विहृता श्रुतिः स्यात्।
कर्णेन भक्ताः खयुगाब्धिसोमा[१४४०] लब्धस्य चापं किल यन्त्रभागाः ॥२४॥

---

१. पूर्वोक्तवैपरीत्येनास्य वासना सुगमा।

२. अत्रोपपत्तिः। इष्टच्छायाकर्णः $= \frac{\text{त्रि} \times १२}{\text{शं}}$। शङ्कुः $= \frac{\text{मशं} \times \text{इहृति}}{\text{हृति}} = \frac{\text{मशं} \times \text{इअन्त्या}}{\text{अन्त्या}}$। पूर्वरूप उत्थापनेन इष्टच्छायाकर्णः $= \frac{\text{त्रि} \times १२ \times \text{अन्त्या}}{\text{मशं} \times \text{इअन्त्या}} = \frac{१२० \times १२ \times \text{अन्त्या}}{\text{मश} \times \text{इअन्त्या}} = \frac{१४४०}{\text{मशं}} \times \frac{\text{अन्त्या}}{\text{इअन्त्या}}$। अतो यथोक्तमुपपन्नम्।

३. पूर्वोक्तवैपरीत्येनास्य वासना स्पष्टा।

४. अत्रोपपत्तिः। इष्टच्छायाकर्णः $= \frac{\text{त्रि} \times १२}{\text{शं}} = \frac{१२० \times १२}{\text{शं}} = \frac{१४४०}{\text{शं}}$ उपपन्नं सर्वम्। उत्तरार्धस्योपपत्तिः पूर्वार्धवैपरीत्येन।

[ इदानीमिष्टच्छायानयनमाह ]—

[1]तदूनखाङ्क[सि?शि]ञ्जिनी यमेन्दुताडिता हृता ।
सुयन्त्रभागजीवया फलप्रमाणिका प्रभा ॥२५॥

[ इदानीं दिनगतैष्यकालमाह ]—

त्रिज्योन्नतांशज्यकया हता द्युदलोन्नतांशज्यकया विभक्ता ।
[2]तत्कार्मुकं घस्रदलघ्नमभ्रनन्दैर्हृतं स्याद् द्युगतैष्यकालः ॥२६॥

[ इदानीं दिक्साधनार्थं भुजमाह ]—

[3]स्पष्ट[ा] क्रान्तिर्ज्येष्टकर्णेन निघ्नी लम्बांशज्याहृद् भुजः क्रान्तिदिक् स्यात् ।
याम्याग्राभासंस्कृतः स्पष्ट एषः कोटिर्दोर्भावर्गविश्लेषमूलम् ॥२७॥

[ इदानीं दिक्साधनमाह ]—

अम्भः समायामवनौ हि वृत्तमभीष्टमानं प्रविधाय तत्र ।
शङ्कुर्निवेश्यः सरलश्च तस्य यत्र प्रभाग्रं प्रविशत्यपैति ॥२८॥
तच्चिह्नतो बाहुमिता शलाका देया तथा कोटिसमानमूलात् ।
क्ष्मायां शलाकाग्रकयोर्यथा स्याद्योगस्ततः प्रागपरात्र कोटिः ॥२९॥
भुजो भवेद्दक्षिणसौम्यदिक्स्थस्तन्मत्स्यतो वै विदिशोऽवगम्याः ॥३०॥

---

१. वासनाऽस्य सुगमा ।

२. अत्राचार्यो द्युगतैष्यघटिकासाधनं प्रतिपादयति । पूर्वार्धेन शङ्कुतः सममण्डलीयोन्नतांशज्यामानीयोत्तरार्धेन सममण्डलीयोन्नतचापतोऽनुपातेन द्युगतैष्यघटीज्ञानं सुगमम् ।

३. त्रिप्रश्नोक्त्याऽत्रोपपत्तिः स्पष्टा । शालिनीवृत्तमत्र श्लोके वर्तते ।

बिन्दुः समायामवनौ विधाय ज्ञात्वा दिशः पश्चिमगे नभोगे ।
[१२ क] पूर्वामुखी पूर्वकपालसंस्थे प्रत्यङ्मुखी कोटिरतः प्रदेया ॥३१॥
दक्षिणोत्तरभुजं तदग्रतो बिन्दुतो[र्यय?र्नय] हि भां [रि?] च सूत्रकम् ।
बिन्दुसंस्थितनराग्रसंगतं भाभुजाग्रयुतितः प्रसारय ॥३२॥
वंशयुग्मविहितस्थितिं नलं संनिवेशय च तत्पथेन तु ।
खे विलोकय खगञ्च खेचरं वारिणि ग्रहविलोकनं ब्रुवे ॥३३॥
[1]सन्निवेश्य भुजभाग्रसंयुतौ शङ्कुमत्र नलकं च सूत्रके ।
बिन्दुसंस्थितनराग्रसंगते पश्य केऽस्य सु[खि?षि] रेण खेचरम् ॥३४॥
श्रीमन्नृसिंहात्मजरङ्गनाथविनिर्मिते खेचरसाधनेऽस्मिन् ।
सिद्धान्तचूडामणिनामधेये दिग्देशकालावगमाधिकारः ॥३५॥
इति श्रीमद्दैवज्ञनृसिंहसुतपण्डितरङ्गनाथविरचिते सिद्धान्तचूडामणौ
त्रिप्रश्नाधिकारस्तृतीयः ॥३॥

---

१. अत्र वासना ग्रहलाघववद् बोध्या । परमत्र नलिकाद्वाराऽऽकाशे ग्रहदर्शनं ग्रहलाघवापेक्षयाऽतीव रमणीयं युक्तियुक्तं च ।

## [ अथ चन्द्रग्रहणाधिकारः ]

### [ इदानीं तात्कालिकीकरणादीन्याह ]—

गतागताभिर्घटिकाभिरत्र संताडनीया गतयः खगानाम् ।
षष्ट्या हृता लब्धवियुक्तयुक्तास्तात्कालिकास्ते खचरा भवन्ति ॥१॥

एवं गृहाद्यावयवेन तुल्यौ दर्शस्य पूर्तौ कुरु पुष्यवन्तौ ।
रविग्रहार्थं च विधोर्ग्रहार्थं षड्भान्तरौ तावथ पूर्णिमान्ते ॥२॥

५ ७ ९ ११
[1]सपातचन्द्रस्य भुजांशकाश्चेत्पञ्चाद्रिनन्देशमिताः क्रमेण ।
१३
सम्पूर्णपादोनदलाङ्घ्रितुल्यग्रहो ग्रहो नास्ति गुणेन्दुभागाः ॥३॥

### [ इदानीं शरानयनमाह ]—

९ ४
[2]सपाततात्कालिकसो[१२ ख] मदोर्ज्या खपान्थनिघ्नीविहृता समुद्रैः ।
भवेत्पृषत्कः कलिकादिकोऽसौ सपातशीतद्युतिगोलदिक्कः ॥४॥

### [ प्रकान्तरेण शरमाह ]—

४७ ९२ १३५ १७४ २०७ २३४
[3]शैलाब्धयोऽद्रिनवबाणगुणेन्दवोऽब्धिसप्तेन्दवो नगनखा युगरामदस्राः ।
२५४ २६६ २७०
पाथोधिसायकयमा रसतर्कदस्राः खाद्र्यश्विनः खलुशरोऽपमवत्कलादिः ॥५॥

---

१. एतावन्तो भुजाशा मध्यममानेन भवितुमर्हन्ति ।

२. अनुपातेन $\text{इष्टशरज्या} = \frac{\text{परशरज्या} \times \text{इष्टसपादोर्ज्या}}{\text{त्रिज्या}} = \frac{२७० \times \text{इसपातदोर्ज्या}}{१२०}$

$= \frac{९ \times \text{इसदोर्ज्या}}{४}$ इत्युपपन्नम् ।

३. यथा ग्रहलाघवे त्रिप्रश्नाधिकारस्यैकादशे श्लोके क्रान्तिसाधनाय दशगुणिताः क्रान्त्यङ्काः पठितास्तथैवात्र शरसाधनाय दशदशसपातभुजभागवृद्ध्या शराङ्काः पठिताः । एते च कलात्मकाः सन्ति, क्रान्त्यङ्कवद्दशगुणिता न सन्ति । तत्र क्रान्त्यङ्का दशगुणिताः क्रियालाघवायाशात्मकाः सन्ति । अत्रोपपत्तिस्तद्वदेव बोध्या ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | शरः |
|---|---|---|---|---|---|---|---|---|---|
| ४७ | ९२ | १३५ | १७४ | २०७ | २३४ | २५४ | २६६ | २७० | खण्डानि |

[ इदानीं सूर्यबिम्बादीन्याह ]—

तिग्मरश्मिजवतर्क[६]संयुतिः खण्डिता दिनकरस्य बिम्बकम् ।
[1]शीतरश्मिजवखेन्दु[१०]संयुतिः पञ्चनेत्र[२५]विहृता तु बिम्बकम् ॥
पञ्चराम[३५]सहिता विधोर्गतिर्भाजिता खशशिभिः[१०] कुभा भवेत् ॥६॥

---

१. सिद्धान्तशिरोमणौ प्रकारान्तरेण सूर्यादीना कलात्मकबिम्बानयनाय श्लोकौ—

भानोर्गतिः स्वदश[१०]भागयुताऽर्धिता वा बिम्बं विधोस्त्रि[३]गुणिता युगशैल[७४]भक्ता ।
तिथ्यद्रि[७१५]हीनशशिभुक्तिरिषुद्वि[२५]भक्ता नन्दाक्षि[२९]युग्भवति वा विधुबिम्बमेवम् ॥८॥
भानोर्गतिः शर[५]हता रविभि[१२]र्विभक्ता चन्द्रस्य लोचन[२]गुणा तिथि[१५]भाजिता च ।
लब्धान्तरं भवति वाऽवनिभाप्रमाणं भूभा विधुं विधुरिनं ग्रहणे पिधत्ते ॥९॥

अनयोक्त्या कलात्मकरविबिम्बम् $= \dfrac{\text{रगक} + \dfrac{\text{रगक}}{\text{१०}}}{\text{२}} = \dfrac{\text{रगक} + \dfrac{\text{६०}}{\text{१०}}}{\text{२}} = \dfrac{\text{रगक} + \text{६}}{\text{२}}$ । स्वल्पान्तरतः ।

कलात्मकचन्द्रबिम्बम् $= \dfrac{\text{चंगक} \times \text{३}}{\text{७४}} = \dfrac{\text{चगक} \times \text{३} \times \text{२५}}{\text{७४} \times \text{२५}} = \dfrac{\dfrac{\text{चंगक} \times \text{७५}}{\text{७४}}}{\text{२५}} =$

$\dfrac{\text{चंबिक}\left(\text{१} + \dfrac{\text{१}}{\text{७४}}\right)}{\text{२५}} = \dfrac{\text{चंगक} + \dfrac{\text{चंगक}}{\text{७४}}}{\text{२५}} = \dfrac{\text{चंगक} + \dfrac{\text{७६०।३५}}{\text{७४}}}{\text{२५}} = \dfrac{\text{चंगक} + \text{१०}}{\text{२५}}$ । स्वल्पान्तरतः ।

भूभाबिम्बकलाः $= \dfrac{\text{२ चंगक}}{\text{१५}} - \dfrac{\text{५} \times \text{रगक}}{\text{१२}} = \dfrac{\text{२४ चंगक} - \text{७५} \times \text{रगक}}{\text{१८०}} =$

भूभा पिधत्ते ग्रहणे शशाङ्कं दिवाकरं चन्द्र इति गृणन्ति ।
संछाद्यसंछादकबिम्बयोगदलं शरोनं पिहितं भवेत् [ तत् ] ॥७॥

छन्नं यदा स्यादधिकं तु बिम्बा[ त् ] छाद्यस्य सर्वग्रहणं तदा स्यात् ।
छाद्योनितं तत्स्थगितं कृतं सच्छेषं तु खग्रास इति ब्रुवन्ति ॥८॥

विशोपकाः स्युः स्थगितं नखघ्नं[२०] छाद्यस्य बिम्बेन हृतं कृतं सत् ।
ते हीनिताः पूर्णकरैस्तु[२०] शेषाः खच्छन्नजाः स्युर्गुरवो गृणन्ति ॥९॥

[ इदानीं स्थित्यर्धादीन्याह ]—

बाणस्य वर्गेण विहीनिताभ्यां बिम्बार्धयुत्यन्तरयोः कृतिभ्याम् ।
पदे खषड्घ्ने[६०] गतिजान्तरेण[१३ क] हृते भवेतां स्थितिमर्दखण्डे ॥१०॥

---

$$\frac{\text{८ चंगक} - \text{२५ रगक}}{\text{६०}} = \frac{\text{८} \times \text{चंगक} - \text{२५ (५६।८)}}{\text{६०}} = \frac{\text{८} \times \text{चंगक} - (\text{१४७८।२०})}{\text{६०}} =$$

$$\frac{\text{८} \times \text{चंगक} - \{(\text{१४७८।२०}) + (\text{१०२।५०}) - (\text{१०२।५०})\}}{\text{६०}} =$$

$$\frac{\text{८} \times \text{चंगक} - \{\text{१५८१।१०} - \text{१०२।५०}\}}{\text{६०}} = \frac{\text{८} \times \text{चंगक} - (\text{२चंगक} - \text{१०२।५०})}{\text{६०}} =$$

$$\frac{\text{८ चंगक} - \text{२ चंगक} + \text{१०२।५०}}{\text{६०}} = \frac{\text{६} \times \text{चगक} + \text{१०२।५०}}{\text{६०}} = \frac{\text{चंगक} + \text{१७।८}}{\text{१०}} =$$

$\frac{\text{चंगक} + \text{३५}}{\text{१०}}$ इति स्वल्पान्तरतो गृहीते आचार्योक्तमुपपद्यते । एवं कृते कलाद्वयासन्नस्यान्तरं समापतति । मन्मते तु—"पञ्चरामसहिता" इत्यत्र "सतचन्द्रसहिता" इति पाठान्तरं साधु ।
इति सूर्यादीना बिम्बानयनमुपपन्नम् ।

[1]मार्गणो युगयुगेन्दुभिर्हृतो (१४४) लब्धहीनसहिते च ते दले।
पातयुक्शशिनि मौक्तिके तथा स्पार्शिके समपदेऽसमेऽन्यथा ॥११॥

---

१. अत्र त्वसकृत्प्रकारेण स्थितिखण्डे साध्ये। ते यथा—स्थितिखण्डेन गतिर्गुण्या षष्ट्या भाज्या फलं स्पर्शार्थं ग्रहेषु हीनं मोक्षार्थं युक्तम्, तेभ्यः पुनः शरादिक विधाय पृथक् स्थितिखण्डे साध्ये। ततः पुनस्ताभ्या स्थितिखण्डाभ्या चन्द्रराहू चालयित्वा स्थिती कार्ये। एवमसकृत्कृते समे भवतः। इद जडकर्म दृष्ट्वा आचार्येणान्यथा यतितम्। शरकला युगयुगेन्दुभिः (१४४) हृता, यल्लब्धं तत् सपातचन्द्रे समपदे सति मौक्तिके स्थित्यर्धे हीनं कार्यं स्पार्शिके स्थित्यर्धे च सहितं कार्यम्। एवं कृते वास्तवासन्ने स्थिति-दले भवतः। एवं च विषमपदेऽस्य विपरीतं कार्यम्। अस्योपपत्तिर्यथा—तत्रैकघटिकाया मध्यमा शरगतिः $= \frac{७६३ \times २ \times २७०}{६० \times १२० + ६०} = १'$। अत्र परशरज्या $= \frac{२ \times २७०}{६०}$ लघुज्या प्रकारेण।

मध्यमगत्यन्तरं चैकघटिभव रवीन्द्वोः $= \frac{७३१}{६०} = १२'$

अथ कल्प्यते स्थित्यर्धघटीप्रमाणम् = या। तदा समपदे सपातचन्द्रे स्पार्शिकशरः = मश + या। ततः "बाणस्य वर्गेण विहीनिताभ्याम्" [सि० चू० ४।१०] इत्यादिना स्थित्यर्धकलावर्गः $=$ मायोद$^२$ $-$ ( मश + या )$^२$ $=$ मायोद$^२$ $-$ ( मश$^२$ + २ या मश + या$^२$ )। ततो गत्यन्तरवर्गेण भक्तं लब्धं स्थित्यर्धघटीवर्गमानम् $=$

$$\frac{\text{मायोद}^२ - (\text{मश}^२ + २\ \text{या मश} + \text{या}^२)}{१४४} = \frac{\text{मयोद}^२ - \text{मश}^२ - २\ \text{या मश} - \text{या}^२}{१४४}$$

$=$ स्थिदघटी$^२$ $=$ या$^२$।

१४४ या$^२$ + या$^२$ + २ या $\times$ मश $=$ मयोद$^२$ $-$ मश$^२$ $=$ स्थिदकला$^२$।

१४५ या$^२$ + २ या $\times$ मश $=$ स्थिदक$^२$।

$$\text{या}^२ + \frac{२\ \text{या} \times \text{मश}}{१४५} = \frac{\text{स्थिदक}^२}{१४५}$$ उभयोर्मूलाभ्या $\text{या} + \frac{\text{मश}}{१४५} = \frac{\text{स्थिदक}}{१२}$ स्वल्पान्तरात्।

अतो या $= \frac{\text{स्थिदक}}{१२} - \frac{\text{मश}}{१४५} = \text{स्थिदघ} - \frac{\text{मश}}{१४४}$ स्वल्पान्तरतः।

एवं मौक्तिकेऽपीयं क्रिया धनर्णव्यत्यासेन, विमर्दार्धेऽपि तथैव साध्ये। विषमपदे सपातचन्द्रे विपरीता क्रिया भवति शरस्योपचयात्। शेष स्पष्टम्।

अत्र स्थित्यर्धादौ लब्धफलसंस्कारे आचार्योक्तं व्यभिचरतीति तद्विज्ञा विभावयन्तु। मन्ये लेखकदोषात् "स्पार्शिके समपदेऽसमेऽन्यथा" इति पाठो जातः। अपेक्षितस्तु—"स्पार्शिकेऽसमपदे समेऽन्यथा" इति।

[1]तिथ्यन्तकालो ग्रहणस्य मध्यो हीनान्वितः स्वस्थितिखण्डकाभ्याम् ।

तौ स्पर्शमोक्षौ निजमर्दकाभ्यां संमीलनोन्मीलनके च वेद्ये ॥१२॥

[2]तिथ्यन्तकस्त्वायनदृष्टिकर्म सुसंस्कृताच्चन्द्रमसः प्रसाध्यः ।

ज्ञानाधिराजोदित एष पक्षो न क्षोदवीथीविषयं प्रयाति ॥१३॥

गुणगुणयुदलं[3] ससमुन्नतं दिनदलेन हृत हरसंज्ञकः ।

स्थगितबिम्बशरांश्च विभाजितान् कुरु हरेण हि तेऽङ्गुलपूर्वकाः ॥१४॥

रवीन्दुभुक्त्यन्तरभागवीष्टस्थित्यर्धघातो भुज इष्टकाले ।

तत्कालबाणो गदितोऽत्र कोटिर्दोःकोटिवर्गैक्यपदं श्रुतिः स्यात् ॥१५॥

---

१. अत्र "मध्यग्रहः पर्वविरामकाले" इत्यादिभास्करोक्तिवद् वासना स्पष्टा ।

२. अत्र ज्ञानराजदैवज्ञः —

पर्वान्तः किल साधितो भवलये सूर्येन्दु[बिम्बा?चिह्ना]न्तरात्
तस्मिन् बिम्बसमागमो नहि यतश्चन्द्रः शराग्रे स्थितः ।
तस्मादायनदृष्टिसंस्कृतविधोरानीततिथ्यन्तके
बिम्बैक्यं भवतीति किं न विहितं पूर्वैर्न विद्मो वयम् ॥३५॥
दोर्ज्या सत्रिभसायनाशकविधो[र्लि?र्या] [द्वी?द्वि]त्रिचन्द्राहता
दन्ताप्ताऽपम[सि?शि]ञ्जिनीह निहता बाणेन सत्रिज्यया ।
भक्ता लब्धकला विधौ धनमृणं भिन्नैकदिक्के शरे [र-]
क्रान्त्योरायनदृष्टिकर्मविहिताच्चन्द्रात्तिथिः पर्वणि ॥३६॥

[ सिद्धान्तसुन्दरे चन्द्रग्रहणाधिकारे ]

इत्येवं पूर्वाचार्यानाक्षिपति । आक्षेपोऽयं सर्वथाऽनुचित इति श्रीयुतम०म०बापूदेवशास्त्रिश्रीसुधाकरद्विवेदिप्रभृतिभिः प्रतिपादितपर्वान्तकालपर्यालोचनया स्पष्टमेव । अत एव श्रीमद्रङ्गनाथोक्तिरतिरमणीयाऽत्र ।

निमीलनोन्मीलनयोस्तथैव कर्णोनितं मण्डलयोगखण्डम् ।
स्यादिष्टकाले स्थगितं तदूनमानैक्यखण्डस्य कृतिः शरस्य ॥१६॥

[1]वर्गेण हीनाऽथ तदीयमूलं भुक्त्यन्तरांशैर्विहृतं फलोनम् ।
स्थित्यर्धकं स्वं स्फुट इष्टकालो वक्ष्येऽथवाऽग्रे परिलेखतोऽमुम् ॥१७॥

स्पर्शे मोक्षे यन्नतं खाङ्कनिघ्नं भक्तं घस्रार्धेन [2]तज्ज्ञा विनिघ्नाः ।
अक्षांशास्ते त्रिज्यया (१२०) संविभक्ताः सौम्यं याम्यं वै नते प्राक् परे तत् ॥१८॥

पलोद्भवं स्याद्वलनं खगस्य युतायनांशस्य तु कोटिमौर्वी ।
[3]शरैर्हृता (५) भागमुखं तथाऽन्यद् भवेन्मृगाङ्कायनदिक्कमेतत् ॥१९॥

तयोर्विभिन्नैकदिशोर्विशेषयोगज्यका मान[१३ ख]दलैक्यनिघ्नी ।
त्रिज्योद्धृता तद्वलनं स्फुटं स्याच्चन्द्रग्रहे व्यस्तककुप् शरः स्यात् ॥२०॥

---

१. एतेषा श्लोकाना सूर्यसिद्धान्ताद्युक्तिवद्वासना बोध्या ।

२. अत्र "तज्ज्ञाः" "इत्यत्र" "तेऽशाः" इति पाठान्तरम् । गोलशाखामृगस्य श्रीमतः कमलाकरभट्टस्यानुजेन श्रीमता रङ्गनाथाचार्येण कथमेवमाक्षवलनं महास्थूलं साधितम् । द्वितीयानुपातः सर्वथाऽसङ्गतः । तत्र भाज्ये सर्वमंशात्मकं हरे च ज्यात्मिका त्रिज्या गृहीता । "प्रमाणमिच्छा च समानजातिः" इत्यादिनियमविरुद्धमत्र सर्वम् । यद्यंशात्मक एवानुपातोऽभीष्टस्तदा "त्रिज्यया" इत्यत्र "खाङ्कैः" इति पाठो ग्रहीतव्यः । अथवा सुखार्थमाचार्येणैवं विहितमिति मन्ये । यदि वा "तज्ज्ञा विनिघ्नाः" इत्यत्र "तज्ज्याविनिघ्नाः" इति पाठान्तरकल्पने पूर्वोक्तदोषपरिहारो भवति । अशुद्धमप्याक्षवलनमेतद् भास्करोक्तिवद्द्युज्याग्रीयमपेक्षितं तु त्रिज्याग्रीयमिति ।

३. आयनवलनार्थमप्यंशानुपातः । आयनवलनांशाः $= \frac{२४^{\circ} \times \text{खेकोज्या}}{१२०} = \frac{\text{खेटकोज्या}}{५}$ । इत्युपपन्नमाचार्योक्तम् । अन्यत् सर्वं स्पष्टम् ।

[ इदानीं परिलेखमाह ]—

विधाय वृत्तं किल मण्डलैक्यदलेन संछाद्यदलाङ्गुलेन ।
तत्रावगम्या ककुभस्तु सर्वा बाह्येऽथ वृत्ते वलनं ज्यकावत् ॥२१॥
प्राच्यां विधोः स्पार्शिकमत्र देयं मौद्यं तथा पश्चिमतः प्रदेयम् ।
सव्यापसव्येन च याम्यसौम्यं सूर्यग्रहे पश्चिमपूर्वतस्ते ॥२२॥
माध्यं भवेद् बाणदिशो हि चिह्नात्प्रसार्य केन्द्राद्वलनाग्रसक्तम् ।
सूत्रं ततः स्पर्शविमुक्तिबाणौ देयौ यथाऽऽशौ वलनाग्रकाभ्याम् ॥२३॥
ज्याभ्यां निजाभ्यामथ मध्यबाणः केन्द्रात् प्रदेयो वलनस्य सूत्रे ।
तेभ्यः पृथक् छादकखण्डकेन विलिख्य वृत्तं क्रमशोऽवगम्याः ॥
संस्पर्शमध्यग्रहमुक्तिकालग्रासास्तु सिद्धान्तविदग्रगण्यैः ॥२४॥
प्रसाध्य सूत्रे वलनस्य केन्द्राद्भुजं भुजाग्राद्विशिखं च केन्द्रात् ।
श्रुति कृते छादकखण्डकेन वृत्ते हि कोटिश्रुतियोगचिह्नात् ॥२५॥
वेद्यानि विद्भिः पिहितेष्टकालसंमीलनोन्मीलनकानि यद्वा ।
स्पर्शान्त्ययोर्ये तु शराग्रचिह्ने ताभ्यां पृथग् मध्यशराग्रयाते ॥२६॥
रेखे तु संस्पर्शविमुक्तिमार्गौ ज्ञेये तयोः संविगणय्य माने ।
केन्द्रेऽथ संछादकछाद्यबिम्बविशेषखण्डेन लिखेच्च वृत्तम् ॥२७॥
तन्मार्गयोगद्वितयेऽपि वृत्तं विधाय संछादकखण्डकेन ।
[१४ क]संमीलनोन्मीलनके च वेद्ये दिवाकराद्या इति संगिरन्ते ॥२८॥

मार्गाङ्गुलघ्नमिष्टं तु स्थित्यर्धेन विभाजितम् ।
स्युरिष्टाङ्गुलसंज्ञानि तानीष्टकवशात्कुरु ॥२९॥

खमार्गे ग्राहकार्धेन वृत्तं कृत्वेष्टखण्डकम् ।
यदि वा परिलेखोऽयं स्थूलो ज्ञेयः सुखाप्तये ॥३०॥

छन्नोनबिम्बैक्यदलेन केन्द्रे विधाय वृत्तं खलु मार्गखण्डे ।
बहिश्च ये स्वस्थितिखण्डचिह्ने मार्गाङ्गुलाते पृथगिष्टकालौ ॥३१॥

अथ प्रवक्ष्ये गणितज्ञवर्यदिवाकरोक्तां परिलेखभङ्गीम् ।
रम्यातिरम्यामतितारतम्यां सद्युक्तिगम्यां विबुधैकगम्याम् ॥३२॥

संछाद्यसंछादकबिम्बयोर्या पूर्वापरप्रान्तयुतिः स उक्तः ।
स्पर्शोऽथ मुक्तिः परपूर्वबिम्बप्रान्तैक्यमिन्दुग्रहणे तयोः स्यात् ॥३३॥

रविग्रहे लक्षणयुग्ममेतत् पूर्वापराभेदवशेन वेद्यम् ।
यस्मिश्च काले गणितागतः स्याद् ग्रासः पिधेयस्य स मध्यकालः ॥३४॥

सम्पूर्णबिम्बग्रसनं यदा स्यात्संमीलनं तद् गणकैर्निरुक्तम् ।
संछाद्य बिम्बस्य यदा तु मोक्षारम्भस्तदुन्मीलनकं निरुक्तम् ॥३५॥

[१]समग्रबिम्बादधिकस्य खस्य ग्रासस्तु खग्रास इति गृणन्ति ।
स्यात्स्पर्शकालात्समयेन येन मध्यग्रहः स्पार्शिकसंज्ञितं तत् ॥३६॥

---

१. अतः परम्—मृगाङ्कबिम्बादधिके तु बिम्बे सूर्यस्य चेन्मध्यमकालिकोऽसौ ।
शून्यं शरः स्याद् ग्रहणं तदानीं प्रकीर्तितं कङ्कणनामधेयम् ॥
अयं श्लोकः श्रीयुतपं०गङ्गाधरमिश्रविरचिते सिद्धान्ततत्त्वविवेकभाष्ये प्रसङ्गात् संगृहीतेषु सिद्धान्तचूडामणिश्लोकेषु [सू० ग्र० पृ० ५५] विशेषतो दृश्यते। वस्तुतोऽयं श्लोकः सिद्धान्तचूडामणेः सूर्यग्रहणाधिकारे [श्लो० ६] वर्तते। तथा च—"अथ प्रवक्ष्ये गणितज्ञवर्यदिवाकरोक्त्या" इत्यारभ्य "प्रकीर्तितं कङ्कणनामधेयम्" इत्यन्तं यावदेते श्लोका ग्रन्थकारपूर्वजदिवाकरदैवज्ञोक्ता एव वस्तुत इति श्रीगङ्गाधरमिश्रदैवज्ञस्य मतम्। परमेतन्मत नो रोचते, "अथ प्रवक्ष्ये गणितज्ञवर्यदिवाकरोक्त्या" इत्यादिश्लोकेन स्पष्टं प्रतीयते यत् श्रीरङ्गनाथाचार्येणैव एते श्लोका निबद्धाः। आशयो दिवाकरदैवज्ञस्य भवतु नाम, श्लोकास्तु न सन्ति। वस्तुत एते श्लोका ग्रन्थकारस्यातीव रमणीयाः। श्रीमद्दिवाकरदैवज्ञो ग्रन्थकारस्य गुरुर्ज्येष्ठभ्राता चासीत्।

स्थित्यर्धकं मध्यविमुक्तिकालान्तरे तु मोक्षस्थितिखण्डमुक्तम् ।

योगे तयोः स्पर्शविमुक्तिकालान्तरे स्थि[१४ ख]तिः स्यादखिला ग्रहस्य ॥३७॥

मध्यावधि स्पार्शिक[मध्य?मर्द]खण्डं संमीलनात् स्यादथ मध्यकालात् ।

उन्मीलनाख्यावधि मोक्षमर्दखण्डं निरुक्तं गणितप्रवीणैः ॥३८॥

[१]शकलद्वितयं सहितं विहितं सकलं घटिकादिकमर्दमिदम् ।

सकलग्रहणे भवतीति जगुः सकलाः सकलस्य रवेः कुहचित् ॥३९॥

श्रीमन्नृसिंहात्मजरङ्गनाथविनिर्मिते खेचरसाधनेऽस्मिन् ।

सिद्धान्तचूडामणिनामधेये शशाङ्कपर्वानयनाधिकारः ॥४०॥

इति रङ्गनाथकृते सिद्धान्तचूडामणौ

चन्द्रग्रहणाधिकारः

चतर्थः ।

---

१. स्पष्टार्थं वासनाऽपि सर्वा सरला सिद्धान्तोक्तिवत् । श्रीमद्दिवाकरोक्तपरिलेखेन परिलेखे केवलं स्थानादिपरिचयो दत्तः । तेन ग्रहणस्य वास्तविकस्वरूपावगमो दुःशकः ।

## [ अथ सूर्यग्रहणाधिकारः ]

### [ तत्रादौ लम्बनमाह ]—

३० ५
[1]रव्यूनदर्शान्तविलग्नबाणघातोऽत्र षट्यादि विनाडिकासु ।
२ १५ २०
द्विघ्नं द्युयातः शरभूषु हीनो नतं भवेत्तेन वियुक् खदस्त्रः ॥ १ ॥
२ २
द्विघ्नं नतं नेत्रहतात्त्रकर्णविभाजितं लम्बननाडिकाः स्युः ।
३०
आभिर्युतोना घटिकाः परे प्राग् दर्शान्तजाः स्पष्टतरा भवेयुः ॥ २ ॥

### [ प्रकारान्तरेण स्थूलखण्डैर्लम्बनसाधनम् ]—

७७ १४१ १८८
[2]धराधरधराधराः कुमनवोऽष्टनागेन्द[वः]
२१९ २३५ २४०
खगेन्दुयमलाः शरत्रियमलाः खवेदाश्विनः ।

---

१. एतल्लम्बनानयनं परम्परान्तो विभिन्नस्वरूपमाश्चर्यकमाधुनिकीं पाश्चात्यपद्धतिमनुगतमिवास्ते । परमेतस्य मूलं श्रीमुञ्जालाचार्यविरचिते लघुमानसे (शके ८५४) वर्तते । तद्यथा—

ग्रहोनं लग्नमत्रघ्न लम्बनद्युगत युतौ ।
[ लम्बनद्युगतात् पञ्चदशभिर्नतसाधनम् ।
दिनार्धेन नत मध्यं लम्बनस्फुटपर्वणः ॥ ]
लम्बन द्व्यत्रकर्णोनं नतोनाहतविशतेः ॥

[ ग्रहणाधिकारे, श्लो० ६ ]

२. एतदनुरूप एव करणकुतूहलप्रकारः—

सप्ताद्रयः कुमनवोऽष्टधृतिर्नवेन्दुदस्राः शरत्रियमलाः खजिनाश्च पिण्डाः ।
षट्त्र्यश्विनो जिनयमा द्विशती त्रिभोनलग्नार्कयोर्विवरभागमितेर्भवात्तम् ॥४॥
पिण्डो गतस्वगतयातवियोगनिघ्नशेषेशभागरहितः सहितश्च भोग्ये ।
ऊनाधिके खरसहृत्खलु लम्बनं वा प्राग्वत् स्फुटं सकृदतो नतिरन्यलग्नात् ॥५॥

[ सूर्यग्रहणाधिकारे, श्लो० ४-५ ]

पिण्डैर्लम्बनमागच्छेत्तत्प्राग्वत् स्फुट कार्यम् । अर्थादुन्नतज्यागुणं खार्कैर्भक्तं कर्तव्यम् । शेषं स्पष्टम् । अत्रोपपत्तिः—असकृत्कर्मोपसंहारार्थं स्थूला अपि तारतम्यात् पिण्डाः पठिता इति श्रीसुधाकरद्विवेदिनः ।

२३६ २२४ २००
रसाग्नियमलाश्च सिद्धयमलाश्च खाभ्राश्विन-

११
स्त्रिभोनितविलग्नसूर्यविवरांशशर्वांशकः ॥ ३ ॥

पिण्डो गतः सगतगम्यविशेष[ १५ क]निघ्न

११
शेषांशशङ्करलवेन वियुक्तयुक्तः ।

१ ६०
[1]कुनाधिके सति विभोग्यकपिण्डकेऽभ्र-

तर्कैर्हृतः खलु विलम्बननाडिका वा ॥ ४ ॥

[ अथ लम्बनखण्डकानि ]—

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | लम्बन- |
|---|---|---|---|---|---|---|---|---|---|
| ७७ | १४१ | १८८ | २१९ | २३५ | २४० | २३६ | २२४ | २०० | खण्डानि |

[2](उक्तं च सार्वभौमे—क्षारं ४।० शाकं ४।४० दुग्धं ४।२० शाल्मलं ५।० दधि ४।३० कुशः ५।० घृतं ५।० क्रौञ्चं ५।२० इक्षुः ६।० गोमेदं ६।० मद्य ८।० पुष्क-[ रं ] ६।३० स्वादु २२।३०

"योजनसंख्या भांशैर्गुणिता" इत्यादिद्वीपखण्डानां योजनसाधनम् ।)

१. अत्र 'ऊनाधिके' इति पाठान्तरमुपपत्तियुक्त्या साधु ।

२. कोष्ठान्तर्गतोः पाठो मूलहस्तलिखितपुस्तकस्य १४ ख पत्रस्यैकस्मिन् पार्श्वे लिखितोऽस्ति । प्रकृतप्रसङ्गास्यानुपयुक्तत्वादुपेक्ष्यते । अस्य प्रसङ्गो भुवनवर्णनावसर एवोपयुक्तः ।

[ अथ नतिसाधनम् ]—

[१]नतस्य बाणांश[५]युतोनितोऽर्को भवेत्परे प्राक् खलु माध्यमस्मात् ।
युतायनांशाच्चरमङ्ग[६]निघ्नं स्यान्माध्यदिक्का नतिरक्षभाहृत् ॥ ५ ॥

पलप्रभाहीनखबाण[५०]संख्या पलप्रभासंगुणिता नतिः स्यात् ।
याम्या सदा संयुतिरेकदिक्त्वे [ विभिन्नदिक्त्वे ] विवरं विधेयम् ॥ ६ ॥

नेत्रा[२]हतं मार्गण[२५]नेत्रभक्तं भवेत् स्फुटा साऽवनतिः कलाद्या ।
स्फुटोऽत्र बाणो नतिसंस्कृतोऽस्मात्स्थित्यादि चन्द्रग्रहवद्विदध्यात् ॥ ७ ॥

[ इदानीं स्पर्शमोक्षादिकालानाह ]—

स्थित्योनयुक्तो गणितोत्थदर्शस्तत्कालजाभ्यामथ लम्बनाभ्याम् ।
सुसंस्कृतः प्रगहमोक्षकालौ मध्यग्रहः स्यात् स्फुटदर्शकाले ॥ ८ ॥

मृगाङ्कबिम्बादधिके तु बिम्बे सूर्यस्य चेन्मध्यमकालिकोऽसौ ।
शून्यं शरः स्याद् ग्रहणं तदानीं प्रकीर्तितं कङ्कणनामधेयम् ॥ ९ ॥

---

१. नतिसाधनप्रकारोऽयं श्रीमन्मुञ्जालाचार्यकृतलघुमानसानुरूप एव ।

यथा—

तन्नताद्व्रांशहीनः प्राक् सूर्यः खार्कोऽन्यथा युतः ॥१०॥
तदिष्टचरषड्घातपलभातेन संस्कृतात् ।
पलोनाहृतात्खाद्वाद् द्विघ्नात्तत्त्वैर्हृता नतिः ॥११॥
तात्कालिकेन्दुविक्षेपो युक्तो नत्यैकदिक्कया ।
हीनोऽन्यथा युतौ स्पष्टच्छादकोऽधः स्थितो ग्रहः ॥१२॥

[ इदानीं ग्रहणसंभवमाह ]—

१४ ८
[1]इन्द्राल्पका बाहुलवा गजाल्पाः सौम्ये च याम्ये ग्रहणं रवेः स्यात् ।
६ १५ १५
मासै रसैः पक्षकपक्षयुक्तवियुग्रसैः स्याद् ग्रहणप्रसिद्धिः ॥ १० ॥
१६ १२
षोडशांशकपरं शिशिरांशोर्द्वादशांशकपरं च खरांशोः ।
[2]सर्वसर्वजननेत्रनिरीक्ष्यं स्नानदानविषयोऽनधिकेऽपि ॥ ११ ॥
धूम्रकृष्णसितरक्तपिशङ्गाः कान्तयोऽल्पदल[१५ ख]तत्परपूर्णैः ।
स्युर्ग्रहैः शशधरस्य समस्तैः कृष्णमेव वपुरुष्णमरीचेः ॥ १२ ॥
श्रीमन्नृसिंहात्मजरङ्गनाथविनिर्मिते खेचरसाधनेऽस्मिन् ।
सिद्धान्तचूडामणिनामधेये मार्तण्डपर्वानयनाधिकारः ॥ १३ ॥

इति [ श्री ]मद्दैवज्ञ[ नृ ]सिंहात्मजरङ्गनाथविरचिते
सिद्धान्तचूडामणौ सूर्यग्रहणाधिकारः
पञ्चमः ॥ ५ ॥

---

१. ग्रहणसंभवभुजांशकल्पनमसमीचीनमिवाभाति । बुधैर्विभावनीयम् ।
२. प्रथमसर्वशब्दो निरर्थकः । अतः 'खेऽथ' इति पाठान्तरं साधु ।

## [ अथ चन्द्रदर्शनाधिकारः ]

१२
[1]सार्कांशो दिननायकः प्रतिपदः पूर्तौ विधुः स्यात्ततः
५६
पाताढ्याच्चरमङ्गबाणविहृतं स्वर्णं लवाद्यं फलम् ।

---

१. एते श्लोका ग्रहलाघवीयोदयास्ताधिकारोक्तश्लोकार्थानुगताः सन्ति । यथा—

सार्कांशाविह कुरु पद्वतिद्वयेऽर्कव्यग्वकौ चरमथ केवलाद् व्यगोर्यत् ।
षड्बाणैर्विहृतमिदं क्रमाल्लवाद्य स्वर्णं स्याद्व्यगुरविगोलयोः पृथक् तत् ॥१॥
त्रिभायनलवान्वितारुणचराहत द्वयत्नभाहतेः कृतिहृतं धनर्णमसमैकगोले व्यगोः ।
खखानलविशेषितः सरसभायनार्कोदयः शरद्विकहृतो धनाधनमनल्पकाल्पोदये ॥२॥
द्युमितिप्रतिपद्गमान्तरं यच्छरभक्त स्वमृणं दिनेऽधिकोने ।
धनमत्र चतुष्कसंस्कृतिश्चेत् तपनास्ते विधुरीक्ष्यतेऽन्यथा न ॥३॥

एषामुपपत्तिरपि तत्रैव प्रतिपादिताऽवगम्या । अथ यदि प्रतिपदन्ते रवेरस्तकालस्तदा द्वादशकालांशसंबन्धिभागानयने श्रीमताऽऽचार्येण घटिकातोऽनुपातो विहितः । एतावदेव ग्रहलाघवतोऽन्तरम् । तद्यथा —द्वादशकालांशसंबन्धिघट्यात्मकः कालः $= \frac{\text{सरसाब्जोदयघ०} \times १२^{\circ}}{३०} = \frac{\text{सरसाब्जोदयघ०}\ २}{५}$। द्वादशकालांशाना भागात्मकमानम् $= \frac{१२ \times \text{सरसाब्जोदयघ०} \times २ \times ३०}{६० \times ५} = \frac{१२ \times \text{सरसाब्जोदयघ०}}{५}$ ।

एषामंशाना द्वादशकालांशानामन्तरं च भागात्मकम् $= १२ \backsim \frac{१२\ \text{सरसाब्जोदयघ०}}{५}$

$= \frac{१२(५ \backsim \text{सरसाब्जोदयघ०})}{५}$ । इत्यनेन “सषड्भायनांशाब्जस्योदयनाडिकाः” इत्याद्युपपन्नम् ।

पाताढ्याज्व[ ब्ज ]कगोलयोः पृथगिदं युक्तायनांश[३]त्रिभा-

न्मार्तण्डाच्चरताडितं [२]द्विगुणिताद्भाभामितेर्वर्गहृत् ॥ १ ॥

पाताढ्यादसमैकगोलवशतः स्वर्णं स[६]षड्भाऽयनांशा-

ज्व[ ब्ज ]स्योदयनाडिका [१][५]मृगरथैर्विश्लेषितास्ताडिताः ।

[१२]मार्तण्डैः [५]शरभाजिता धनमृणं पञ्चाधिकोनास्वथो

[५]वाणाप्ता प्रतिपद्द्युमानवियुतिर्घस्ने ऽधिकोने फलम् ॥ २ ॥

तत्संस्कृते स्याद्धनता यदास्तकालेऽज्व[ ब्ज ]संदर्शनलालसानाम् ।

तदोपचित्याढ्यकलाकलापकलानिधिर्दृष्टिपथं प्रयाति ॥ ३ ॥

श्रीमन्नृसिहात्मजरङ्गनाथ [ विनिर्मिते खेचरसाधनेऽस्मिन् ।

सिद्धान्तचूडामणिनामधेये ] सुधामयूखेक्षणताधिकारः ॥ ४ ॥

इति सिद्धान्तचूडामणौ चन्द्रदर्शनाधिकारः

षष्ठः ॥६॥

---

१. अत्र मृगरथशब्देन पञ्च गृह्यन्ते । मृगशिरोनक्षत्रमश्विन्यादितः पञ्चममतस्तेनपञ्च ग्राह्याः । अथवा विशिष्टाः पञ्च मृगा भवन्ति । तद्यथा—

हरिणश्चापि विज्ञेयः पञ्चभेदोऽत्र भैरव ।
ऋष्यः खड्गो रुरुश्चैव पृषतश्च मृगस्तथा ॥
एते बलिप्रदाने च चर्मदाने च कीर्तिताः ।

[ कालिकापुराणे, ६७ अध्याये ]

इति पुराणवचनतोऽपि पञ्चैवार्थः समीचीनः । गणितोपपत्तिदृष्ट्या च पञ्चैवोपयुक्तोऽर्थः । एवं च वेदे देवरथशब्देन यज्ञार्थो गृह्यते, तथैवात्रापि प्रसङ्गवशान्मृगरथशब्देन पञ्च गृह्यन्ते ।

## [ अथ उदयास्ताधिकारः ]

### [ तत्रादौ गुरोरुदयास्तावाह ]—

१३०८३०
[1]इष्टोह्नां निचयो युतश्च गगनाग्नीभाभ्ररामेन्दुभिः
३५९०　　　　　　　　३९९
पूर्णाङ्काशुगपावकैः परिहृतः शेषं [१६ क]नवाङ्काग्निभिः ।

---

१. प्रकारोऽयं श्रीभास्करीयकरणकुतूहलानुरूप एव । यथा करणकुतूहले—

इष्टोऽह्ना निचयोऽब्ददिग्लवयुतः पञ्चाभ्रभूवर्जितो
भक्तो नन्दनवाग्निभिस्तिथिमितैः शेषैर्गुरोरुद्गमः ।
अस्तो वेदगजाग्निभिस्तदधिकैरूनैर्गतैष्यैर्दिनै-
रुत्कालार्कघटीफलं च तिथिवत् सूर्याहतं शेषके ॥ १ ॥ इत्यादि ।

[ उदयास्ताधिकारे, श्लो० १ ]

सिद्धान्तचूडामणिग्रन्थोक्तश्लोकोपपत्तिः— एकस्मिन् कल्पे गुरुसूर्ययोर्युति-भगणान्तरसमा, ततोऽनुपातेनैकयुतिसंबन्धीनि कुदिनानि = $\frac{\text{ककुदि} \times १}{\text{भगणान्तरसमा युतिः}}$ = ३९९ स्वल्पान्तरतः ।

एकयुतिकालदिनानि नवभिर्गुणितानि = ३९९ × ९ = ३५९१ एतावन्ति भवति । परमेकस्मिन् युतिकाले पूर्णानि ३९९ एतानि दिनानि न लभ्यन्ते । एतानि च वास्तवमानतोऽधिकानि । तत्र नववर्षेषु दिनमेकमधिकं जायते । तेनात्राचार्येण ३५९० अयं हरः कल्पितः । ग्रन्थारम्भात् प्राग् $\frac{१३०८३०}{३५९०}$ एषु दिनेषु युतिकालो जातः । अतो ग्रन्थारम्भतः साधिताहर्गणे $\frac{१३०८३०}{३५९०}$ एतानि दिनानि योजितानि । ततः ३५९० अनेन हरेण भाजिते शेषे पुनरेकयुतिकालदिनैर्भाजिते वर्तमानयुतिकालस्य गतदिनानि लभ्यन्ते । तानि यदि १६ दिनानि तदा गुरोः समुदयो भवति ।

अत्र गुरोः १४ कालांश (शीघ्रकेन्द्रांश) सबन्धिदिनानि १६ गृहीतानि स्वल्पान्तरतः । तेन ग्रन्थोक्त सर्वमुपपन्नम् । परं गुरोरुदयार्थं १६ दिनानि, एवं च गुरोरस्तकालार्थं १५ दिनानि स्वीकृतानीति विचारार्हम् ।

१६ ३८४
भक्तं शेषमितैर्नृपैः समुदयो वेदाष्टरामैर्गुरो-

रस्तः स्याद्गतगम्यकैस्तदधिकैरूनैर्गतैष्यो दिनैः ॥ १ ॥

[ अथ शुक्रस्योदयास्तावाह ]—

११०० ३६०
[1]खाशाज्वै[ ब्जै ]र्वियुतोऽभ्रषड्गुणगुणः शाको निजक्षेपयुग्

१२०० ५७६
द्विष्ठः खाभ्रयमेन्दुहृत् फलयुतः षट्सप्तबाणैर्हृतः ।

१२५ १ ४
शेषैस्तत्त्वकुभिर्युगाब्धिजलपैः प्राच्यां प्रतीच्यां क्रमा-

४५२ १९५
दस्तः स्यादुदयः कराद्रजलपैर्बाणाङ्कचन्द्रैस्तथा ॥ २ ॥

---

१. शुक्रस्य केन्द्रभगणोत्थदिनमानं सौरात्मकम् $= \frac{१५५५२०००००}{२७०२३७६} = ५७५ +$

$\frac{१३३३८००}{२७०२३७६} = ५७६$ स्वल्पान्तरतो गृहीतम् । तत्र १२०० सौरदिनैर्वास्तवमानेनैकं दिनमधिकं लभ्यते, तेन दिनगणो द्विष्ठः १२०० अनेन विभज्यते, लब्धं च दिनगणे योज्यते ।

अभीष्टशकः ११०० अनेन रहितो भांशैः (३६०) गुणितो वर्षारम्भे सौराहर्गणः । तस्मिन् वर्षारम्भादभीष्टदिनं यावदतीतः सावनाहर्गणो योजितोऽभीष्टाहर्गणः । स च पूर्वसाधितेन ५७६ अनेन हरेण भाजितःतत्र १२५, १४४ एतयोः शेषयोः क्रमशः प्राच्या प्रतीच्यामस्तः । एवं च ४५२, १९५ एतयोः शेषयोः क्रमशः प्राच्या प्रतीच्यामुदयः । एतदुदयास्तदिनानयनं पठितकेन्द्रांशतोऽनुपातेन ग्रहलाघवीयोदयास्ताधिकारोक्तोपपत्तिवत् सुगमम् ।

आचार्योक्तसूत्रदर्शनेन ११०० शककाले वर्षारम्भे शुक्रशीघ्रकेन्द्रभगणपूर्तिरासीदित्यनुमीयते । परं गणितेनैव नैवोपलभ्यते । तथा च भांश (३६०) गुणितसौरवर्षगणोत्थसौरदिनेषु सावनदिनानि योजितानीत्यप्यरुचिकरं प्रतीयते ।

[ अथ क्षेपदिनान्याह ]—

३१ ६२ ९४ १२५ १५६
[१]रूपाग्नयो नेत्ररसा युगाङ्कास्तत्त्वेन्दवस्तर्कशरेन्दुतुल्याः ।
१८६ २१७ २४६ २७६
तर्काष्टचन्द्रा मुनिचन्द्रदस्रास्तर्काब्धिदस्रा रससैलदस्राः ॥ ३ ॥

मूलश्लोक एकत्र जलपशब्देन चत्वारोऽङ्का गृहीता अन्यत्र एकाङ्क इति पूर्वापरविरुद्धं केनचिल्लेखकेनोपन्यस्तम् । वस्तुतस्तु जलपशब्देन चत्वारोऽङ्का एवोचिताः । यतो हि जलपो वरुणः, स च समुद्रस्याधिष्ठाता । तेन परम्परया चत्वारोऽङ्काः समुचिताः । गणितेनापि चतुर्थैकजलपशब्दः समुचितः ।

आचार्येण यान्युदयास्तदिनानि पठितानि तान्युपपत्तियुक्त्याऽनुपयुक्तानीवाभान्तीति सर्वं विद्वद्भिर्विचारणीयम् ।

प्रकारोऽयं करणकुतूहलानुरूप एव । यथा—

पञ्चेशो नगणोऽब्दभूपलवयुग्वेदाष्टबाणैर्हतः
पश्चात्षट्कृतिभिर्नगाष्टयुगलैः शुक्रोदयास्तौ क्रमात् ।
शेषैः प्राङ्नगगोयमैर्गजयुगप्राणैस्तदानी च य-
स्तिग्माशोरुदयः खखाग्निरहितः पश्चात्तु तत्सतमः ॥३॥ इत्यादि ।

[ खगोदयास्ताधिकारे ]

१. एषा साधनाय प्रश्नोत्तररूपे मदीयपद्ये—

सकृत्प्रकारेण कथं प्रसाध्यो मेषादिराशिस्थितसावनौघः ।
रवेः सुबुद्धे ! गणिते परिष्ठो विद्वन् ! तदा तं वद गोलयुक्त्या ॥१॥
अस्य भङ्गः ।
राश्यादिराश्यन्तगतौ रवी यौ ताभ्यां प्रसाध्यौ खलु मध्यमार्कौ ।
धीमन् ! तयोरन्तरमेव भक्तं मध्यार्कगत्या कुदिनानि तानि ॥२॥

म०म०श्रीबापूदेवशास्त्रिमहोदयैः सिद्धान्तशिरोमणेष्टिप्पण्या मेषादिसंक्रान्तिषु सावनदिनानि ससाध्य पठितानि तान्येतानि ।

वर्तमानकाले स्वल्पान्तरेणाङ्गीकृताष्टाद्रिभागमितसूर्यमन्दोच्चे मेषादिराशिस्थितेऽर्के सावनदिनानि—

| मे० | वृ० | मि० | क० | सि० | क० | तु० | वृ० | ध० | म० | कु० | मी० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ३० | ३१ | ३१ | ३१ | ३१ | ३० | २९ | २९ | २९ | २९ | २९ | ३० |
| ५५ | २४ | ३७ | २८ | २ | २९ | ५७ | २७ | १५ | २४ | ४९ | २३ |
| ३३ | ५६ | ३२ | ३५ | ५२ | ४ | २ | ३९ | ३ | ० | ४३ | ३१ |

एतत्सावनमानावलोकनेन स्पष्टं यदाचार्योक्तसावनमानं किञ्चित्स्थूलमिति ।

३ ५ ३३५ ३६५
शराभ्ररामाः शररामरामाः शराङ्गरामा वृषभादिकानाम् ।

क्षेपा निरुक्ता अथ यातगम्यैर्दिनैर्गतैष्यः खलु संक्रमात् स्यात् ॥ ४ ॥

| वृ | मि | क | सि | क | तु | वृ | ध | म | कुं | मी | मे | संक्रान्तम् |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३१ | ६२ | ९४ | १२५ | १५६ | १८६ | २१७ | २४६ | २७६ | ३०५ | ३३५ | ३६५ | क्षेपकाः |

[ इदानीमुदयास्तदिशमाह ]—

[1]प्राच्यामुदेति रवितोऽल्पतरोऽल्पभुक्तिः
खेटोऽधिकोऽधिकगतिः खलु पश्चिमायाम् ।
प्राच्यां तु भूरिगतिरल्पतरोऽस्तमेति
भूयांस्तथा लघुगतिः खलु पश्चिमायाम् ॥५॥

[ इदानीं चन्द्रादीनां कालांशानाह ]—

१२ १७ १४ ११ १० १५
[2]सूर्यात्यष्टीन्द्ररुद्रा[१६ ख]शातिथितुल्याः शशाङ्कतः ।
२
कालभागाः स्मृता द्व्यूना वक्रिणोर्बुधशुक्रयोः ॥६॥

---

१. अत्र सिद्धान्तग्रन्थोक्तवद्वासना स्पष्टा ।

२. अत्रोपलब्धिरेव वासना प्राचीनाचार्यैरपि तथैवोक्तत्वात् । श्रीभास्कराचार्यैः सिद्धान्तशिरोमणौ ये कालांशाः पठितास्तद्भिन्नाः स्वकीयकरण-कुतूहले निबद्धा इति महद्वैचित्र्यम् । उपपत्तौ चोपलब्धिरेव वासनोक्ता । तर्हि एकग्रहस्य भिन्नभिन्नकालांशग्रहणे किं बीजमिति विभावयन्तु सुधियः ।

[ इदानीं भौमादीनां पातांशानाह ]—

४० २० ३०[८०]६० १००

[1]पातांशकाः खाम्बुधयः खदस्राः खेभाः खतर्काः खदिशः कुजात् स्युः ।

मध्याशुकेन्द्रेण विहीनितौ तौ स्यातां स्फुटौ कोविदकाव्ययातौ ॥७॥

सिद्धान्तशिरोमणौ पठिताः कालांशाः—

१२ १७ १४ ११ १० १५

दस्रेन्दवः शैलभुवश्च शक्रा रुद्राः खचन्द्रास्तिथयः क्रमेण ।

चन्द्रादितः काललवा निरुक्ता ज्ञशुक्रयोर्वक्रगयोर्द्विहीनाः ॥ ६ ॥

[ सि. शि. उ. अ. श्लो. ६ ]

सिद्धान्तचूडामणावेत एव कालांशाः पठिताः सन्ति । सिद्धान्ततत्त्वविवेके चाप्येत एव निबद्धाः सन्ति । यथा—

द्विसप्तवेदेन्दुखपञ्चभागा दिक्संयुताः काललवा निरुक्ताः ।

चन्द्रादिकानां भृगुसौम्ययोस्ते द्विहीनिता वक्रगयोः स्वतन्त्रैः ॥

[ उ. अ. श्लो. १३८ ]

करणकुतूहले निबद्धाः कालांशाः —

१२ १७ १३ ११ ९ १५

सूर्याः सप्तदश त्रिभूपरिमिता रुद्रा नवाष्टेन्दवः ।

कालांशाः शशितोऽनृजोः कुरहिताः पाताः कुजाद्यांशयः ॥ इत्यादि ।

[ खगोदयास्ताधिकारे, श्लो. ८ ]

एतान्येव ग्रहलाघवेऽपि सन्ति । यथा—

१२ १७ १३ ११ ९ १५

भास्करा नगभुवो गुणचन्द्रा भूभुवो दिविसदस्तिथयोऽब्जात् ।

प्राक्तनैर्निगदिताः समयांशा वक्रिणोर्भृगुविदोः क्षितिहीनाः ॥१२॥

[ उ. अ. श्लो. १२ ]

१. सूर्यमन्दोच्चवत् पातस्य चिरस्थिरत्वाद्भौमादीनां स्थिरभागान् चक्रशुद्धान् विधाय शेषाः पातलवाः पठिताः सन्ति । बुधशुक्रयोस्तु–"ये चात्र पातभगणाः पठिता ज्ञभृग्वोः" इत्यादिभास्करविधिना गणितागतपातो मध्यमशीघ्रकेन्द्रेणाधिको वास्तवः । स च भांशतो विशोध्यः । एवं गणितागतपातस्य भांशशुद्धत्वात् तत्र मध्यमशीघ्रकेन्द्रं विहीनं कार्यमिति ।

| चं | | बु | गु | शु | श | ग्रहाणाम् |
|---|---|---|---|---|---|---|
| १२ | १७ | १४ | ११ | १० | १५ | कालांशाः |
| ० | ४० | २० | ३०? [८०] | ६० | १०० | पातांशाः |

[ इदानीमिष्टशरसाधनपूर्वकं स्पष्टक्रान्त्यादिसाधनमाह ]—

९० १२० ६० १२० १२०
[१]खाङ्कैः खसूर्यैः खरसैः खसूर्यैः खार्कैर्हता रामं[म]च्छ्रु[श्रु]तिहृत्कलाद्यः ।
पातोनमन्दस्फुटखेटदोर्ज्या पातोनमन्दस्फुटदिक्शरः स्यात् ॥८॥

| मं | बु | गु | शु | श | ग्रहाः |
|---|---|---|---|---|---|
| ९० | १२० | ६० | १२० | १२० | गुणकाः |

---

१. सूर्यसिद्धान्ते परमशरकलाः—

एवं त्रिघनरन्ध्रार्करसार्कार्का दशाहताः ।
चन्द्रादीनां क्रमादुक्ता म यविक्षेपलिप्तिकाः ॥

[ मध्यमाधिकारे, श्लो. ७० ]

एता एव शरकला आचार्येण स्वीकृता दृश्यन्ते । सिद्धान्तोक्त्या ग्रहशरकलाः = $\frac{\text{परमशरकला} \times \text{सपातदोर्ज्या}}{\text{शीक}}$ । अत्रानुपाते परमशरकलोत्थापनेनाचार्योक्तमुपपद्यते ।

अत्राचार्येण हरे त्रिगुणिताशुकर्णः स्वीकृतः । एतत्तदैव संभवति यदा शरोऽङ्ग-लाद्योऽपेक्षते । परमाचार्येण शरः कलाद्य एव साधितः । तस्मात् त्रिगुणिता-शुकर्णहरत्वं विचारणीयमेव ।

तत्संस्कृतः स्पष्टतरोऽपमः स्यात् पूर्वापरे भत्रयहीनयुक्तात्।

[1]खेटान्नतांशाश्च तथोन्नतांशा अथे[षु]निघ्नी नतभागमौर्वी ॥६॥

---

१. आद्दृग्ग्रहसाधनार्थमाचार्येण स्थानीयग्रहे राशित्रयं पूर्वापरकपालयोर्ऋणं धनं च विधाय वित्रिभं कल्पितम्। परं बिम्बग्रहो यदा क्षितिजस्थः स्यात्तदा। एवं भूतवित्रिभग्रहस्य नतांशा उन्नतांशाश्च साध्याः। क्षितिजस्थबिम्बग्रहे बिम्बोपरिगत-कदम्बप्रोते शरः, कोटिरयनदृक्कर्मचापं भुजः, क्षितिजे कर्ण इति चापजात्यं सरलजात्यं मत्वा कदम्बप्रोतवृत्तक्षितिजोत्पन्नकोणो वित्रिभग्रहनतांशाः कल्पितः। अतः क्रान्ति-वृत्तक्षितिजोत्पन्नकोणो वित्रिभग्रहोन्नतांशाः। अत्र सरलजात्येऽनुपातेनायनदृक्कर्म-चापम् $= \frac{\text{शर} \times \text{नतज्या}}{\text{उन्नतांशज्या}}$, स्वल्पान्तरतो ज्याचापयोरभेदात्। अतः—"अथेषु-निघ्नीनतभागमौर्वी" इत्यादिग्रन्थकारोक्तमुपपन्नम्। शेषवासना सिद्धान्तोक्त-रीत्या स्पष्टा।

पठितेष्टकालाशान्तरकलाः = नाडीमण्डलेऽसवो भवन्ति। ते च षड्भक्ताः पलानि = $\frac{\text{असु}}{६}$। ततोऽनुपातो यद्युदये रविभोदयेनास्ते तत्सतमोदयेन १८०० कलाः क्रान्तिवृत्ते तदा षड्भक्तासुभिः किमिति लब्धास्तत्संबन्धिन्यः क्रान्तिवृत्ते कलाः = $\frac{१८०० \times \text{असु}}{६ \times \text{रभोदयप}} = \frac{३०० \times \text{असु}}{\text{रभोदयप}} = \frac{३०० \times \text{अन्तरकलाः}}{\text{रभोदयप}} = \frac{५ \times \text{अन्तरकलाः}}{\text{रभोदयघ}}$।

ततो ग्रहे मार्गिणि सति गत्यन्तरेण, एवं च वक्रिणि ग्रहे गतियोगेनैकं दिनं तदा क्रान्ति-वृत्तीयकलाभिः किमिति लब्धान्युदयास्तयोर्गतैष्यदिनानि = $\frac{५ \times \text{अन्तरकलाः}}{\text{रभोदयघ} \times \text{गअं वा गयो}}$

एतद् गणितरीत्योपयुक्तम्। परमाचार्येण—"गतैष्यकः स्यादुदयोऽन्यथास्तः" इत्यादि-पद्यार्धे "तदन्तरालस्य लवाः" इति पाठ उपन्यस्तः, स नोपयुक्तः। अतस्तत्र "कलाः" इति पाठः समीचीनः। एवं चाग्रे "युत्याऽनृजौ" इत्यत्र "युत्याऽनृजोः" इति पाठान्तरं साधु।

समुन्नतांशज्यकया विभक्ता लवादिदृक्कर्म खगे धनर्णम् ।

नतांशविक्षेपसमान्यदिक्के व्यस्तं परे दृक् खचरो भवेत् सः ॥१०॥

मार्तण्डदृक्खेचरयोरनल्पः कल्प्यो विलग्नं हि तदल्पकोऽर्कः ।

या नाडिकामध्यगतास्तयोस्तास्तर्कैर्[६]गुणाः काललवा भवेयुः ॥११॥

पश्चात्तयोः साङ्ग[६]भयोस्त्वथैते यदोक्तभागाधिकहीनिताः स्युः ।

गतैष्यकः स्यादुदयोऽन्यथास्तस्तदन्तरालस्य लवाः शर[५]घ्ना ॥१२॥

मार्तण्डभोदयघटीविहताश्च पश्चात्-

त्सप्तमेन विहृता विवरेण भुक्त्योः ।

युत्याऽनृजौ स्फुटतरौ खचरोद[१७ क]यास्तौ

लब्धैर्गतैष्यदिवसैः क्रमशो भवेताम् ॥१३॥

[अत्र] श्रीमद्दिवाकरदैवज्ञाः [ अगस्त्योदयास्तकालादीनाहुः ]—

[1]पलभया वसु[८]संगुणया पृथक् पलरुचेर्दलराम[३]लवोनया ।

खनिधयो[९०] गजषट्[६८]सहिताऽयुता इह रवावुदयानुदयौ मुनेः ॥१४॥

---

१. अगस्त्यस्योदयास्तकालसाधने पूर्वाचार्यैरस्याचार्यस्य मतभेदः । तेषां मतानि यथा—

अगस्त्यास्तोदयार्कांशाः सप्तशैलाः स्वराङ्ककाः ।

अष्टघ्नविषुवच्छायाहीना युक्ताः स्वदेशजाः ॥४॥

[ लघुमानसे संकीर्णाधिकारे, श्लो. ४ ]

सषड्भार्कतोऽनल्पकोऽल्पोऽर्कतो यः प्रयात्युद्गमं सोऽन्यथास्तं [प्रयाति]।

खगः पूर्वपश्चात्स्थदृक्कर्मदत्तो विधेयो गतोऽप्युद्गमेऽस्ते सषड्भात् ॥१५॥

षड्भाधिकार्कभोग्याद्यो मध्योदयसमन्वितः।

खगोदयेऽस्तके कालो रात्रियातोऽसकृत्स्फुटः ॥१६॥

श्रीमन्नृसिंहात्मजरङ्गनाथविनिर्मिते खेचरसाधनेऽस्मिन्।

सिद्धान्तचूडामणिनामधेये खगोदयास्तानयनाधिकारः ॥१७॥

इति[श्री]रङ्गनाथविरचिते सिद्धान्तचूडामणौ

उदयास्ताधिकारः सप्तमः ॥७॥

---

अक्षभाहतियुक्तवर्जिता अष्टगोमितलवा गजाद्रयः।
तत्समे दिनमणौ च कुम्भभूर्याति दर्शनमदर्शनं क्रमात् ॥१४॥

[ करणकुतूहले खगोदयास्ताधिकारे, श्लो० १४ ]

पलभाऽष्टवधोनसंयुता गजशैला वसुखेचरा लवाः।
इह तावति भास्करे क्रमाद् घटजोऽस्तं ह्युदयं च गच्छति ॥२२॥

[ ग्रहलाघवे उदयास्ताधिकारे, श्लो० २२ ]

एषा वासनाऽपि तत्रैव स्पष्टा। आचार्योक्ता उदयास्तयोर्भागाः सर्वेभ्यो भिन्नाः। आक्षदृक्कर्मसाधनेऽपि मतभेदः। मन्ये स्वकाल आचार्येणैवमेवोपलब्धं भवेदिति। पद्ये पलरुचेः = पलभाया इत्यर्थः। शेषपद्यानां वासना सिद्धान्तोक्त्या स्पष्टा।

# अथ ग्रहच्छायाधिकारः

पूर्वकर्म[प्र]दत्तोऽसौ खचरोऽल्पो विलग्नतः ।

अस्तलग्नादनल्पश्चेद् दृष्टियोग्यो भवेन्निशि ॥१॥

तद्योग्यसमयो लग्नभुक्तयुक्तः समन्वितः ।

मध्योदयैर्नभोगस्य द्युयातः समयो भवेत् ॥२॥

[1]पलभागुणितोंऽशाद्यो बाणो बाणगुणोऽङ्गहृत् ।

तत्संस्कृतं चरं स्पष्टमस्मात्साध्या दिनोन्मितिः ॥३॥

[2]ग्रहस्य द्युगतात्साध्यं त्रिप्रश्नोक्त्या प्रभादिकम् ।

---

१. दिनमानसाधनाय स्पष्टचरमानमपेक्ष्यते । तच्च स्पष्टक्रान्तितः साध्यते । अतः स्पष्टा क्रान्तिः = क्रा ± शर । इयं द्विगुणिता लघुखण्डकैः स्वल्पान्तरतः स्पष्टा क्रान्तिज्या = २ × क्रा ± २ × शरांश । ततोऽनुपातेन स्पष्टचरज्या $= \frac{\text{पभा (२ का ± २ शरांश) त्रि}}{\text{१२ × द्युज्या}}$

$= \frac{\text{पभा × क्राज्या × त्रि}}{\text{१२ × द्युज्या}} + \frac{\text{२ शरांश × त्रि × पभा}}{\text{१२ × द्युज्या}}$ = चरज्या ±

$\frac{\text{शरांश × पभा × त्रि}}{\text{६ × द्युज्या}}$ इयं द्विभक्ता चरांशा भवन्ति, ते च दश गुणिता जातानि

स्पष्टचरपलानि = चरप ± $\frac{\text{१० × शरांश × त्रि × पभा}}{\text{१२ × द्यु}}$ = चरप ±

$\frac{\text{५ × शरांश × पभा × त्रि}}{\text{६ × द्यु}}$ । अत्राचार्येण $\frac{\text{त्रिज्या}}{\text{द्युज्या}}$ = १ स्वल्पान्तरतः कल्पितम् ।

अतः स्पष्टचरपलानि = चरप ± $\frac{\text{५ × शरांश × पभा}}{\text{६}}$ । अत उपपन्नं यथोक्तम् ।

२. अत्र श्लोकसंख्या नास्ति ।

[1]साङ्गार्कदृक्खेचरयोरनल्पो लग्नं परोऽर्कः समयस्तदन्तः।
द्युशेषको रात्रिगतः खगस्य समुद्गमे स्यात्खचरेऽल्पपुष्टे ॥४॥
[१७ ख]ग्रहस्य द्यगतस्तेन युग्वियुक् समयस्तदा।
रात्रियातोऽथ चन्द्रस्य साधनीयोऽसकृत्स्फुटः ॥५॥
श्रीमन्नृसिंहात्मज[रङ्गनाथविनिर्मिते खेचरसाधनेऽस्मिन्।
सिद्धान्तचूडामणिनामधेये] समाप्तिमागात्खगभाधिकारः ॥६॥

इति [श्री]रङ्गनाथविरचिते सिद्धान्तचूडामणौ
ग्रहच्छायाधिकारोऽष्टमः ॥८॥

---

१. अत्रोपपत्तिर्ग्रहलाघवीयच्छायाधिकारीय ५-६ श्लोकवत् स्पष्टा।

## अथ शशाङ्कशृङ्गोन्नमनाधिकारः

मासस्य पादे प्रथमेऽन्तिमे वाऽभीष्टे दिनेऽस्तोदयकालजाताः ।
रवीन्दुपाताः सुधिय' विधेयाः शृङ्गोन्नतिं चन्द्रमसोऽवगन्तुम् ॥१॥
[१]तर्क(६)राशियुतात्सूर्यादपमोऽज्ञा[ब्जा]त्स्फुटापमः ।

---

१. अत्र शृङ्गोन्नतिसाधने व्यर्केन्दुसमश्चन्द्रशङ्कुः कल्पितः, शृङ्गोन्नतिश्च सूर्योदयास्तसमय एव साधिता । सूर्यस्य शङ्कोरभावादग्रासमो भुजः, स च स्वल्पान्तरतः क्रान्तिज्यासम एव कल्पितः । एवमेव चन्द्रस्यापि स्पष्टा क्रान्तिज्या भुजः ।

चन्द्रशङ्कुतलम् $= \frac{\text{अज्या} \times \text{चंश}}{\text{त्रिज्या}} = \frac{\text{अज्या} \times \text{व्यर्केन्दुभुजज्या}}{\text{त्रि}} =$

$\frac{\text{अज्या} \times \text{व्यर्केन्दुभुजज्या} \times २४}{\text{त्रिज्या} \times २४} = \frac{\text{अज्या} \times \text{व्यर्केन्दुक्राज्या}}{२४}$ एवं सर्वेषां संस्कारे

परिलेखार्थं स्पष्टभुजः $= २$ चंस्पक्रा $\pm २$ सू क्रा $\pm \frac{\text{अक्षज्या} \times \text{व्यर्केन्दुक्राज्या}}{२४}$ अयं ज्यात्मको भुजो द्विभक्तोऽशात्मकः स्पष्टभुजः $=$ चस्पक्रा $\pm$ सूक्रां $\pm$

$\frac{\text{अक्षांश} \times \text{व्यर्केन्दुक्रा}}{२४}$ । अत्र सूर्यः सषड्भः कृतः, तेन संस्कारे समदिशोर्योगो भिन्नदिशोऽन्तरं कार्यम् । अस्य स्पष्टभुजस्य षडङ्गुलवृत्ते परिणामनायानुपातः $=$

$\frac{\text{स्पष्टभुज} \times ६}{\text{व्यर्केन्दुभुजांश}}$ परिणतभुजोऽङ्गुलाद्यः । अयमेव परिणतभुजो वलनं संस्कारदिक्कम् ।

अत्रानुपाते सुखार्थं स्थूलत्वमङ्गीकृतम् ।

शृङ्गोन्नतौ सितसाधनायानुपातो यदि भार्द्धांश( १८० )तुल्यव्यर्केन्दुभागैर्द्वादशाङ्गुलमितं सितं लभ्यते तदेष्टान्तरांशैः किमिति लब्धं सितम् $=$

$\frac{१२ \times \text{अन्तरांश}}{१८०} = \frac{\text{अन्तरांश}}{१५}$ शेषपद्यानां वासना सिद्धान्तरीत्या सुगमा ।

[१]केवलाहीनचन्द्रात्तु योऽन्य. पलहतो जिनैः[२४] ॥२॥

भक्तस्त्रितयसंस्कारः शेषं तर्क[६]गुणं च तत् ।

व्यर्केन्दुभुजभागैर्हृदङ्गुलाद्यं स्फुटं भवेत् ॥३॥

संस्कारदिक्कं वलनं तद्दिक्कं तत्प्रमाणकम् ।

शृङ्गोच्चं भुजभागानां तिथ्यंशप्रमितं सितम् ॥४॥

श्रीमन्नृसिंहात्मज[रङ्गनाथविनिमिते खेचरसाधनेऽस्मिन् ।

सिद्धान्तचूडामणिनामधेये] शशाङ्कशृङ्गोन्नमनाधिकारः ॥५॥

इति [ श्रीरङ्गनाथविरचिते सिद्धान्तचूडामणौ ]

शृङ्गोन्नमनाधिकारो नवमः ॥९॥

---

१. अत्र द्वितीयश्लोके—"केवलाहीनचन्द्रात्" इत्यत्र "केवलार्कोनचन्द्रात्" अथवा "भानुना हीनचन्द्रात्" इति पाठान्तरं समीचीनमिवाभाति । तेनाचार्योक्तमुपपन्नं भवति ।

## अथ ग्रहयुत्यधिकारः

योगौ महीपुत्रमुखग्रहाणां परस्परं युद्धसमागमौ स्तः ।

समागमश्चन्द्रमसाऽत्र योगः सूर्येण योगोऽस्तमनाह्वयः स्यात् ॥१॥

५   ६ ७ ९   ५       १२०

[1]बाणाङ्गशैलनवपञ्च पृथक् खसूर्यकर्णान्तरालगुणिता विहृताश्चलाङ्कैः ।

३

त्रिघ्नैः पलोनितयुताः श्रवणेऽधिकोने लिप्तामयानि कुसुतादिकमण्डलानि ॥२॥

खेटान्तरालस्य कला विभक्ता गत्योर्वियोगेन तदैकवक्रे ।

युत्यास्तघस्रैः [१८ क] कुटिलेऽल्पभुक्तौ न्यूने गता संयुतिरन्यथैष्या ॥३॥

द्वयोरनृज्वोर्विपरीतमेभिर्दिनैः प्रचाल्यौ खचरौ समौ स्तः ।

शरौ विधेयौ च तयोः सुधांशोः शरः स्फुटः स्यान्नतिसंस्कृतः सन् ॥४॥

---

१. अत्रातीन्द्रियदृग्भिराद्याचार्यैस्त्रिज्यातुल्ये शीघ्रकर्णे भौमादीना बिम्बाङ्गुलानि लक्षितानि, तान्येवाचार्येण पञ्चादीन्युक्तानि । तेषां स्पष्टीकरणं यथा—अन्त्यफलज्यातुल्येन त्रिज्याशीघ्रकर्णान्तरेण यदि बिम्बत्रिभागतुल्यो ह्रासो वृद्धिर्वा लभ्यते तदेष्टेन त्रिज्याशीघ्रककर्णान्तरेण किमिति लब्धं बिम्बकलाफलम् = $\frac{\text{पठितबिम्ब}}{३} \times \frac{(\text{शीक} \backsim \text{त्रि})}{\text{अंफलज्या}}$ । दूरस्थे ग्रहे बिम्बं लघु त्रिज्याधिकः कर्णः । अतस्तत्र फलं रहितम् । समीपे बिम्बाधिक्यं तत्र त्रिज्यातः कर्णोनता, अतस्तत्र युक्तमित्युक्तम् । तद्बिम्बं कलाद्यम् । अत आचार्योक्तं सर्वमुपपन्नम् ।

अत्र पद्ये चलाङ्कोऽन्त्यफलाङ्कः ।

[१]ग्रहौ शरांशौ लघुसायकोऽन्यदिगेकदिक्के[क्त्वे] विशिखान्तरैक्यम् ।
खगान्तरं स्यादथ चाल्पकेऽस्मिन् बिम्बार्द्धयोगादिह भेदयोगः ॥
यल्लम्बनाद्यं परिशिष्टमत्र तत्तिग्मभानोर्ग्रहवत्प्रसाध्यम् ॥५॥

[२]बाणांशतुल्यकलिकास्त्रिभयुक्तखेट-
क्रान्त्यंशकैः परिहृताः खचरे धनर्णम् ।
कृत्वा शरापमविभिन्नदिगेकदिक्के[क्त्वे]
साध्या युतिः खचरभेदयुतिं विनाऽत्र ॥६॥

[३]ग्रहान्तरे मानदलैक्यतुल्ये तदूनिते चोल्लिखभेदयुद्धे ।
मानैक्यखण्डादधिकेंऽशकार्द्धान्न्यूनेंऽशुमर्द्दाह्वययुद्धमुक्तम् ॥७॥
ग्रहान्तरे भागदलाधिकेंऽशादूनेऽपसव्याख्यमणुर्यदैकः ।
ऊनेऽधिकेंऽशादुभयोरणुत्वे युद्धं भवेत्कूटकविग्रहाख्यम् ॥८॥

---

१. एतदुत्तरार्द्धमसंबद्धं शरसंस्कारोऽप्ययुक्तः । श्लोकसंख्या चात्र स्खलिताऽस्ति ।

२. अनेनाचार्य आयनदृक्कर्मविकलाः साधयति । एतत्साधनं सूर्यसिद्धान्तानुरूपमेव । यथा—

सत्रिभग्रहजक्रान्तिभागघ्नाः क्षेपलिप्तिकाः ।
विकलाः स्वमृणं क्रान्तिक्षेपयोर्भिन्नतुल्ययोः ॥१०॥
[ सू. सि. ग्रहयुत्यधिकारे, श्लो. १० ]

अस्य वासना तत्रैव स्पष्टा ।

३. अत्र श्लोके 'चोल्लिख' इति शब्दप्रयोगश्छन्दोभङ्गभियाऽसङ्गतोऽपि स्वीकृतः । सर्वत्रोल्लेखशब्दस्यैव प्रयोगः । एते सर्वे श्लोकाः सूर्यसिद्धान्तीयग्रहयुत्यधिकारोक्त १८–२४ श्लोकानुरूपा एव । तदवगमात् स्पष्टार्थाः सन्ति ।

ऊनेऽधिकेंऽशादुभयोः पृथुत्वे समागमः स्यादथ विस्तरेण ।
आभ्यो विशेषोऽपि दिवाकराद्यैः प्रपञ्चितः प्रौढमनोरमायाम् ॥९॥

श्रीमन्नृसिंहात्मजरङ्गनाथविनिर्मिते खेचरसाधनेऽस्मिन् ।
सिद्धान्तचूडामणिनामधेये खपां[थ]योगानयनाधिकारः ॥१०॥

इति [श्रीरङ्गनाथविरचिते] सिद्धान्तचूडामणौ
ग्रहयुद्धाध्यायो दशमः ॥१०॥

---

## अथ नक्षत्रच्छायाधिकारः

[ अथ नक्षत्राणां ध्रुवशरादीनाह ]—

८ २० ३८ ५० ६३ ६७ ९३
[1]अष्टौ नखा नागगुणाः [१८ ख] खबाणास्त्रिषण्णगाङ्गानि [च] पावकाङ्काः ।

१०८ १२७ १२९ १४४
नागाभ्रसोमा नगदस्रसोमाः खगाश्विसोमा युगवेदसोमाः ॥१॥

१५५ १७० १८० १९९
बाणेषुचन्द्रा गगनाद्रिचन्द्राः खनागचन्द्रा नवनन्दचन्द्राः ।

२१३ २२४ [२२६] २४१
विश्वाश्विनः सागरदस्रदस्राः खगाश्विदस्राः क्षितिवेददस्राः ॥२॥

२५४ २६० २६७ २८०
वेदार्थदस्रा गगनाङ्गदस्राः सप्ताङ्गदस्रा गगनेभदस्राः ।

२९० ३२० ३२६ ३३७
खनन्ददस्रा गगनाश्विरामा रसाक्षिरामा नगरामरामाः ॥३॥

५९ ३६०
नन्देषुलिप्तान्वितपूर्णतर्कधनञ्जया[2] दस्रभतः क्रमेण ।

भानां ध्रुवांशा गदिताः पुराणैस्तासामथ क्षेपलवान्वदामः ॥४॥

---

१. नक्षत्राणां ध्रुवाः साम्प्रतिकसूर्यसिद्धान्ततुल्या एव सन्ति । केवलं पुष्याश्लेषारेवतीना ध्रुवाः सूर्यसिद्धान्ततो भिन्नाः । तथा चैते भोगा ध्रुवाभिमुखाः सन्ति, सिद्धान्त-शिरोमण्युक्तभोगतुल्याश्च वर्तन्ते ।

२. धनं जयति संपादति जि खच् मुम् । धनञ्जयः = अग्निः । "धनमिच्छेद् हुताशनात्" इति वचनादग्निरेव धनाधिष्ठात्री देवताऽस्ति, अतो धनञ्जयशब्देनाग्नेर्बोधो भवति । तथा चाग्निशब्देन त्रयोऽङ्का अत्र गृह्यन्ते ।

| भानि | अ | भ | कृ | रो | मृ | आ | पु | पु | श्ले | म | पू | उ | ह | चि |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ध्रुवांशाः | ८ | २१ | ३८ | ५० | ६३ | ६७ | ९३ | १०८ | १२७ | १२९ | १४४ | १५५ | १७० | १८० |
| शरांशाः | १० | १२ | ५ | ५ | १० | ११ | ६ | ० | ७ | ० | १२ | १३ | ११ | २ |
| दिशः | उ | उ | उ | द | द | द | द | उ | द | उ | उ | उ | द | द |
| भानि | स्वा | वि | अ | ज्ये | मू | पू | उ | अ | श्र | ध | श | पू | उ | रे |
| ध्रुवांशाः | १९९ | २१३ | २२४ | २२९ | २४१ | २५४ | २६० | २६७ | २८० | २९० | ३२० | ३२६ | ३३७ | ३६०/५९ |
| शरांशाः | ३७ | १ | २ | ३ | ८ | ५ | ५ | ६२ | ३ | ३६ | ० | २४ | २७ | ० |
| दिशः | उ | द | द | उ | द | द | द | उ | उ | उ | उ | उ | उ | उ |

१० १२ ५ ५ १० ११ ६ ० ७ ० १२
[1]दिक्सूर्याशुगबाणदिक्शिवरसाभ्राद्र्यभ्रसूर्याः क्रमा-
१३ ११ २ ३७ ० २ ३ ८ ५
द्विश्वे चन्द्रभुवो द्वयं नगगुणाः खाश्व्यग्निनागेषवः ।
५ ६२ ३० ३६
बाणा नेत्ररसाः खपावकमितास्तर्कानलैः सम्मिताः
० २४ २७ ०
खं वेदाक्षिमिताश्च शैलनयना [अ]भ्रं शरांशा इमे ॥५॥

[2]पितामहर्क्षाऽमृतरश्मिभर्गसार्पेनतक्षेन्द्रविशाखिकासु ।
[१६ क] वैश्यानुराधाजलकौणपेषु[3] याम्याश्च सौम्याः परिशेषभेषु[4] ॥६॥

---

१. एते नक्षत्रशरा अपि ध्रुवाभिमुखाः, साम्प्रतिकसूर्यसिद्धान्तानुसारिणश्च । केवलार्द्रा-विशाखानुराधाज्येष्ठामूलाभिजिदुत्तराभाद्रपदनक्षत्राणां शरा भिन्नाः सन्ति, सिद्धान्त-शिरोमण्युक्तशरतुल्याश्च वर्तन्ते । साम्प्रतिकसूर्यसिद्धान्ततो येषां शरदिशो भिन्नास्तानि नक्षत्राणि पुनर्वसुज्येष्ठोत्तराषाढा( अत्र बहूना मतभेदः )शततारकारेवतीपरिमितानि । भरणीनक्षत्रस्य भोगः २० श्लोके वर्तते, परं कोष्ठके भ्रमात् २१ भोगो लिखितः । स चायुक्तः ।
विशाखाशरः श्लोके ० कोष्ठके १ अस्ति । अत्र कोष्ठकस्थशरः साधुः । तथा च श्रवणशरः श्लोके ३० कोष्ठके ३ । अत्र कोष्ठकस्थशरोऽसाधुः ।

२. अत्र श्लोके याः शरदिश उक्तास्ताः कोष्ठकलिखिताद्भिन्नाः, वस्तुतः श्लोकोक्ता एवोपयुक्ता दृश्यन्ते ।

३. कुणपस्त्रिधातुकं शरीरं शवं वा भक्षयितुं शीलमस्येति कौणपः, कुणप-अण् । यद्वा कुणपो भक्ष्यत्वेनास्त्यस्य । कौणपो राक्षसः [ महाभा० आदि० १७० अ० ] अतः कौणपेन मूलर्क्षं गृह्यते ।

४. अश्विन्यादिनक्षत्राणां तारासंख्या तत्सन्निवेशस्वरूपं च श्रीपतिनोक्तम्—
वह्नित्रिऋत्विषु गुणेन्दुकृताग्निभूतबाणाश्विनेत्रशरभूकुयुगाग्निरामाः ।
रुद्राब्धिरामगुणवेदशतद्वियुग्मदन्ता बुधैर्निगदिताः क्रमशो भताराः ॥

[ अथ ब्रह्महृदादीनां ध्रुवांशानाह ]—

५६ ६१
[1]ध्रुवांशका ब्रह्महृदः षडङ्काः स्युर्ब्रह्मणश्चन्द्ररसाः कृशानोः ।
५३ ८० ८१
कृशानुबाणा घटजस्य पूर्णनागाः कुनागाः खलु लुब्धकस्य ॥७॥

---

तुरगमुखसदृक्षं योनिरूपं क्षुराभं शकटनिभमथैणस्योत्तमाङ्गेन तुल्यम् ।
मणिगृहशरचक्राभानि शालोपमं च शयनसदृशमन्यच्चात्र पर्यङ्करूपम् ॥
हस्ताकारमजस्रमौक्तिकसमं चान्यत् प्रवालोपमं
धिष्ण्यं तोरणवत् स्थितं बलिनिभं स्यात् कुण्डलाभं परम् ।
कुध्यत्केसरिविक्रमेण सदृशं शय्यासमानं परं
चान्यद्दन्तिविलासवत् स्थितमतः शृङ्गाटकव्यक्ति च ॥
त्रिविक्रमाभं च मृदङ्गरूपं वृत्तं ततोऽन्यद्यमलद्वयाभम् ।
पर्यङ्कतुल्यं मुरजानुकारमित्येवमश्व्यादिमचक्ररूपम् ॥

१. एषा ध्रुवाशाः शराशाश्च ध्रुवाभिमुखाः सन्ति, ग्रहलाघवोक्तानुरूपाश्च । यथा—
प्रजापतिब्रह्महृदग्न्यगस्त्यापावत्सलुब्धध्रुवकांशकाः स्युः ।
कुषट् षडङ्कास्त्रिशरा नभोऽष्टौ त्र्यष्टेन्दवो भूफणिनः क्रमेण ॥४॥
तेषा क्रमाद् गोशिखिनः खरामा अष्टौ रसाश्वाः शिखिनः खवेदाः ।
शराशकाः स्युर्मुनिलुब्धयोस्तु याम्यास्तु सौम्याः परिशेषकाणाम् ॥५॥
[ ग्र. ला. नक्षत्रच्छायाधिकारे, श्लो. ४–५ ]

अत्रागस्त्यस्य ध्रुवः ८० पठितः, असौ तस्योदयास्तकालविचारदृष्ट्याऽनुपयुक्तः, तेन म.म.श्रीसुधाकरद्विवेदिमहाभागैः "नभोऽष्टौ" इत्यत्र "इभाष्टौ" इति पाठान्तरं प्रकल्प्य ८८ गृहीताः । अयं पाठः साधुर्दृश्यते । सूर्यसिद्धान्तेऽगस्त्यध्रुवः ९०, ब्रह्मगुप्तसिद्धान्ते ८७, लल्लतन्त्रे ८७, सुन्दरसिद्धान्ते च ८७ इति लभ्यते । परन्तु श्रीरङ्गनाथाचार्येणागस्त्यस्य ध्रुवः ८० एव स्वीकृतः, तेन—"पलभया वसुसंगुणया" इत्यादिश्लोकेऽगस्त्यस्योदयास्तभागाः ९०, ९८ पठितास्ते च सर्वाचार्यतो भिन्नाः सन्ति । मन्य आचार्येण ग्रहलाघवीयाशुद्धपाठानुसरणं कृतमिति । कोष्ठके ग्रहपदेन रोहिणीशकटभेदकारिणो ग्रहस्य ग्रहणमाचार्यस्याभिप्रेतमिति ।

[ इदानीमेषां शरांशानाह ]

३०　　३९　　८　　७६　　४०
खवह्नयो नं[द]गुणा मतङ्गास्तर्काद्रयः खाम्बुधयः शरांशाः ।

याम्याश्च कुम्भोद्भवलुब्धयोः स्युः सौम्याः परेषां गदिताः पुराणैः ॥८॥

| व | प्र | श्र | श्र | लु | ग्रहाः | |
|---|---|---|---|---|---|---|
| ५६ | ६१ | ५३ | ८० | ८१ | ४७ | ध्रुवांशाः |
| ३० | ३९ | ८ | ७६ | ४० | २/३० | शरांशाः |
| उ | उ | उ | द | द | उ | दिशः |

[ इदानीं स्वदेशीयध्रुवसाधनादीन्याह ]—

[१]दृक्कर्मणाऽयनभवेन युता ध्रुवाः स्यु-

१२
र्बाणोत्त्नभाविगुणितोऽर्कहृतो धनर्णम् ।

प्राक्पश्चिमेऽथ विपरीतमिदं विधेयं

सौम्ये शरे हि निजदेशभवाः शराः स्युः ॥९॥

स्वदेशजा[द्] भध्रुवकाच्छराच्च प्रभादिकं खेचरवत्प्रसाध्यम् ।

ततस्त्रियामागतगम्यकालो ग्रहर्क्षयोगो ग्रहयोगवत्स्यात् ॥१०॥

---

१. अत्रोपपत्तिः । अत्र—"स्फुटेषुरक्षवलनेन हतो विभक्तो लम्बज्यया रविहृतोऽक्षभया हतो वा" इत्यादिभास्करविधिना बाणस्याशकत्वादाक्षदृक्कर्मांशाः = $\frac{\text{शरांश} \times \text{वि}}{१२}$ । परमाचार्येणात्र श्लोके—"निजदेशभवाः शराः स्युः" इत्युक्तम्, तद् गोलदृष्ट्या न युक्तमतः—"निजदेशभवा ध्रुवाः स्युः" इति पाठान्तरं साधु । तत आचार्योक्तमुपपन्नं भवति ।

[ अथ ग्रहस्य रोहिणीशकटभेदमाह ]—

यदाद्रिवेदभागः स्यात्सार्धद्व्यंशो यमाशुगः ।

तदा भिनत्ति रोहिण्याः शकटं गगनेचरः ॥११॥

[ अथ खमध्यस्थनक्षत्रदर्शनात् तत्काललग्नं रात्रिगतं चाह ]—

[1]खमध्यगर्क्षध्रुवतोऽ[तः] स्फुटं हि चरं ततो घस्रदलं ततोऽङ्गम् ।

लग्नाङ्गराश्यन्वितसूर्यमध्यगतास्त्रियामागतनाडिकाः स्युः ॥१२॥

[2]स्याद्भोदये भध्रुवतुल्यमङ्गमस्ते सषड्भध्रुवकेण तुल्यम् ।

प्राग्वत्तदा रात्रिगतं स्वदेशे तत्स्थैर्यलग्नानि बुधो विदध्यात् ॥१३॥

श्रीमन्नृसिंहात्मजरङ्गनाथविनिर्मिते खेचरसाधनेऽस्मिन् ।

सिद्धान्तचूडामणिनामधेये भा[भ]भाधिकारः समगात्समाप्तिम् ॥१४॥

इति [श्रीरङ्गनाथविरचिते] सिद्धान्त[चूडा]मणौ

नक्षत्रच्छायाधिकार [ए]कादशः ॥११॥

———

१. नक्षत्रस्य यत्कृतं दिनार्धं स एवेष्टकालः, नक्षत्रस्य खमध्यस्थितत्वात् । तस्मात् साधितं लग्नं तात्कालिकलग्नं भवति । ततः सषड्भार्कतल्लग्नान्तरनाड्यो रात्रि-घटिकाः स्युरित्युपपन्नम् ।

२. नक्षत्रोदये तद्ध्रुव एव लग्नम् । अस्तक्षितिजस्थे नक्षत्रबिम्बे तद्ध्रुवः सषड्भः प्राक्क्षितिजेऽस्तलग्नम्, ततः पूर्ववद्रात्रिगतघटिका इति स्फुटमेव ।

## अथ पाताधिकारः

३ २० १३।३० २७
[1]रामाहताऽशाशिवहृतायनांशैरूनाश्च सार्द्धाग्निभुवोऽद्रिदस्राः ।
योगे गते तत्प्रमिते क्रमेण पा[१६ ख]तौ व्यतिपातकवैधृतौ स्तः ॥१॥
६ १२
तद्योगयोः सायनभास्करेन्द्वोर्योगस्तु चक्रार्द्धकचक्रतुल्यः ।
ताभ्यां समूनाधिकलिप्तिकाभ्यो गत्यैक्यलब्धैष्यगतैर्दिनैस्तौ ॥२॥

तत्कालजान् भास्करसोमपातान्
कृत्वा शरं सायनपुष्पवन्तौ ।
सूर्याज्व[ब्ज]योः क्रान्तिकलाश्च बिम्बे
पातोद्यमं ग[गा]णितिको विदध्यात् ॥३॥

---

१. पातो नाम रविचन्द्रयोः क्रान्तिसाम्यम् । तत्र चन्द्रकान्तिः शरसंस्कृता सूर्यक्रान्त्या यदा समा स्यात् तदा पातमध्यकालः । अत्र क्रान्तिसाधनं सायनाशात् क्रियते । अतो यदा सू + अयनांश + चं + अयनांश = ६ रा, तदा व्यतिपातः । यदा सू + अयनांश + चं + अयनांश = १२ रा, तदा वैधृतिः । अतः सू + चं + २ अ = ६ रा = व्यतिपातः = सू + चं = ६ रा − २ अ । एवं वैधृतिः = सू + चं = १२ रा − २ अ । चक्रार्धतुल्ये योगे सार्धत्रयोदश योगाः । चक्रतुल्ये योगे सप्तविंशतिर्योगाः । अत्र योगे द्विगुणायनांशोत्पन्नयोगो न्यूनीकर्तव्यस्तदा वास्तविकक्रान्तिसाम्याख्यः पातयोगो भवेत् । अतोऽत्र द्विगुणायनाशोत्पन्नयोगोऽनुपातेन साध्यते । यदि चक्रांशैः (३६०) सप्तविंशतियोगाः × (२७) लभ्यन्ते तदा द्विगुणायनाशैः किमिति फलं योगः = $\frac{\text{२७} \times \text{२ अ}}{\text{३६०}} = \frac{\text{३} \times \text{अ}}{\text{२०}}$ । अनेनोनाः सार्धत्रयोदशयोगा व्यतिपातः । एवं चानेनोनाः सप्तविशतियोगा वैधृतिः । अत आचार्योक्तं "रामाहता" इत्याद्युपपन्नम् । शेषश्लोकाना वासना सिद्धान्तरीत्या सुगमा ।

१२ ६
भिन्नपादगतसूर्यचन्द्रयोर्मण्डलैक्यदलतोऽपमान्तरम् ।

यावदेव भवतीह चाल्पकं तावदेव पतनस्य संस्थितिः ॥४॥

[1]समपादस्थचन्द्रस्य त्वल्पा क्रान्तिर्यदा भवेत् ।

ओजपादस्थसूर्यस्य क्रान्तेः पातस्तदा नहि ॥५॥

ओजपादविधोः क्रान्तिरधिका क्रान्तितो रवेः ।

गतः पातोऽन्यथैष्यः स्यात्समस्थेन्दोर्विपर्ययात् ॥६॥

यदा हिमांशोरपमः 'सायकात् परिशुद्ध्यति ।

तदानीं यदभिन्नत्वं ज्ञेयं गणितकोविदैः ॥७॥

[2]सूर्येन्द्वोर्भुक्तिकलिकाः क्रान्तिखण्डान्तराहताः ।

६००
खखाङ्गभाजिताः कार्याः स्यातां क्रान्तिगती तयोः ॥८॥

---

१. सूर्यसिद्धान्तोक्तरीत्या वासना स्पष्टा ।

२. आचार्येण त्रिप्रश्नाधिकारे खण्डकैः क्रान्तिः साधिता । खण्डकानि दशभिर्दशभिरंशैः साधितानि सन्ति । अतोऽनुपातेन क्रान्तिगतिः साध्यते । यदि दशभागकलाभिर्गतगम्यक्रान्तिखण्डान्तरं लभ्यते तदा गतिकलाभिः किमिति फलं क्रान्तिगतिः = $\frac{\text{क्रा. ख. अं} \times \text{गक}}{१० \times ६०} = \frac{\text{क्रा. ख. अं} \times \text{गक}}{६००}$ । अनेन "सूर्येन्द्वोर्भुक्तिकलिकाः" इत्याद्याचार्योक्तमुपपद्यते ।

[1]तद्विक्षेपभुक्तिः स्याद्बाणखण्डान्तराद्विधोः ।
भिन्नैकायनयोर्बाणक्रान्त्योरन्तरसंयुतिः ॥९॥
क्रान्तिभुक्तिर्विधोः स्पष्टा गत्योर्योगस्तयोर्हरः ।
क्रान्त्योः साम्ये तयोः पातमध्यकालो भवेत्किल ॥१०॥

क्रान्त्यन्तरं हारहृतं विधेयं दिनादिकः स्यात्खलु मध्यकालः ।
मानैक्यखण्डाद् घटिकादितद्वत्स्थित्यर्द्धकं सन्मतिमान्विदध्यात् ॥११॥
स्थित्यर्द्धहीनं कुरु मध्यकालं प्रवेशकालं वद मध्यकालम् ।
स्थित्यर्द्धयुक्तं तु निवृत्तिकालं पाताधिकारं यदि बोबुधीषि ॥१२॥
[2]क्रान्तिसाम्यसमयः समीरितः सूर्यपर्वसदृशो मुनीश्वरैः ।
तत्र दत्तहुतजप्रपूजनं कोटिकोटिफलमाह भार्गवः ॥१३॥

---

१. आचार्येण चन्द्रग्रहणाधिकारे शरसाधनं क्रान्तिखण्डकैः क्रान्तिसाधनवच्छरखण्डकैः कृतमस्ति । अतो गतश्लोकोक्तसाधनवच्छरगतिसाधनं कार्यम् । अन्यत् स्पष्टम् । शेषपद्यानां वासना सिद्धान्तरीत्याऽवगम्या ।

२. पातस्थितिकालस्य फलं सूर्यसिद्धान्ते—

आद्यन्तकालयोर्मध्यः कालो ज्ञेयोऽतिदारुणः । प्रज्वलज्ज्वलनाकारः सर्वकर्मसु गर्हितः ॥
एकायनगतं यावदर्केन्द्वोर्मण्डलान्तरम् । संभवस्तावदेवास्य सर्वकर्मविनाशकृत् ॥
स्नानदानजपश्राद्धव्रतहोमादिकर्मभिः । प्राप्यते सुमहच्छ्रेयस्तत्कालज्ञानतस्तथा ॥
[ पाताधिकारे, श्लो. १६–१८ ]

श्रीमन्नृसिंहात्मजरङ्गनाथ[२०क]विनिर्मिते खेचरसाधनेऽस्मिन् ।
सिद्धान्तचूडामणिनामधेये पाताधिकारः समगात् समाप्तिम् ॥१४॥

इति श्रीमद्दैवज्ञनृसिंहसुतरङ्गनाथविरचिते
सिद्धान्तचूडामणौ पाताधिकारो
द्वादशः ॥१२॥

———

लघुग्रन्थरत्नप्रभावलिः–४

# पञ्चस्कन्धप्रकरणम्

## आ चा र्य व सु ब न्धु वि र चि त म्

विश्वभारतीविश्वविद्यालयप्राध्यापकेन

श्रीशान्तिभिक्षुशास्त्रिणा

भोटभाषातः संस्कृतभाषायां पुनरनूदितम्

सारस्वती सुषमा

फाल्गुनः, संवत् २०१२

# विषय-सूची



---

# आमुखम्

या प्रतीत्यसमुत्पादमयी शास्तृतनुः शुभा ।
धर्मप्रविचये पट्वी साऽविचित्तं विराजताम् ॥ १ ॥

चतुर्थशतके जातो गुप्तानां शासने सुधीः ।
वसुबन्धुर्महाप्रौढो हीने[1] महति[2] चागमे ॥ २ ॥

विज्ञानवादसिद्धान्तप्रचाराय चकार सः ।
छात्राणां चावबोधाय लघुप्रकरणत्रयम् ॥ ३ ॥

आद्यं प्रकरणं तत्र यत् पञ्चस्कन्धकाभिधम् ।
आत्मवादप्रतिपक्षं धर्मप्रविचयात्मकम् ॥ ४ ॥

तत्रैकत्वनिरासाय प्रवृत्ता स्कन्धदेशना ।
वेदकत्वनिरासाय तत्रायतनसंग्रहः ॥ ५ ॥

कारकत्वनिरासाय धातवः प्रतिपादिताः ।
नात्मास्ति तेन यश्चान्यैः कर्ता भोक्ताऽद्वयः स्मृतः ॥ ६ ॥

विश्वप्रवर्तको नैक इति हीनस्थितिः[3] किल ।
विश्वप्रवर्तका येऽत्र ते धर्मास्ते ह्यनेकधा ॥ ७ ॥

अनेकधा विभक्तानां धर्माणां पञ्च राशयः ।
पञ्चस्कन्धपदेनात्र हीने[4] धर्मे विवेचिताः ॥ ८ ॥
हीनधर्मविवेकोऽयमात्मवादनिवारकः ।
इति कृत्वा [5]महान्तोऽपि तत्र वै विहिताऽऽदराः ॥ ९ ॥

---

१. हीने = हीनयानसंबन्धिनि । २. महति = महायानसंबन्धिनि ।
३. हीनस्थितिः = हीनयाने सिद्धान्तस्य स्थितिरिति यावत् ।
४. हीने हीनयाने । ५. महान्तः = महायानानुयायिनः ।

परन्तु चित्तमात्रं हि तत्त्वं सर्वत्र दृश्यते।
चित्तस्यैव विवर्त्तोऽयं यदन्तर्यच्च बाह्यतः ॥ १० ॥
आत्मवादान्मते चास्मिन् तीर्थिकैरनुमोदितात्।
हीनाधिमुक्तिसत्त्वाना[1] धर्मवादान्मनोरमे ॥ ११ ॥
अन्तर्भवति तत्त्वेन ब्रह्मवादो जनप्रियः।
नानाप्रकारैर्दृष्टान्तैः श्रुतिभिः प्रतिपादितः ॥ १२ ॥
यच्चित्तं हि तद् ब्रह्म तस्य रूपं द्विधोच्यते।
आश्रयस्य[2] प्रवृत्तिर्या परावृत्तिश्च या तथा ॥ १३ ॥
आश्रयस्य प्रवृत्तौ हि संसारोऽयं प्रदृश्यते।
आश्रयस्य परावृत्तौ संसारोऽयं निवर्तते ॥ १४ ॥
तस्यैतस्य हि चित्तस्य परिणामा यथायथम्।
विज्ञप्तिमात्रतासिद्धौ त्रिंशिकाया निरूपिताः ॥ १५ ॥
चित्तादन्यन्न वै किञ्चित् तत्त्वमस्तीति दर्शितम्।
विज्ञप्तिमात्रतासिद्धौ विंशिकाया यथानयम् ॥ १६ ॥
एवं प्रकरणान्यत्र त्रीणि सन्ति विवेकिनाम्।
पञ्चस्कन्धकं नाम त्रिंशिका विंशिका तथा ॥ १७ ॥
तत्रान्त्यद्वयं लब्धं सिल्वाँलेवीसुसंस्कृतम्।
पञ्चस्कन्धकं नाम प्रथमं तु न लभ्यते ॥ १८ ॥
नाम्ना चैतत्प्रकरणं कोशेऽभिव्याख्यमुच्यते।
ग्रन्थोऽस्ति पूर्णतः किन्तु चीनभोटानुवादयोः ॥ १९ ॥
अनुवादाश्रयः शान्तिभिक्षुः संप्रत्यनूक्तवान्।
पञ्चस्कन्धकं नाम्ना वसुबन्धुकृति शुभाम् ॥ २० ॥
तदस्याः सुधियः सर्वे स्वाध्यायेन कृपालवः।
श्रमं सुखान्तं मे कृत्वा भवन्तु कुशले रताः ॥ २१ ॥

---

१. हीनाधिमुक्तिसत्त्वानाम् = हीनयानमते विश्वासिनाम्।

२. आश्रयस्य = आलयविज्ञानस्य।

# पञ्चस्कन्धप्रकरणम्

## आ चा र्य व सु ब न्धु वि र चि त म्

### प्रथमाधिकारः

### स्क न्धो दे श नि र्दे श कः

पञ्च स्कन्धाः

पञ्च स्कन्धाः । रूपस्कन्धः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धः, विज्ञानस्कन्धश्च ॥ १ ॥

रूपस्य द्वौ भेदौ

रूपं कतमत् । यत् किञ्चिद्रूपं सर्वं तच्चत्वारि महाभूतानि, चत्वारि च महाभूतान्युपादाय ॥ २ ॥

महाभूतनामानि

कतमानि चत्वारि महाभूतानि । पृथिवीधातुः, अब्धातुः, तेजोधातुः, वायुधातुश्च ॥ ३ ॥

महाभूतलक्षणानि

तत्र पृथिवीधातुः कतमः । कठिनता ॥४॥ अब्धातुः कतमः । निष्यन्दता ॥५॥ तेजोधातुः कतमः । उष्णता ॥ ६ ॥ वायुधातुः कतमः । पौनःपुन्यकम्पनता ॥७॥

उपादायरूपनामानि

उपादायरूपं कतमत्। चक्षुरिन्द्रियम्, श्रोत्रेन्द्रियम्, घ्राणेन्द्रियम्, जिह्वेन्द्रियम्, कायेन्द्रियम्, रूपम्, शब्दः, गन्धः, रसः, स्प्रष्टव्यैकदेशः, अविज्ञप्तिश्च ॥ ८ ॥

उपादायरूपलक्षणानि

चक्षुरिन्द्रियं कतमत्। वर्णविषयो रूपप्रसादः ॥ ९ ॥ श्रोत्रेन्द्रियं कतमत्। शब्दविषयो रूपप्रसादः ॥१०॥ घ्राणेन्द्रियं कतमत्। गन्धविषयो रूपप्रसादः ॥११॥ जिह्वेन्द्रियं कतमत्। रसविषयो रूपप्रसादः ॥१२॥ कायेन्द्रियं कतमत्। स्प्रष्टव्यविषयो रूपप्रसादः ॥ १३ ॥ रूपं कतमत्। चक्षुर्गोचरः। वर्णः, संस्थानम्, विज्ञप्तिश्च ॥१४॥ शब्दः कतमः। श्रोत्रगोचरः। निष्पन्नः, अनिष्पन्नः, उभयः। उपात्त-चतुर्महाभूतहेतुकः, अनुपात्तचतुर्महाभूतहेतुकः, उभयचतुर्महाभूतहेतुकश्च ॥ १५ ॥ गन्धः कतमः। घ्राणगोचरः। सुरभिः, असुरभिः, तदन्यश्च ॥ १६ ॥ रसः कतमः। जिह्वागोचरः। मधुरः, अम्लः, लवणः, कटुः, तिक्तः कषायश्च ॥ १७ ॥ स्प्रष्टव्यैकदेशः कतमः। कायगोचरः। महाभूतान्युपादाय श्लक्ष्णत्वम्, कर्कशत्वम्, गुरुत्वम्, लघुत्वम्, शीतत्वम्, जिघत्सा, पिपासा च ॥ १८॥ अविज्ञप्तिरूपं कतमत्। विज्ञप्तिसमाधिसंभूतं रूपम्, अनिदर्शनम्, अप्रतिघम् ॥ १९ ॥

रूपस्कन्धः सोद्देशनिर्देशः परिनिष्ठितः ॥

अथ वेदना सलक्षणप्रभेदा

वेदना कतमा। त्रिविधोऽनुभवः। सुखः, दुःखः, अदुःखासुखश्च ॥ २० ॥ सुखो यस्मिन् निरुद्धे संयोगेच्छा जायते ॥ २१ ॥ दुःखो यस्मिन्नुत्पन्ने वियोगेच्छा जायते ॥ २२ ॥ अदुःखासुखो यस्मिन्नुत्पन्ने नोभयेच्छा जायते ॥ २३ ॥

वेदनास्कन्धः सोद्देशनिर्देशः परिनिष्ठितः ॥

अथ संज्ञा सलक्षणप्रभेदा

संज्ञा कतमा। विषयनिमित्तोद्ग्रहणम् ॥ २४ ॥ सा त्रिधा। परित्ता महद्गता, अप्रमाणा च ॥ २५ ॥

संज्ञास्कन्धः सोद्देशनिर्देशः परिनिष्ठितः ॥

संस्काराणां द्वौ भेदौ

संस्काराः कतमे । वेदनासंज्ञाभ्यामन्ये चैत्ताः, चित्तविप्रयुक्ताश्च ॥ २६ ॥

चैत्तलक्षणम्

तत्र चैत्तधर्माः कतमे । ये धर्माश्चित्तेन संप्रयुक्ताः ॥ २७ ॥

चैत्तपरिसंख्यानम्

ते कतमे । स्पर्शः, मनस्कारः, वेदना, संज्ञा, चेतना, छन्दः, अधिमोक्षः स्मृतिः, समाधिः, प्रज्ञा, श्रद्धा, ह्रीः, अपत्रपा, अलोभः कुशलमूलम्, अद्वेषः कुशलमूलम्, अमोहः कुशलमूलम्, वीर्यम्, प्रश्रब्धिः, अप्रमादः, उपेक्षा, अविहिंसा, रागः, प्रतिघः, मानः, अविद्या, दृष्टिः, विचिकित्सा, क्रोधः, उपनाहः, म्रक्षः, प्रदाशः, ईर्ष्या, मात्सर्यम्, माया, शाठ्यम्, मदः, विहिंसा, आह्रीक्यम्, अनपत्राप्यम्, स्त्यानम्, औद्धत्यम्, आश्रद्ध्यम्, कौसीद्यम्, प्रमादः, मुषितास्मृतिः, विक्षेपः, असंप्रजन्यम्, कौकृत्यम्, मिद्धम्, वितर्कः, विचारश्च ॥ २८ ॥

एतेषां पञ्च सर्वत्रगाः । पञ्च प्रतिनियतविषयाः । एकादश कुशलाः । षट् क्लेशाः । शिष्टा उपक्लेशाः । चत्वारोऽन्यत्रापि भवन्तीत्यनियताः ॥ २९ ॥

चैत्तलक्षणानि

स्पर्शः कतमः । त्रिकसंनिपाते इन्द्रियविकारपरिच्छेदः ॥ ३० ॥

मनस्कारः कतमः । चेतस आभोगः ॥ ३१ ॥

चेतना कतमा । गुणदोषानुभयेषु चित्ताभिसंस्कारो मनस्कर्म ॥ ३२ ॥

छन्दः कतमः । अभिप्रेते वस्तुन्यभिलाषः ॥ ३३ ॥

अधिमोक्षः कतमः । निश्चिते वस्तुनि तथैवावधारणम् ॥ ३४ ॥

स्मृतिः कतमा । संस्तुते वस्तुन्यसंप्रमोषः ॥ ३५ ॥

समाधिः कतमः । उपपरीक्ष्ये वस्तुनि चित्तस्यैकाग्रता ॥ ३६ ॥

प्रज्ञा कतमा । तत्रैव प्रविचयो योगायोगविहितोऽन्यथा च ॥ ३७ ॥

श्रद्धा कतमा । कर्मफलसत्यरत्नेष्वभिसंप्रत्ययः । चेतसोऽभिलाषः । चेतसः प्रसादः ॥ ३८ ॥

ह्रीः कतमा। आत्मानं धर्मं वाधिपतिं कृत्वा स्वयमवद्येन लज्जा॥ ३६॥

अपत्रपा कतमा। लोकमधिपतिं कृत्वा परतोऽवद्येन लज्जा॥ ४०॥

अलोभः कतमः। लोभप्रतिपक्षः। चेतसो दानक्षेत्रापरिग्रहः॥ ४१॥

अद्वेषः कतमः। द्वेषप्रतिपक्षः। मैत्री॥ ४२॥

अमोहः कतमः। मोहप्रतिपक्षः। यथाभूतसंप्रतिपत्तिः॥ ४३॥

वीर्यं कतमत्। कौसीद्यप्रतिपक्षः। कुशले चेतसोऽभ्युत्साहः॥ ४४॥

प्रश्रब्धिः कतमा। दौष्ठूल्यप्रतिपक्षः। कायचित्तकर्मण्यता॥४५॥

अप्रमादः कतमः। प्रमादप्रतिपक्षः। अलोभादीन् वीर्यान्तान् निश्रित्य अकुशलानां धर्माणां प्रहाणम्। तत्प्रतिपक्षाणां कुशलानां धर्माणां भावना॥ ४६॥

उपेक्षा कतमा। अलोभादीन् वीर्यान्तान् निश्रित्य चित्तसमता। चित्त-प्रशठता। चित्तानाभोगता। यया क्लिष्टधर्मानवकाशेनाऽक्लिष्टेषु स्थितिः॥ ४७॥

अविहिंसा कतमा। विहिंसाप्रतिपक्षः। करुणा॥ ४८॥

रागः कतमः। उपादानस्कन्धेष्वभ्यर्थना। अध्यवसानम्॥ ४६॥

प्रतिघः कतमः। सत्त्वेष्वाघातचित्तता॥५०॥

मानः कतमः। मानः सप्तविधः। अतिमानः, मानातिमानः, अस्मिमान', अभिमानः, ऊनमानः, मिथ्यामानश्च॥ ५१॥

मानः कतमः। हीनात् श्रेयानहमस्मि, सदृशेन वा सदृशोऽस्मीति चिन्तयतो या चित्तस्योन्नतिः॥ ५२॥

अतिमानः कतमः। सदृशात् श्रेयानहमस्मि, श्रेयसा वा सदृशोऽस्मीति चिन्तयतो या चित्तस्योन्नतिः॥ ५३॥

मानातिमान. कतमः। श्रेयसोऽहमेव श्रेयानिति चिन्तयतो या चित्तस्योन्नतिः॥ ५४॥

अस्मिमानः कतमः। पञ्चसूपादानस्कन्धेष्वात्मानमात्मीयं वा पश्यतो या चित्तस्योन्नतिः॥ ५५॥

अभिमानः कतमः। अप्राप्त उत्तरे विशेषाधिगमे प्राप्तो मयेति चिन्तयतो या चित्तस्योन्नतिः॥ ५६॥

ऊनमानः कतमः। बह्वन्तरविशिष्टादल्पान्तरहीनोऽस्मीति चिन्तयतो या चित्तस्योन्नतिः॥ ५७॥

मिथ्यामानः कतमः। अगुणवतो गुणवानहमस्मीति चिन्तयतो या चित्तस्योन्नतिः ॥ ५८ ॥

अविद्या कतमा। कर्मफलसत्यरत्नानामज्ञानम्। सा पुनः सहजा परि-
ल्पिता च ॥ ५९ ॥

संज्ञ रागचरितस्य रागप्रतिघयोः, रागचरितस्याविद्यायाश्चेत्यकुशलानां त्रीणि
मू॰ नि। लोभोऽकुशलमूलम्, द्वेषोऽकुशलमूलम्, मोहोऽकुशलमूलं च ॥ ६० ॥

दृष्टिः कतमा। पञ्च दृष्टयः—सत्कायदृष्टिः, अन्तग्राहदृष्टिः, मिथ्यादृष्टिः, दृष्टिपरामर्शः, शीलव्रतपरामर्शश्च ॥ ६१ ॥

सत्कायदृष्टिः कतमा। पञ्चोपादानस्कन्धानात्मत आत्मीयतो वा पश्यतो या क्लिष्टा प्रज्ञा ॥ ६२ ॥

अन्तग्राहदृष्टिः कतमा। तानेवाधिपतिं कृत्वा शाश्वतत उच्छेदतो वा पश्यतो या क्लिष्टा प्रज्ञा ॥ ६३ ॥

मिथ्यादृष्टिः कतमा। हेतुं वा फलं वा क्रियां वापवदतः सद्वा वस्तु विनाशयतो या क्लिष्टा प्रज्ञा ॥ ६४ ॥

दृष्टिपरामर्शः कतमः। ता एव तिस्रो दृष्टीस्तदाश्रयांश्च स्कन्धान् श्रेष्ठतः परमतश्च पश्यतो या क्लिष्टा प्रज्ञा ॥ ६५ ॥

शीलव्रतपरामर्शः कतमः। शीलं व्रतं तदाश्रयांश्च स्कन्धान् शुद्धितो मुक्तितो नैर्याणिकतश्च पश्यतो या क्लिष्टा प्रज्ञा ॥ ६६ ॥

विचिकित्सा कतमा। सत्यादिषु या द्विकोटिका मतिः ॥ ६७ ॥

एतेषां क्लेशानां पश्चिमास्तिस्रो दृष्टयः, विचिकित्सा च परिकल्पिताः। शिष्टाः सहजाः परिकल्पिताश्च ॥ ६८ ॥

क्रोधः कतमः। वर्तमानमपकारमागम्य या चेतस आघातचेतना ॥ ६९ ॥

उपनाहः कतमः। वैरानुबन्धः ॥ ७० ॥

म्रक्षः कतमः। आत्मनोऽवद्यप्रच्छादना ॥ ७१ ॥

प्रदाशः कतमः। चण्डवचोदाशिता ॥ ७२ ॥

ईर्ष्या कतमा। परसंपत्तौ चेतसो व्यारोषः ॥ ७३ ॥

मात्सर्यं कतमत्। दानविरोधी चेतस आग्रहः ॥ ७४ ॥

माया कतमा। परवञ्चनाभूतार्थसंदर्शनता ॥ ७५ ॥

शाठ्यं कतमत्। स्वदोषप्रच्छादनोपायसंगृहीतं चेतसः कौटिल्यम् ॥ ७६ ॥

मदः कतमः। स्वसंपत्तौ रक्तस्योद्धर्षः। चेतसः पर्यादानम् ॥ ७७ ॥

विहिंसा कतमा। सत्त्वेषु विहेठना ॥ ७८ ॥

आह्रीक्यं कतमत्। अवद्येन स्वयमलज्जा ॥ ७९ ॥

अनपत्राप्यं कतमत्। अवद्येन परतोऽलज्जा ॥ ८० ॥

स्त्यानं कतमत्। चित्ताकर्मण्यता। स्तैमित्यम् ॥ ८१ ॥

औद्धत्यं कतमत्। चित्तस्याव्युपशमः ॥ ८२ ॥

आश्रद्ध्यं कतमत्। कर्मफलसत्यरत्नेष्वनभिसंप्रत्ययः। श्रद्धाविपक्षश्चेतसोऽप्रसादः ॥ ८३ ॥

कौसीद्यं कतमत्। कुशले चेतसोऽनभ्युत्साहो वीर्यविपक्षः ॥ ८४ ॥

प्रमादः कतमः। या लोभद्वेषमोहकौसीद्यैश्चित्तस्यानारक्षा कुशलस्याभावना ॥ ८५ ॥

मुषितास्मृतिः कतमा। क्लिष्टा स्मृतिः। कुशलप्रतिपत्तिः ॥८६॥

विक्षेपः कतमः। रागद्वेषमोहांशिकः पञ्चकामगुणेषु चित्तस्य विसारः ॥८७॥

असंप्रजन्यं कतमत्। क्लेशसंप्रयुक्ता प्रज्ञा, तया कायवाक्चित्तचर्या असंविदितेव प्रवर्तते ॥ ८८ ॥

कौकृत्यं कतमत्। चेतसो विप्रतिसारः ॥ ८९ ॥

मिद्धं कतमत्। अस्वतन्त्रवृत्तिचेतसोऽभिसंक्षेपः ॥ ९० ॥

वितर्कः कतमः। पर्येषको मनोजल्पः, चेतनाप्रज्ञाविशेषः, या चित्तस्यौदारिकता ॥ ९१ ॥

विचारः कतमः। पर्येषको मनोजल्पः, तथैव या चित्तस्य सूक्ष्मता ॥ ९२ ॥

## चित्तविप्रयुक्तपरिसंख्यानम्

चित्तविप्रयुक्तसंस्काराः कतमे। ये रूपचित्तचैत्ताधिकारे प्रज्ञप्ताः, त एवान्यत्राप्रज्ञप्ताः ॥ ९३ ॥

ते कतमे। प्राप्तिः, असंज्ञिसमापत्तिः, निरोधसमापत्तिः, आसंज्ञिकम्, जीवितेन्द्रियम्, निकायसभागता, जातिः, जरा, स्थितिः, अनित्यता, नामकायः, पदकायः, व्यञ्जनकायः, पृथग्जनत्वमित्येवमादिभेदसमादानाः ॥ ९४ ॥

चित्तविप्रयुक्तलक्षणानि

तत्र प्राप्तिः कतमा। प्रतिलम्भः समन्वागमश्च। बीजम्, वशिता, अभिमुखीभावश्च यथायोगम्॥ ९५॥

असंज्ञिसमापत्तिः कतमा। शुभकृत्स्नवीतरागस्योपर्यवीतरागस्य निःसरणसंज्ञापूर्वकेण मनसिकारेणास्थावराणां चित्तचैत्तधर्माणां यो निरोधः॥ ९६॥

निरोधसमापत्तिः कतमा। आकिञ्चन्यायतनवीतरागस्य भवाग्रादुच्चलितस्य शान्तविहारसंज्ञापूर्वकेण मनसिकारेणास्थावराणां चित्तचैत्तधर्माणां तदेकत्यानां च स्थावराणां यो निरोधः॥ ९७॥

आसंज्ञिकं कतमत्। असंज्ञिसत्त्वनिकायदेवेषूपपन्नस्यास्थावराणां चित्तचैत्तधर्माणां निरोधः॥ ९८॥

जीवितेन्द्रियं कतमत्। निकायसभागेषु पूर्वकर्मानुविद्धेषु यः संस्काराणां स्थितिकालनियमः॥ ९९॥

निकायसभागः कतमः। या सत्त्वानामात्मभावसदृशता॥ १००॥

जातिः कतमा। निकायसभागे संस्काराणामभूत्वा यो भावः॥ १०१॥

जरा कतमा। तथा तेषां प्रबन्धान्यथात्वम्॥ १०२॥

स्थितिः कतमा। तथा तेषां प्रबन्धान्वयः॥ १०३॥

अनित्यता कतमा। तथा तेषां प्रबन्धविनाशः॥ १०४॥

नामकायः कतमः। धर्माणां स्वभावाधिवचनम्॥ १०५॥

पदकायः कतमः। धर्माणां विशेषाधिवचनम्॥ १०६॥

व्यञ्जनकायः कतमः। अक्षराणि। तदुभयाभिव्यञ्जनतामुपादाय॥ १०७॥

वाक्यानि तानि। नामपदाश्रयेणार्थवचनतामुपादाय॥ १०८॥

अक्षरं पुनः पर्यायाक्षरणतामुपादाय॥ १०९॥

पृथग्जनत्वं कतमत्। आर्यधर्माणामप्रतिलम्भः॥ ११०॥

इति संस्कारस्कन्धो नाम॥ १११॥

संस्कारस्कन्धः सोद्देशनिर्देशः परिनिष्ठितः॥

विज्ञानलक्षणम्

विज्ञानं कतमत्। आलम्बनविज्ञप्तिः॥ ११२॥

चित्तमनसी विज्ञानपर्यायौ सनिर्वचनौ तच्चित्तं मनोऽपि। चित्रीकारतां मनोनिश्रयतां च उपादाय ॥११३॥

सलक्षणचित्तनिर्देशः

मूलचित्तमालयविज्ञानं तद्यथेदं सर्वसंस्काराणां संचितं बीजम् ॥११४॥

तत्पुनरालम्बनमव्युपच्छिन्नमेकसन्तानवर्ति। यथा—निरोधसमापत्त्यसंज्ञिसमापत्त्यासंज्ञिकेभ्यो व्युत्थितस्यास्माद् विषयविज्ञप्तिकं नाम प्रवृत्तिविज्ञानं जायते। आलम्बनप्रत्ययमपेक्ष्य भिन्नाकारेषु वृत्तितामुच्छिद्य पुनर्जाततां संसारे प्रवृत्तिनिवृत्तितां चोपादाय तदालम्बनं नाम विज्ञानम् ॥११५॥

आलयविज्ञान हि सर्वबीजालयतामात्मभावालयहेतुतामात्मभावे स्थितितां चोपादाय ॥११६॥

आदानविज्ञानमपि तत्। आत्मभावादानतामुपादाय ॥११७॥

सलक्षणमनोनिर्देशः

मूलमन आलयविज्ञानमाश्रित्य नित्यमात्ममोहात्मदृष्ट्यात्ममानात्मस्नेहैः संप्रयुक्तं विज्ञानमेकजातीयसंतानवर्ति अर्हत्त्वार्यमार्गनिरोधसमापत्तिकाले व्यावर्तते ॥११८॥

विज्ञानस्कन्धः सोद्देशनिर्देशः परिनिष्ठितः ॥

स्कन्धनिर्वचनम्

किमर्थः स्कन्धः। राश्यर्थः। कालगोत्राकारगतिविषयभिन्नानां रूपादीनामभिसंक्षेपतामुपादाय ॥११९॥

स्कन्धोद्देशनिर्देशकः प्रथमाधिकारः परिनिष्ठितः ॥१॥

———

## द्वितीयाधिकारः

### आ य त नो द्दे श नि र्दे श कः

आयतननामानि

द्वादशायतनानि। चक्षुरायतनम्, रूपायतनम्, श्रोत्रायतनम्, शब्दायतनम्, घ्राणायतनम्, गन्धायतनम्, जिह्वायतनम्, रसायतनम्, कायायतनम्, स्प्रष्टव्यायतनम्, मनआयतनम्, धर्मायतनं च ॥ १२० ॥

आयतनानां सलक्षणप्रपञ्चः

चक्षुरादीनि रूपशब्दगन्धरसायतनानि यथोक्तपूर्वाणि ॥ १२१ ॥

स्प्रष्टव्यायतनं चत्वारि महाभूतानि, उक्तश्च यः स्प्रष्टव्यैकदेशः ॥ १२२ ॥

मनआयतनं यो विज्ञानस्कन्धः ॥ १२३ ॥

धर्मायतनं वेदना, संज्ञा, संस्काराः, अविज्ञप्तिः, असंस्कृताश्च ॥ १२४ ॥

असंस्कृताः सलक्षणप्रभेदाः

असंस्कृताः कतमे। आकाशम्, अप्रतिसंख्यानिरोधः, प्रतिसंख्यानिरोधः, तथता च ॥ १२५ ॥

तत्राकाशं कतमत्। रूपावकाशः ॥ १२६ ॥

अप्रतिसंख्यानिरोधः कतमः। यो निरोधो न विसंयोगः ॥ १२७ ॥

स क्लेशाऽप्रतिपक्षेण स्कन्धानामात्यन्तिको निरोधः ॥ १२८ ॥

प्रतिसंख्यानिरोधः कतमः। यो निरोधो विसंयोगः ॥ १२९ ॥

स क्लेशप्रतिपक्षेण स्कन्धानामात्यन्तिको निरोधः ॥ १३० ॥

तथता कतमा। या धर्माणां धर्मता। धर्मनैरात्म्यम् ॥ १३१ ॥

आयतननिर्वचनम्

किमुपादायायतनमिति। विज्ञानोत्पादद्वारतामुपादाय ॥ १३२ ॥

आयतनोद्देशनिर्देशको द्वितीयाधिकारः परिनिष्ठितः ॥ २ ॥

---

## तृतीयाधिकारः

## धा तू दे श नि र्दे श कः

धातुनामानि

अष्टादश धातवः। चक्षुर्धातुः, रूपधातुः, चक्षुर्विज्ञानधातुः, श्रोत्रधातुः, शब्दधातुः, श्रोत्रविज्ञानधातुः, घ्राणधातुः, गन्धधातुः, घ्राणविज्ञानधातुः, जिह्वाधातुः, रसधातुः, जिह्वाविज्ञानधातुः, कायधातुः, स्प्रष्टव्यधातुः, कायविज्ञानधातुः, मनोधातुः, धर्मधातुः, मनोविज्ञानधातुश्च ॥ १३३ ॥

धातुप्रपञ्चः

चक्षुरादयो धातवो रूपादयो धातवश्च यथायतनानि ॥ १३४ ॥

षड् विज्ञानधातवश्चक्षुराद्याश्रया रूपाद्यालम्बना विज्ञप्तयः ॥ १३५ ॥

मनोधातुस्तेषामेव समनन्तरनिरुद्धं षड्विज्ञानदेशनाश्रयतामुपादाय॥१३६॥

धातुव्यवस्थानम्

एवमष्टादशधातुव्यवस्थानम्। यो रूपस्कन्धस्तानि दशायतनधातवः॥१३७॥

धर्मायतनं धर्मधात्वेकदेशः॥ १३८ ॥

यो विज्ञानस्कन्धस्तन्मनआयतनम्, सप्त मनोधातवश्च ॥ १३९ ॥

अन्ये ये त्रयः स्कन्धा रूपधात्वेकदेशश्च, तेऽसंस्कृतैः सहिता धर्मायतनं धर्मधातुश्च ॥ १४० ॥

धातुनिर्वचनम्

किमुपादाय धातव इति। आकरकात्मलक्षणधारणतामुपादाय ॥ १४१ ॥

स्कन्धायतनधातुक्रमेण धर्मदेशनायाः प्रयोजनम्

किमर्थं स्कन्धादिक्रमेण देशना। त्रिविधात्मग्राहप्रतिपक्षेणायं क्रमः॥ १४२॥

आत्मग्राहस्त्रिविधः। एकात्मग्राहः, वेदकात्मग्राहः, कारकात्मग्राहश्च॥१४३॥

अष्टादशधातुविकल्पाः

अष्टादशधातुषु कति रूपिणः। ये रूपस्कन्धस्वभावाः॥ १४४॥

कत्यरूपिणः। शिष्टाः ॥ १४५ ॥

कति सनिदर्शनाः । रूपधातुरेकः सनिदर्शनविषयः ॥ १४६ ॥

कत्यनिदर्शनाः । शिष्टाः ॥ १४७ ॥

कति सप्रतिघाः । दश रूपिणः । यत्र यत्प्रतिघातस्तत्र तत् सप्रतिघम् ॥ १४८ ॥

कत्यप्रतिघाः । शिष्टाः ॥ १४९ ॥

कति सास्रवाः । पञ्चदश पश्चिमानां त्रयाणामेकदेशश्च । ते क्लेशोत्पादप्रत्यक्षचर्याविषयतामुपादाय ॥ १५० ॥

कत्यनास्रवाः । पश्चिमानां त्रयाणामेकदेशः ॥ १५१ ॥

कति कामप्रतिसंयुक्ताः । सर्वे ॥ १५२ ॥

कति रूपप्रतिसंयुक्ताः । चतुर्दश स्थापयित्वा गन्धरसघ्राणजिह्वाविज्ञानधातून् ॥ १५३ ॥

कत्यारूप्यसंप्रयुक्ताः । पश्चिमास्त्रयः ॥ १५४ ॥

कत्यप्रतिसंयुक्ताः । त्रयाणामेकदेशः ॥ १५५ ॥

कति स्कन्धसंगृहीताः । असंस्कृतान् स्थापयित्वा ॥ १५६ ॥

कत्युपादानस्कन्धसंगृहीताः । ये सास्रवाः ॥ १५७ ॥

कति कुशलाकुशलाव्याकृताः । दश त्रिविधाः । सप्त मनोधातवः, रूपशब्दधर्मधातवश्च । शिष्टा अव्याकृताः ॥ १५८ ॥

कत्याध्यात्मिकाः । द्वादश । स्थापयित्वा रूपशब्दगन्धरसस्प्रष्टव्यधर्मधातून् ॥ १५९ ॥

कति बाह्याः । षट् । ये स्थापिताः ॥ १६० ॥

कति सालम्बनाः । सप्त चित्तधातवः, धर्मधात्वेकदेशोऽपि यश्चैत्तः ॥१६१॥

कत्यनालम्बनाः । शिष्टा दश, धर्मधात्वेकदेशश्च ॥ १६२ ॥

कति सवितर्काः । मनोधातुः, मनोविज्ञानधातुः, धर्मधात्वेकदेशश्च ॥१६३॥

कति निष्पन्नाः । पञ्चाध्यात्मिकाः । चतुर्णामेकदेशः ॥ १६४ ॥

कत्यनिष्पन्नाः । शिष्टा दश, चतुर्णामेकदेशश्च ॥ १६५ ॥

कति सभागाः । आध्यात्मिकाः पञ्च रूपिणः । स्वविज्ञानसहितविषयसदृशतामुपादाय ॥ १६६ ॥

कति तत्सभागाः। त एव स्वविज्ञानविरहितस्वान्वयसदृशतामुपादाय ॥ १६७ ॥

धातूद्देशनिर्देशकस्तृतीयाधिकारः परिनिष्ठितः ॥ ३ ॥

आचार्यवसुबन्धुविरचितं पञ्चस्कन्धप्रकरणं समाप्तम् ॥

पञ्चस्कन्धप्रकरणं शास्त्रिणा शान्तिभिक्षुणा।
भोटानुवादमागम्य संस्कृते पुनरुद्धृतम् ॥
यदत्र सुकृतं सर्वं तदाचार्यस्य धीमतः।
यत् कुकृतं तदागो मे क्षन्तव्यं साधुसूरिभिः ॥

———

# सारस्वती सुषमा

## राजकीयसंस्कृतमहाविद्यालयपत्रिका

### दशवार्षिकी विषयानुक्रमणिका

## दशवार्षिकी विषयानुक्रमणिका

## दशवार्षिकी विषयानुक्रमणिका

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयपत्रिका

### दशवार्षिकी लेखकानुक्रमणिका

## दशवार्षिकी लेखकानुक्रमणिका

## दशवार्षिकी लेखकानुक्रमणिका

## दशवार्षिकी लेखकानुक्रमणिका

## दशवार्षिकी लेखकानुक्रमणिका

## दशवार्षिकी लेखकानुक्रमणिका

# दशवार्षिकी लेखकानुक्रमणिका



---

## चयनिका



## सम्पादकीयम्



## समालोचनम्



## ग्रन्थाः

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रमार्गफाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेरुद्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां सरस्वतीभवनस्य काशिकराजकीयसंस्कृतमहाविद्यालयस्य च विदुषामन्येषां च लेखकानां मौलिकविचारपूर्णा अनुसन्धानप्रधाना अन्य-विधाश्चोपयोगिनो निबन्धाः प्रकाश्यन्ते ।

५. उपर्युक्तप्रकारा एव निबन्धाः प्रकाशनार्थं प्रेषणीयाः ।

६. फुलस्केपपरिमितेषु पत्रेष्वेकस्मिन् पार्श्व एव पर्याप्तं रिक्तं स्थानं (मार्जिन) दत्त्वा सुस्पष्टं शोभनाक्षरैर्लिखिता निबन्धा ग्राह्या भविष्यन्ति ।

७, निबन्धे संशोधनाधिकारः सम्पादकायत्तः ।

८ अस्वीकृता निबन्धाः प्रत्यावर्तनव्ययप्राप्तौ सत्यामेव परावर्तिताः स्युः ।

९. लेखकैः प्रकाशितनिबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः ।

१०. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्गलग्रन्थानां समालोचना प्रकाश्यते ।

११ लेखकैः प्रकाशकैश्च समालोचनार्थं सम्पादकपार्श्वे ग्रन्थस्य द्वे प्रती प्रेषणीये ।

१२. अस्या वार्षिकं मूल्यं सार्द्धसप्तरूप्यकाणि, प्रत्यङ्कं चाणकद्वयन्यूनं रूप्यक-द्वयं वर्तते ।

१३. पत्रिकायाश्चतुर्थपञ्चमषष्ठवर्षीया अङ्का अर्धमूल्येन प्राप्तुं शक्यन्ते ।

१४. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः-"सम्पादक, सारस्वती सुषमा, राजकीयसंस्कृतमहाविद्यालय, वाराणसी-२" इति संकेतेन विधेयः ।

---

प्रकाशकः—अधीक्षक, राजकीयमुद्रणालय, इलाहाबाद ।

मुद्रकः—अमलकुमार वसु, इण्डियन प्रेस (प्राइवेट) लिमिटेड, वाराणसी शाखा ।